महर्षिश्रीवेदव्यासप्रणीतम्-

# ॥ विष्णुपुराणम् ॥



सङ्कलन : मोहन प्रसाद सापकोटा
भाषा : संस्कृत

(sapkotamps731@gmail.com)

# अथ विष्णुपुराणान्तर्गताध्यायविषयानुक्रमः ।

**इति विषयानुक्रमः**

## ॥ श्री गणेशाय नमः ॥
## ॥ ॐ तत्सद्ब्रह्मणे नमः ॥
## ॥ अथ महर्षिश्रीवेदव्यासप्रणीतं विष्णुपुराणम् ॥
## ॥ ॐ नमो भगवते वासुदेवाय ॥
## ॥ प्रथम अंश ॥

ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

### ॥ अथ प्रथमोऽध्यायः ॥
### (मङ्गलाचरणम्, पराशरं प्रति मैत्रेयस्य प्रश्नः, पराशरस्योत्तरदानञ्च)

सूत उवाच

(जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥
सदक्षरं ब्रह्म य ईश्वरः पुमान् गुणोर्म्मिसृष्टिकालसंलयः ।
प्रधानबुद्ध्यादि जगत्प्रपञ्च सूः स नोऽस्तु विष्णुर्मतिभूति मुक्तिदः ॥
प्रणम्य विष्णुं विश्वेशं ब्रह्मादीन् प्रणिपत्य च ।
गुरुं प्रणम्य वक्ष्यामि पुराणं वेदसम्मितम् ॥
इतिहासपुराणज्ञं वेदवेदाङ्गपारगम् ।
धर्मशास्त्रादितत्त्वज्ञं वसिष्ठतनयात्मजम् ॥)
पराशरं मुनिवरं कृतपौर्वाह्णिकक्रियम् ।
मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य च ॥१॥

मैत्रेय उवाच

त्वत्तो हि वेदाध्ययनमधीतमखिलं गुरो ।
धर्मशास्त्राणि सर्वाणि तथाङ्गानि यथाक्रमम् ॥२॥
त्वत्प्रसादान्मुनिश्रेष्ठ मामन्ये नाकृतश्रमम् ।
वक्ष्यन्ते सर्वशास्त्रेषु प्रायशो येऽपि विद्विषः ॥३॥
सोऽहमिच्छामि धर्म्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग भविष्यति ॥४॥

यन्मयञ्च जगद् ब्रह्मन् यतश्चैतच्चराचरम् ।
लीनमासीद् यथा यत्र लयमेष्यति यत्र च ॥५॥
यत्प्रमाणानि भूतानि देवादीनां च सम्भवम् ।
समुद्र-पर्वतानां च संस्थानं च यथा भुवः ॥६॥
सूर्यादीनाञ्च संस्थानं प्रमाणं मुनिसत्तम ।
देवादीनां तथा वंशान् मनून् मन्वन्तराणि च ॥७॥
कल्पान् कल्पविकल्पांश्च चातुर्युगविकल्पितान् ।
कल्पान्तस्य स्वरूपञ्च युगधर्मांश्च कृत्स्नशः ॥८॥
देवर्षिपार्थिवानाञ्च चरितं यन्महामुने ।
वेदशाखाप्रणयनं यथावद्व्यासकर्त्तृकम् ॥९॥
धर्मांश्च ब्राह्मणादीनां तथा चाश्रमवासिनाम् ।
श्रोतुमिच्छाम्यहं सर्व्वं त्वत्तो वाशिष्ठनन्दन ॥१०॥
ब्रह्मन् प्रसादप्रवणं कुरुष्व मयि मानसम् ।
येनाहमेतज्जानीयां त्वत्प्रसादान्महामुने ॥११॥

## पराशर उवाच

साधु मैत्रेय धर्मज्ञ स्मारितोऽस्मि पुरातनम् ।
पितुः पिता मे भगवान् वसिष्ठो यदुवाच ह ॥१२॥
विश्वामित्रप्रयुक्तेन रक्षता भक्षितो मया ।
श्रुतस्तातस्ततः क्रोधो मैत्रेयासीन्ममातुलः ॥१३॥
ततोऽहं रक्षसां सत्रं विनाशाय समारभम् ।
भस्मीकृताश्च शतशस्तस्मिन् सत्रे निशाचराः ॥१४॥
ततः संक्षीयमाणेषु तेषु रक्षः स्वशेषतः ।
मामुवाच महाभागो वसिष्ठो मत्पितामहः ॥१५॥
अलमत्यन्तकोपेन तात मन्युमिमं जहि ।
राक्षसा नापराध्यन्ते पितुस्ते विहितं हि तया ॥१६॥
मूढानामेष भवति क्रोधो ज्ञानवतां कुतः ।
हन्यते तात कः केन यतः स्वकृतभुक् पुमान् ॥१७॥
संचितस्यापि महतो वत्स क्लेशेन मानवैः ।
यशसस्तपसश्चैव क्रोधो नाशकरः परः ॥१८॥

स्वर्गापवर्गव्यासेधकारणं परमर्षयः ।
वर्जयन्ति सदा क्रोधं तात मा तद्वशो भव ॥१९॥
अलं निशाचरैर्दग्धैर्दीनैरनपकारिभिः ।
सत्रं ते विरमत्वेतत् क्षमासारा हि साधवः ॥२०॥
एवं तातेन तेनाहमनुनीतो महात्मना ।
उपसंहृतवान् सत्रं सद्यस्तद्वाक्यगौरवात् ॥२१॥
ततः प्रीतः स भगवान् वसिष्ठो मुनिसत्तमः ।
सम्प्राप्तश्च तदा तत्र पुलस्त्यो ब्रह्मणः सुतः ॥२२॥
पितामहेन दत्तार्घ्यः कृतासनपरिग्रहः ।
मामुवाच महाभागो मैत्रेय पुलहाग्रजः ॥२३॥
वैरे महति यद्वाक्याद् गुरोरस्याश्रिता क्षमा ।
त्वया तस्मात्समस्तानि भवान् शास्त्राणि वेत्स्यति ॥२४॥
सन्ततेर्न ममोच्छेदः क्रुद्धेनापि यतः कृतः ।
त्वया तस्मान्महाभाग ददाम्यन्यं महावरम् ॥२५॥
पुराणसंहिताकर्त्ता भवान् वत्स भविष्यति ।
देवतापारमार्थञ्च यथावद् वेत्स्यते भवान् ॥२६॥
प्रवृत्ते च निवृत्ते च कर्मण्यस्तमला मतिः ।
मत्प्रसादादसन्दिग्धा तव वत्स भविष्यति ॥२७॥
ततश्च भगवान् प्राह वसिष्ठो मत्पितामहः ।
पुलस्त्येन यदुक्तं ते सर्वमेतद् भविष्यति ॥२८॥
इति पूर्वं वसिष्ठेन पुलस्त्येन च धीमता ।
यदुक्तं तत् स्मृतिं यातं त्वत्तत्प्रश्नाखिलं मम ॥२९॥
सोऽहं वदाम्यशेषं ते मैत्रेय परिपृच्छते ।
पुराणसंहितां सम्यक् तां निबोध यथातथम् ॥३०॥
विष्णोः सकाशात् सम्भूतं जगत् तत्रैव संस्थितम् ।
स्थिति-संयमकर्त्ताऽसौ जगतोऽस्य जगच्च सः ॥३१॥

इति श्रीविष्णुपुराणे प्रथमांशे प्रथमोऽध्यायः ॥१॥



आदितः श्लोकानां समष्टयङ्काः-०+३१=३१



## अथ द्वितीयोऽध्यायः
## (विष्णुस्तुतिः, सृष्टिप्रक्रिया च)

### पराशर उवाच

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥१॥
नमो हिरण्यगर्भाय हरये शङ्कराय च ।
वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे ॥२॥
एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ।
अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे ॥३॥
सर्गस्थितिविनाशानां जगतोऽस्य जगन्मयः ।
मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥४॥
आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् ।
प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम् ॥५॥
ज्ञानस्वरूपमत्यन्तनिर्म्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥६॥
विष्णुं ग्रसिष्णुं विश्वस्य स्थितौ सर्गे तथा प्रभुम् ।
प्रणम्य जगतामीशमजमक्षयमव्ययम् ॥७॥
कथयामि यथा पूर्वं दक्षाद्यैर्मुनिसत्तमैः ।
पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः ॥८॥
तैश्चोक्तं पुरुकुत्साय भूभुजे नर्मदातटे ।
सारस्वताय तेनापि मह्यं सारस्वतेन च ॥९॥
परः पराणां परमः परमात्मात्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥१०॥
अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥११॥
सर्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥१२॥
तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥१३॥
तदेतत् सर्वमेवसीद् व्यक्ताव्यक्तस्वरूपवत् ।

तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥१४॥
परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परम् ॥१५॥
प्रधानपुरुषव्यक्तकालानां परमं हि यत् ।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् ॥१६॥
प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः ।
रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥१७॥
व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च ।
क्रीडतो बालकस्येव चेष्टां तस्य निशामय ॥१८॥
अव्यक्तं कारणं यत् तत् प्रधानमृषिसत्तमैः ।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥१९॥
अक्षय्यं नान्यदाधारममेयमजरं ध्रुवम् ।
शब्दस्पर्शविहीनं तद् रूपादिभिरसंहितम् ॥२०॥
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।
तेनाग्रे सर्वमेवासीद् व्याप्तं वै प्रलयादनु ॥२१॥
वेदवादविदो विद्वन्नियता ब्रह्मवादिनः ।
पठन्ति वै तमेवार्थं प्रधानप्रतिपादकम् ॥२२॥
नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमोज्योतिरभून्न चान्यत् ।
श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥२३॥
विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरं यत् तद् द्विज कालसंज्ञम् ॥२४॥
प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु यत् ।
तस्मात् प्राकृतसंज्ञोऽयमुच्यते प्रतिसंचरः ॥२५॥
अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते ।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥२६॥
गुणसाम्ये ततस्तस्मिन् पृथक् पुंसि व्यवस्थिते ।
कालस्वरूपं तद्विष्णोर्मैत्रेय परिवर्त्तते ॥२७॥
ततस्तत्परमं ब्रह्म परमात्मा जगन्मयः ।
सर्वगः सर्वभूतेशः सर्वात्मा परमेश्वरः ॥२८॥
प्रधानं पुरुषञ्चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥२९॥
यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते ।

मनसो नोपकत्तर्त्तृत्वात् तथाऽसौ परमेश्वरः ॥३०॥
स एव क्षोभको ब्रह्मन् क्षोभयश्च पुरुषोत्तमः ।
स सङ्कोचविकाशाभ्यां प्रधानत्वेऽपि च स्थितिः ॥३१॥
विकासाणुस्वरूपैश्च ब्रह्मरूपादिभिस्तथा ।
व्यक्तस्वरूपश्च तथा विष्णुः सर्वेश्वरेश्वरः ॥३२॥
गुणसाम्यात् ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने ।
गुणव्यञ्जनसम्भूतिः सर्गकाले द्विजोत्तम ॥३३॥
प्रधानतत्त्वमुद्भूतं महान्तं तत् समावृणोत् ।
सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ॥३४॥
प्रधानतत्त्वेन समं त्वचा बीजमिवावृतम् ।
वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥३५॥
त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत ।
भुतेन्द्रियाणां हेतुस्स त्रिगुणत्वान्महामुने ॥३६॥
यथा प्रधानेन महान्महता स तथावृतः ।
भूतादिस्तु विकुर्वाणः शब्दतन्मात्रिकं ततः ॥३७॥
ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ।
शब्दमात्रं तथाकाशं भूतादिः स समावृणोत् ॥३८॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ।
बलवानभवद् वायुस्तस्य स्पर्शो गुणो मतः ॥३९॥
आकाशं शब्दमात्रन्तु स्पर्शमात्रं समावृणोत् ।
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह ॥४०॥
ज्योतिरुत्पद्यते वायोस्तद् रूपगुणमुच्यते ।
स्पर्शमात्रन्तु वै वायू रूपमात्रं समावृणोत् ॥४१॥
ज्योतिश्चापि विकुर्व्वाणं रसमात्रं ससर्ज ह ।
सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानि च ॥४२॥
रसमात्राणि चाम्भांसि रूपमात्रं समावृणोत् ।
विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे ॥४३॥
संघातो जायते तस्मात् तस्य गन्धो गुणो मतः ।
तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता ॥४४॥
तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ।
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषणा ॥४५॥
भूततन्मात्रसर्गोऽयमहङ्कारात् तु तामसात् ।

तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ॥४६॥
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ।
त्वक् चक्षुर्नासिका जिह्वा श्रोत्रमत्र च पञ्चमम् ॥४७॥
शब्दादीनामवाप्त्यर्थं बुद्धीयुक्तानि वै द्विज ।
पायूपस्थौ करौ पादौ वाक् च मैत्रेय पञ्चमी ॥४८॥
विसर्गशिल्पगत्युक्तिः कर्म तेषाञ्च कथ्यते ।
आकाशवायुतेजांसि सलिलं पृथिवी तथा ॥४९॥
शब्दादिभिर्गुणैर्ब्रह्मन् ! संयुक्तान्युत्तरोत्तरैः ।
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥५०॥
नानावीर्य्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥५१॥
समेत्यान्योऽन्यसंयोगं परस्परसमाश्रयाः ।
एकसंघातलक्ष्याश्च सम्प्राप्यैक्यमशेषतः ॥५२॥
पुरुषाधिष्ठितत्वाच्च प्रधानानुग्रहेण च ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥५३॥
तत्क्रमेण विवृद्धन्तु जलबुद्बुदवत्समम् ।
भूतेभ्योऽण्डं महाबुद्धे ! बृहत् तदुदकेशयम् ॥५४॥
प्राकृतं ब्रह्मरूपस्य विष्णोः संस्थानमुत्तमम् ।
तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपी जगत्पतिः ॥५५॥
विष्णुब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः ।
मेरुरुन्नमभूत् तस्य जरायुश्च महीधराः ॥५६॥
गर्भोदकं समुद्राश्च तस्यासन् सुमहात्मनः ।
साद्रिद्वीपसमुद्रास्तु सज्योतिर्लोकसङ्ग्रहः ॥५७॥
तस्मिन्नण्डेऽभवद् विप्र ! सदेवासुरमानुषः ।
वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः ॥५८॥
वृतं दशगुणैरण्डं भूतादिर्महता तथा ।
अव्यक्तेनावृतो ब्रह्मंस्तैः सर्वैः सहितो महान् ॥५९॥
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ।
नारिकेलफलस्यान्तर्बीजं बाह्यदलैरिव ॥६०॥
जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ।
ब्रह्मा भूत्वास्य जगतो विसृष्टौ सम्प्रवर्त्तते ॥६१॥
सृष्टं च पात्यनुयुगं यावत् कल्पविकल्पना ।

सत्त्वभुग् भगवान् विष्णुरप्रमेयपराक्रमः ॥६२॥
तमोद्रेकी चा कल्पान्ते रुद्ररूपी जनार्दनः ।
मैत्रेयाखिलभूतानि भक्षयत्यतिभीषणः ॥६३॥
स भक्षयित्वा भूतानि जगत्येकार्णवीकृते ।
नागपर्य्यङ्कशयने शेते च परमेश्वरः ॥६४॥
प्रबुद्धश्च पुनः सृष्टिं करोति ब्रह्मरूपधृक् ।
सृष्टिस्थित्यन्तकरणाद् ब्रह्मविष्णुशिवात्मिकाम् ॥६५॥
स संज्ञां याति भगवानेक एव जनार्दनः ।
स्रष्टा सृजति चात्मानं विष्णुः पाल्यञ्च पाति च ॥६६॥
उपसंह्रियते चान्ते संहर्त्ता च स्वयं प्रभुः ।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥६७॥
सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् ॥६८॥
स एव सर्वभूतेशो विश्वरूपो यतोऽव्ययः ।
सर्गादिकं तु तस्यैव भूतस्थमुपकारकम् ॥६९॥
स एव सृज्यः स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च ।
ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः ॥७०॥

इति श्रीविष्णुपुराणे प्रथमांशे द्वितीयोऽध्यायः ॥२॥



आदितः श्लोकानां समष्ट्यङ्काः-३१+७०=१०१





## ॥ अथ तृतीयोऽध्यायः ॥
## (ब्रह्मणः सर्गजनिकायाः शक्तेर्विवरणम्, तस्यायुर्निरूपणञ्च)

### मैत्रेय उवाच

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥१॥

### पराशर उवाच

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥२॥
भवन्ति तपतां श्रेष्ठ ! पावकस्य यथोष्णता ।
तन्निबोध यथा सर्गे भगवान् सम्प्रवर्त्तते ॥३॥
नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः ।
उत्पन्नः प्रोच्यते विद्वान् नित्य एवोपचारतः ॥४॥
निजेन तस्य मानेन ह्यायुर्वर्षशतं स्मृतम् ।
तत्पराख्यं तदर्द्धञ्च परार्द्धमभिधीयते ॥५॥
कालस्वरूपं विष्णोश्च यन्मयोक्तं तवानघ ।
तेन तस्य निबोध त्वं परिमाणोपपादनम् ॥६॥
अन्येषाञ्चैव जन्तूनां चराणामचराश्च ये ।
भू-भूभृत्सागरादीनामशेषाणाञ्च सत्तम ॥७॥
काष्ठा पञ्चदशाख्याता निमेषा मुनिसत्तम ।
काष्ठस्त्रिंशत्कला तास्तु त्रिंशन्मौहूर्तिको विधिः ॥८॥
तावत्संख्यैरहोरात्रं मुहूर्त्तैर्मानुषं स्मृतम् ।
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः ॥९॥
तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे ।
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम् ॥१०॥
दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ।
चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे ॥११॥
चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ।
दिव्याब्दानां सहस्राणि युगेष्वाहुः पुराविदः ॥१२॥

तत्प्रमाणैः शतैः सन्ध्या पूर्वा तत्राभिधीयते ।
सन्ध्यांशकश्च तत् तुल्यो युगस्यानन्तरो हि सः ॥१३॥
सन्ध्यासध्यांशयोरन्तर्यः कालो मुनिसत्तम ।
युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञितः ॥१४॥
कृतं त्रेता द्वापरञ्च कलिश्चैव चतुर्युगम् ।
प्रोच्यते तत् सहस्रञ्च ब्रह्मणो दिवसं मुने ॥१५॥
ब्रह्मणो दिवसे ब्रह्मन् ! मनवश्च चतुर्दश ।
भवन्ति परिमाणञ्च तेषां कालकृतं श्रृणु ॥१६॥
सप्तर्षयः सुराः शक्रो मनुस्तत्सूनवो नृपाः ।
एककाले हि सृज्यन्ते संह्रियन्ते च पूर्ववत् ॥१७॥
चतुर्युगानां संख्याता साधिका ह्येकसप्ततिः ।
मन्वन्तरं मनोः कालः सुरादीनाञ्च सत्तम ॥१८॥
अष्टौ शतसहस्राणि दिव्यया संख्यया गतिः ।
द्वापञ्चाशत् तथान्यानि सहस्राण्यधिकानि च ॥१९॥
त्रिंशत्कोटयस्तु सम्पूर्णाः संख्याताः संख्यया द्विज ।
सप्तषष्टिस्तथान्यानि नियुतानि महामुने ॥२०॥
विंशतिश्च सहस्राणि कालोऽयमधिकं विना ।
मन्वन्तरस्य सङ्ख्येयं मानुषैर्वत्सरैर्द्विज ॥२१॥
चतुर्दशगुणो ह्येष कालो ब्राह्ममहः स्मृतम् ।
ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसञ्चरः ॥२२॥
तदा ही दह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम् ।
जनं प्रयान्ति तापार्त्ता महर्लोकनिवासिनः ॥२३॥
एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ।
भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः ॥२४॥
जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भवः ।
तत्प्रमाणां हि तां रात्रिं तदन्ते सृज्यते पुनः ॥२५॥
एवन्तु ब्रह्मणो वर्षमेवं वर्षशतं च यत् ।
शतं हि तस्य वर्षाणां परमायुर्महात्मनः ॥२६॥
एकमस्य व्यतीतन्तु परार्द्धं ब्रह्मणोऽनघ ।
तस्यान्तेऽभून्महाकल्पः पाद्म इत्यभिधीयते ॥२७॥
द्वितीयस्य परार्द्धस्य वर्तमानस्य वै द्विज ।
वाराह इति कल्पोऽयं प्रथमः परिकीर्त्तितः ॥२८॥

## ॥ अथ चतुर्थोऽध्यायः ॥
## (कल्पान्ते सर्गवर्णनम्)

### मैत्रेय उवाच

ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान् यथा ।
ससर्ज सर्वभूतानि तदाचक्ष्व महामुने ॥१॥

### पराशर उवाच

प्रजाः ससर्ज्ज भगवान् ब्रह्मा नारायणात्मकः ।
प्रजापतिपतिर्देवो यथा तन्मे निशामय ॥२॥
अतीतकल्पावसाने निशासुप्तोत्थितः प्रभुः ।
सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत ॥३॥
नारायणः परोऽचिन्त्यः परेषामपि स प्रभुः ।
ब्रह्मस्वरूपी भगवाननादिः सर्वसम्भवः ॥४॥
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।
ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् ॥५॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥६॥
तोयान्तः स महीं ज्ञात्वा जगत्येकार्णवे प्रभुः ।
अनुमानात् तदुद्धारं कर्त्तुकामः प्रजापतिः ॥७॥
अकरोत् स तनूमन्यां कल्पादिषु यथा पुरा ।
मत्स्यकर्मूर्मादिकां तद्वद् वाराहं वपुरास्थितः ॥८॥
वेदयज्ञमयं रूपमशेषजगतः स्थितौ ।
स्थितः स्थिरात्मा सर्वात्मा परमात्मा प्रजापतिः ॥९॥
जनलोकगतैः सिद्धैः सनकाद्यैरभिष्टुतः ।
प्रविवेश तदा तोयमात्माधारो धराधरः ॥१०॥
निरिक्ष्य तं तदा देवी पातालतलमागतम् ।
तुष्टाव प्रणता भूत्वा भक्तिनम्रा वसुन्धरा ॥११॥

## पृथ्वीव्युवाच

नमस्ते सर्वभूताय तुभ्यं शङ्खगदाधर ।
मामुद्धरास्मादद्य त्वं त्वत्तोऽहं पूर्वमुत्थिता ॥१२॥
त्वत्तोऽहमुद्धृता पूर्व्वं त्वन्मयाहं जनार्दन ।
तथान्यानि च भूतानि गगनादीन्यशेषतः ॥१३॥
नमस्ते परमात्मात्मन् पुरुषात्मन् नमोऽस्तु ते ।
प्रधानव्यक्तभुताय कालभूताय ते नमः ॥१४॥
त्वं कर्त्ता सर्वभूतानां त्वं पाता त्वं विनाशकृत् ।
सर्गादिषु प्रभो ब्रह्मविष्णुरुद्रात्मरूपधृक् ॥१५॥
सम्भक्षयित्वा सकलं जगत्येकार्णवीकृते ।
शेषे त्वमेव गोविन्द चिन्त्यमानो मनीषिभिः ॥१६॥
भवतो यत् परं तत्त्वं तन्न जानाति कश्चन ।
अवतारेषू यद्रूपं तदर्च्चन्ति दिवौकसः ॥१७॥
त्वामाराध्य परं ब्रह्म याता मुक्तिं मुमुक्षवः ।
वासुदेवमनाराध्य को मोक्षं समवाप्स्यति ॥१८॥
यत् किंचिन्मनसा ग्राह्यं यद्ग्राह्यं चक्षुरादिभिः ।
बुद्ध्या च यत्परिच्छेद्यं तद्रूपमखिलं तव ॥१९॥
त्वन्मयाऽहं त्वदाधारा त्वत्सृष्टा त्वामुपाश्रिता ।
माधवीमिति लोकोऽयमभिधत्ते ततो हि माम् ॥२०॥
जयाखिलज्ञानमय जय स्थूलमयाव्यय ।
जयाऽनन्त जयाव्यक्त जय व्यक्तमय प्रभो ॥२१॥
परापरात्मन् विश्वात्मन् जय यज्ञपतेऽनघ ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वमग्नयः ॥२२॥
त्वं वेदास्त्वं तदङ्गानि त्वं यपुरुषो हरे ।
सूर्यादयो ग्रहास्तारा नक्षत्राण्यखिलं जगत् ॥२३॥
मूर्तामूर्त्तमदृश्यञ्च दृश्यं च पुरुषोत्तम ।
यच्चोक्तं यच्च नैवोक्तं मयात्र परमेश्वर ॥
तत्सर्वं त्वं नमस्तुभ्यं भूयो भूयो नमो नमः ॥२४॥

## पराशर उवाच

एवं संसुत्यमानस्तु पृथिव्या पृथिवीधरः ।
सामस्वरध्वनिः श्रीमान् जगर्ज्ज परिघर्घरम् ॥२५॥
ततः समुत्क्षिप्य धरां स्वदंष्ट्रया
महावराहः स्फुटपद्मलोचनः ।
रसातलादुत्पलपत्रसन्निभः
समुत्थितो नील इवाचलो महान् ॥२६॥
उत्तिष्ठता तेन मुखानिलाहतं
तत्सम्भवाम्भो जनलोकसंश्रयात् ।
प्रक्षालयामास हि तान् महाद्युतीन्
सनन्दनादीपकल्मषान् मुनीन् ॥२७॥
प्रयान्ति तोयानि क्षुराग्रविक्षते
रसातलेऽघ, कृतशब्दसन्ततिः ।
श्वासानिलास्ताः परितः प्रयान्ति
सिद्धा जने ये नियतं वसन्ति ॥२८॥
उत्तिष्ठतस्तस्य जलार्द्रकुक्षे-
र्महावराहस्य महीं विधार्य्य ।
विधुन्वतो वेदमयं शरीरं
रोमान्तरस्था मुनयो जुषन्ति ॥२९॥
तं तुष्टुवुस्ताापपरितचेतसो
लोके जने ये निवसन्ति योगिनः ।
सनन्दनाद्या नतिनम्रकन्धरा
धराधरं धीरतरोद्धतेक्षणम् ॥३०॥
जयेश्वराणां परमेश केशव
प्रभो गदाशङ्खधरासि चक्रधृक् ।
प्रसूति नाशस्थितिहेतुरीश्वर-
स्त्वमेव नान्यत्परमं च यत् परम् ॥३१॥
पादेषु वेदास्तव यूपदंष्ट्र
दन्तेषु यज्ञाश्चितयश्च वक्त्रे ।
हुताशजिह्वोऽसि तनूरुहाणि
दर्भाः प्रभो यज्ञपुमांस्त्वमेव ॥३२॥
विलोचने रात्र्यहनी महात्मन्सर्वाश्रयं ब्रह्म परं शिरस्ते ।
सूक्तान्यशोषाणि सटाकलापो घ्राणं समस्तानि हवींषि देव ॥३३॥

स्रुक्तुण्ड सामस्वरधीरनाद प्राग्वंशकायाखिलसत्रसन्धे ।
पूर्तेष्टधर्म्मश्रवणोऽसि देव सनातनात्मन् भगवन् प्रसीद ॥३४॥
पदक्रमाक्रान्तभूवं भवन्तमादिस्थितिश्चाक्षर विश्वमूर्त्ते ।
विश्वस्य विद्मः परमेश्वरोऽसि प्रसीद नाथोऽसि चराचरस्य ॥३५॥
दंष्ट्राग्रविन्यस्तमशेषमेतद् भूमण्डलं नाथ विभाव्यते ते ।
विगाहतः पद्मवनं विलग्नं सरोजिनीपत्रमिवोढपङ्कम् ॥३६॥
द्यावापृथिव्योरतुलप्रभाव यदन्तरं तद् वपुषा तवैव ।
व्याप्तं जगद्व्याप्तिसमर्थदीप्ते हिताय विश्वस्य विभो भव त्वम् ॥३७॥
परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥३८॥
यदेतद् दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥३९॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥४०॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥४१॥
प्रसीद सर्वसर्वात्मन् भवाय जगतामिमाम् ।
उद्धरोर्वीममेयात्मन् शंन्नो देह्यब्जलोचन ॥४२॥
सत्त्वोद्रिक्तोऽसि भगवन् गोविन्द पृथिवीमिमाम् ।
समुद्धर भवायेश शं नो देह्यब्जलोचन ॥४३॥
सर्गप्रवृत्तिर्भवतो जगतामुपकारिणी ।
भवत्वेषा नमस्तेऽस्तु शं नो देह्यब्जलोचन ॥४४॥

पराशर उवाच

एवं संस्तुयमानोऽथ परमात्मा महीधरः ।
उज्जहार क्षितिं क्षिप्रं न्यस्तवांश्च महार्णवे ॥४५॥
तस्योपरि समुद्रस्य महती नौरिव स्थिता ।
विततत्वाच्च देहस्य न मही याति सम्प्लवम् ॥४६॥
ततः क्षितिं समां कृत्वा पृथिव्यां सोऽपि नोद्गिरीन् ।
यथा विभागं भगवाननादिः परमेश्वरः ॥४७॥

प्राक् सर्गदग्धानखिलान् पर्वतान् पृथिवीतले ।
अमोघेन प्रभावेण ससर्जामोघवाञ्छितः ॥४८॥
भूविभागं ततः कृत्वा सप्तद्वीपं यथातथम् ।
भूराद्यांश्चतुरो लोकान् पूर्ववत् समकल्पयत् ॥४९॥
ब्रह्मरूपधरो देवस्ततोऽसौ रजसा वृतः ।
चकार सृष्टीं भगवांश्चतुर्वक्त्रधरो हरिः ॥५०॥
निमित्तमात्रमेवासीत् सृज्यानां सर्गकर्म्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥५१॥
निमित्तमात्रं मुक्त्वाकं नान्यत् किञ्चिदवेक्षते ।
नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तुवस्तुताम् ॥५२॥

इति श्रीविष्णुपुराणे प्रथमांशे चतुर्थोऽध्यायः ॥४॥

आदितः श्लोकानां समष्टयङ्काः-१२९+५२=१८१



## ॥ अथ पञ्चमोऽध्यायः ॥
## (देवादीनां सृष्टिकथनम्)

### मैत्रेय उवाच

यथा ससर्ज्ज देवोऽसौ देवर्षिपितृदानवान् ।
मनुष्यतिर्यग्वृक्षादीन् भूव्योमसलिलौकसः ॥१॥
यद्गुणां यत्स्वरूपञ्च यत्स्वभावं च जगद्द्विज ।
सर्गादौ सृष्टवान् ब्रह्मा तन्ममाचक्ष्व तत्त्वतः ॥२॥

### पराशर उवाच

मैत्रेय कथयाम्येष श्रृणुष्व सुसमाहितः ।
यथा ससर्ज देवोऽसौ देवादीनखिलान् प्रभुः ॥३॥
सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥४॥
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।
अविद्याः पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥५॥
पञ्चधावस्थितः सर्गो ध्यायतो प्रति बोधवान् ।
बहिरन्तोऽप्रकाशश्च संवृतात्मा नगात्मकः ॥६॥
मुख्या नगा यतश्चोक्ता मुख्यसर्गस्ततस्त्वयम् ॥७॥
तं दृष्ट्वाऽसाधकं सर्गममन्यदपरं पुनः ॥८॥
तस्याभिध्यायतः सर्गस्तिर्यक्स्रोताभ्यवर्त्तत ।
यस्मात् तिर्यक् प्रवृतः स तिर्यक्स्रोतास्ततः स्मृतः ॥९॥
पश्चादयस्ते विख्यातास्तमः प्राया ह्यवेदिनः ।
उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः ॥१०॥
अहङ्कृता अहम्माना अष्टाविंशद्वधात्मकाः ।
अन्तः प्रकाशास्ते सर्वे आवृताश्च परस्परम् ॥११॥
तमप्यसाधकं मत्वा ध्यायतोऽन्यस्ततोऽभवत् ।
ऊर्ध्वस्त्रोतास्तृतीयस्तु सात्त्विकोर्ध्वमवर्त्तत ॥१२॥
ते सुखप्रीतिबहुला बहिरन्तस्त्वनावृताः ।
प्रकाशा बहिरन्तश्च ऊर्ध्वस्त्रोतोद्भवाः स्मृताः ॥१३॥

तुष्टात्मनस्तृतीयस्तु देवसर्गस्तु स स्मृतः ।
तस्मिन् सर्गेऽभवत् प्रीतिर्निष्पन्ने ब्रह्मणस्तदा ॥१४॥
ततोऽन्यं स तदा दध्यौ साधकं सर्गमुत्तमम् ।
असाधकांस्तु तान् ज्ञात्वा मुख्यसर्गादिसम्भवान् ॥१५॥
तथाभिध्यायतस्तस्य सत्याभिध्यायिनस्ततः ।
प्रादुर्बभूव चाव्यक्तादर्वाक् स्रोतस्तु साधकम् ॥१६॥
यस्मादर्वाक् प्रवर्त्तन्ते ततोऽर्वाक्स्रोतसस्तु ते ।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः ॥१७॥
तस्मात् ते दुःखबहुला भूयोभूयश्च कारिणः ।
प्रकाशा बहिरन्तश्च मनुष्याः साधकाश्च ते ॥१८॥
इत्येते कथिताः सर्गाः षडत्र मुनिसत्तम ।
प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ॥१९॥
तन्मत्राणां द्वितीयश्च भूतसर्गस्तु स स्मृतः ।
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ॥२०॥
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः ।
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥२१॥
तिर्य्यक्स्रोतास्तु यः प्रोक्तस्तैर्य्यग्योन्यः स उच्यते ।
ऊर्ध्वस्रोतास्ततः षष्ठो देवसर्गस्तु स स्मृतः ॥२२॥
ततोऽर्व्वाक्स्रोतसः सर्गः सप्तमः स तु मानुषः ॥२३॥
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च सः ।
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ॥२४॥
प्राकृतो वैकृताश्चैव कौमारो नवमः स्मृतः ।
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ॥२५॥
प्राकृतो वैकृताश्चैव जगतो मूलहेतवः ।
सृजतो जगदीशस्य किमन्यत् श्रोतुमिच्छसि ॥२६॥

मैत्रेय उवाच

सङ्क्षेपात् कथितः सर्गो देवादीनां मुने त्वया ।
विस्तराच्छ्रोतुमिच्छामि त्वत्तो मुनिवरोत्तम ॥२७॥

पराशर उवाच

कर्म्मभिर्भाविताः पूर्व्वैः कुशलाकुशलैस्तु ताः ।
ख्यात्यातया ह्यनिर्मुक्ताः संहारे ह्युपसंहृताः ॥२८॥
स्थावरान्ताः सुराद्यास्तु प्रजा ब्रह्मश्चतुर्विधाः ।
ब्रह्मणः कुर्वतः सृष्टिं जज्ञिरे मानसास्तु ताः ॥२९॥
ततो देवासुरपितॄन्मनुष्यांश्च चतुष्टयम् ।
सिसृक्षुरम्भांस्येतानि स्वमात्मानमयूयुजत् ॥३०॥
युक्तात्मनस्तमोमात्रा उद्रिक्ताभूत् प्रजापतेः ।
सिसृक्षोर्ज्जघनात् पूर्वमसुरा जज्ञिरे ततः ॥३१॥
उत्ससर्ज्ज ततस्तान्तु तमोमात्रात्मिकां तनुम् ।
सा तु त्यक्ता तनुस्तेन मैत्रेयाभूद् विभावरी ॥३२॥
सिसृक्षुरन्यदेहस्थः प्रीतिमाप ततः सुराः ।
सत्त्वोद्रिक्ताः समुद्भूता मुखतो ब्रह्मणो द्विज ॥३३॥
त्यक्ता सा तु तनुस्तेन सत्त्वप्रायमभद् दिनम् ।
ततो हि बलिनो रात्रावसुरा देवता दिवा ॥३४॥
सत्त्वमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ।
पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे ॥३५॥
उत्ससर्ज्ज पितॄन् सृष्ट्वा ततस्तामपि स प्रभुः ।
सा चोत्सृष्टाऽभवत् सन्ध्या दिननक्तान्तरस्थितिः ॥३६॥
रजोमात्रात्मिकामन्यां जगृहे स तनुं ततः ।
रजोमात्रोत्कटा जाता मनुष्या द्विजसत्तम ॥३७॥
तामप्याशु स तत्याज तनुं सद्यः प्रजापतिः ।
ज्योत्स्ना समभवत् सापि प्राक्सन्ध्या याभिधीयते ॥३८॥
ज्योत्स्नायामेव बलिनो मनुष्याः पितरस्तथा ।
मैत्रेय सन्ध्यासमये तस्मादेते भवन्ति वै ॥३९॥
ज्योत्स्ना रात्र्यहनी सन्ध्या चत्वार्य्येतानि वै प्रभोः ।
ब्रह्मणस्तू शरीराणि त्रिगुणोपाश्रयाणि तु ॥४०॥
रजोमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ।
ततः क्षुद् ब्रह्मणो जाता जज्ञे कोपस्तया ततः ॥४१॥
क्षुत्क्षामानन्धकारेऽथ सोऽसृजद् भगवांस्ततः ।
विरूपाः श्मश्रुला जातास्तेऽभ्यधावंस्ततः प्रभुम् ॥४२॥
मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते ।
ऊचुः खादाम इत्येन्ये ये ते यक्षास्तु जक्षणात् ॥४३॥

अप्रियानथ तान् दृष्ट्वा केशाः शीर्य्यन्त वेधसः ।
हीनाश्च शिरसो भूयः समारोहन्त तच्छिरः ॥४४॥
सर्पणात् तेऽभवन् सर्पा हीनत्वादहयः स्मृताः ।
ततः क्रुद्धो जगत्सृष्टा क्रोधात्मनो विनिर्ममे ॥
वर्णेन कपिशेनोग्रा भूतास्ते पिशिताशनाः ॥४५॥
धयन्तो गां समुत्पन्ना गन्धर्वास्तस्य तत्क्षणात् ।
पिबन्तो जज्ञिरे वाचं गन्धर्वास्तेन ते द्विज ॥४६॥
एतानि सृष्ट्वा भगवान् ब्रह्मा तच्छक्तिनोदितः ।
ततः स्वच्छन्दतोऽन्यानि वयांसि वयसोऽसृजत् ॥४७॥
अवयो वक्षसश्चक्रे मुखतोऽजाः स सृष्टवान् ।
सृष्टवानुदराद् गाश्च पार्श्वाभ्यां च प्रजापतिः ॥४८॥
पद्भ्यामश्वान् समातङ्गान् शरभान् गवयान् मृगान् ।
उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्यांश्च जातयः ॥४९॥
ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे ।
त्रेतायुगमुखे ब्रह्मा कल्पस्यादौ द्विजोत्तम ॥
सृष्ट्वा पश्वोषधीः सम्यग् युयोज स तदाध्वरे ॥५०॥
गौरजः पुरुषा मेषा अश्वा अश्वतराः खराः ।
एतान् ग्राम्यान् प्रशून् प्राहुरारण्यांश्च निबोध मे ॥५१॥
श्वापदो द्विखुरो हस्ती वानरः पक्षिपञ्चमः ।
औदकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः ॥५२॥
गायत्रं च ऋचश्चैव त्रिवृत्सोमं रथन्तरम् ।
अग्निष्टोमं च यज्ञानां निर्म्ममे प्रथमान् मुखात् ॥५३॥
यजूंषि त्रैष्टुभं छन्दस्तोमं सप्तदशं तथा ।
बृहत् साम तथोक्थं च दक्षिणादसृजन् मुखात् ॥५४॥
सामानि जगतीछन्दः स्तोमं सप्तदशं तथा ।
वैरूपमतिरात्रं च पश्चिमादसृजन् मुखात् ॥५५॥
एकविंशमथर्वाणमाप्तोर्यामाणमेव च ।
अनुष्टुभं स वैराजं उत्तरादसृजन् मुखात् ॥५६॥
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ।
देवासुरपितॄन् सृष्ट्वा मनुष्यांश्च प्रजापतिः ॥५७॥
ततः पुनः ससर्ज्जादौ स कल्पस्य पितामहः ।
यक्षान् पिशाचान् गन्धर्वास्तथैवाप्सरसां गणान् ॥५८॥

नरकिन्नररक्षांसि वयः पशुमृगोरगान् ।
अव्ययं च व्ययं चैव यदिदं स्थाणुजङ्गमम् ॥५९॥
तत् ससर्ज्ज तदा ब्रह्मा भगवानादिकृत् विभुः ।
तेषां ये यानि कर्म्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ॥
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥६०॥
हिंस्राहिंस्त्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात् तत् तस्य रोचते ॥६१॥
इन्द्रियार्थेषु भूतेषु शरीरेषु च स प्रभुः ।
नानात्वं विनियोगश्च धातैव व्यसृजत् स्वयम् ॥६२॥
नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥६३॥
ऋषीणां नामधेयानि यथा वेदश्रुतानि वै ।
तथा नियोगयोग्यानि सर्वेषामपि सोऽकरोत् ॥६४॥
यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥६५॥
करोत्येवंविधां सृष्टिं कल्पादौ स पुनः पुनः ।
सिसृक्षाशक्तियुक्तोऽसौ सृज्यशक्तिप्रचोदितः ॥६६॥

इति श्रीविष्णुपुराणे प्रथमेंऽशे पञ्चमोऽध्यायः ॥५॥



आदितः श्लोकानां समष्ट्यङ्काः-१८१+६६=२४७





## ॥ अथ षष्ठोऽध्यायः ॥
## (चातुवर्ण्यसृष्टिः, चातुर्वर्णस्थाननिरूपणञ्च)

### मैत्रेय उवाच

अर्वाक्स्रोतस्तु कथितो भवता यस्तु मानुषः ।
ब्रह्मन् विस्तरतो ब्रूहि ब्रह्मा तमसृजद् यथा ॥१॥
यथा च वर्णानसृजद् यद्गुणांश्च महामुने ।
यच्च तेषां स्मृतं कर्म विप्रादीनां तदुच्यताम् ॥२॥

### पराशर उवाच

सत्याभिध्यायिनः पूर्वं सिसृक्षोर्ब्रह्मणो जगत् ।
अजायन्त द्विजश्रेष्ठ सत्त्वोद्रिक्ता मुखात् प्रजाः ॥३॥
वक्षसो रजसोद्रिक्तास्तथा वै ब्रह्मणोऽभवन् ।
रजसा तमसा चैव समुद्रिक्तास्तथोरूजाः ॥४॥
पद्भ्यामन्याः प्रजा ब्रह्मा ससर्ज द्विजसत्तम ।
तमः प्रधानास्ताः सर्वाश्चातुर्वर्ण्यमिदं ततः ॥५॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ।
पादोरुवक्षःस्थलतो मुखतश्च समुद्गताः ॥६॥
यज्ञनिष्पत्तये सर्वमेतद् ब्रह्मा चकार वै ।
चातुर्वर्ण्यं महाभाग यज्ञसाधनमुत्तमम् ॥७॥
यज्ञैराप्यायिता देवा वृष्ट्युत्सर्गेण वै प्रजाः ।
आप्याययन्ते धर्म्मज्ञ यज्ञाः कल्याणहेतवः ॥८॥
निष्पाद्यन्ते नरैस्तैस्तु स्वधर्म्माभिरतैस्ततः ।
विशुद्धाचरणोपेतैः सद्भिः सन्मार्गगामिभिः ॥९॥
स्वार्गापवर्गौ मानुष्यात् प्राप्नुवन्ति नरा मुने ।
यच्चाभिरुचितं स्थानं तद् यान्ति मनुजा द्विज ॥१०॥
प्रजास्ता ब्रह्मणा सृष्टाश्चातुर्वर्ण्यव्यवस्थितौ ।
सम्यक्-श्रद्धासमाचारप्रवणा मुनिसत्तम ॥११॥
ययेच्छावासनिरताः सर्वबाधाविवर्जिताः ।
शुद्धान्तः करणाः शुद्धाः सर्वानुष्ठाननिर्म्मलाः ॥१२॥

शुद्धे च तासां मनसि शुद्धेऽन्तःसंस्थिते हरौ ।
शुद्ध ज्ञानं प्रपश्यति विष्ण्वाख्यं येन तत्पदम् ॥१३॥
ततः कालात्मको योऽसौ स चांशः कथितो हरेः ।
स पातयत्यघं घोरमल्पमल्पाल्पसारवत् ॥१४॥
अधर्म्मबीजसम्भूतं तमोलोभसमुद्भवम् ।
प्रजासु तासु मैत्रेय रागादिकमसाधकम् ॥१५॥
ततः सा सहसा सिद्धिस्तेषां नातीव जायते ।
रसोल्लासादयश्चान्याः सिद्धयोऽष्टौ भवन्ति याः ॥१६॥
तासु क्षीणास्वशेषासु वर्द्धमाने च पातके ।
द्वन्द्वाभिभवदुःखार्त्तास्ता भवन्ति ततः प्रजाः ॥१७॥
ततो दुर्गाणि ताश्चक्रुर्वार्क्षं पार्वतमौदकम् ।
कुत्रिमं च तथा दुर्गं पुरखर्वटकादिकम् ॥१८॥
गृहाणि च यथान्यायं तेषु चक्रुः पुरादिषु ।
शीतातपादिबाधानां प्रशमाय महामुने ॥१९॥
प्रतीकारमिदं कृत्वा शीतादेस्ताः प्रजाः पुनः ।
वार्तोपायं ततश्चक्रुर्हस्तसिद्धिं च कर्मजाम् ॥२०॥
ब्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।
प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीकणाः ॥२१॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ।
आढक्यश्चणकाश्चैव शणाः सप्तदश स्मृताः ॥२२॥
इत्येताश्चौषधीनान्तु ग्राम्याणां जातयो मुने ।
ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश ॥२३॥
ब्रीहयः सयवा माषा गोधूमा अणवस्तिलाः ।
प्रियङ्गुसप्तमा ह्येता अष्टमास्तु कुलत्थकाः ॥२४॥
श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः ।
तथा वेणुयवाः प्रोक्तास्तद्वत् मर्कटका मुने ॥२५॥
ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्दश ।
यज्ञनिष्पत्तये यज्ञस्तथासां हेतुरुत्तमः ॥२६॥
एताश्च सह यज्ञेन प्रजानां कारणं परम् ।
परापरविदः प्राज्ञस्ततो यज्ञान् वितन्वते ॥२७॥
अहन्यहन्यनुष्ठानं यज्ञानां मुनिसत्तम ।
उपकारकरं पुसां क्रियमाणास्य शान्तिदम् ॥२८॥

येषान्तु कालरूपोऽसौ पापबिन्दुर्महामते ।
चेतःसु ववृधे चक्रुस्ते न यज्ञेषु मानसम् ॥२९॥
वेदवादांस्तथा वेदान् यज्ञनिष्पादकं च यत् ।
तत्सर्वं निन्दमानास्ते यज्ञव्यासेधकारिणः ॥३०॥
प्रवृतिमार्गव्युच्छित्तिकारिणो वेदनिन्दकाः ।
दुरात्मानो दुराचारा बभूवुः कुटिलाशयाः ॥३१॥
संसिद्धा यान्तु वार्त्तायां प्रजाः सृष्ट्वा प्रजापतिः ।
मर्यादां स्थापयामास यथास्थानं यथागुणम् ॥३२॥
वर्णानामाश्रमाणां च धर्मान्धर्मभृतां वर ।
लोकांश्च सर्ववर्णानां सम्यग्धर्मानुपालिनाम् ॥३३॥
प्राजपत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वनिवर्त्तिनाम् ॥३४॥
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तिनाम् ।
गान्धर्वं शूद्रजातीनां परिचर्यानुवर्तिनाम् ॥३५॥
अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ।
स्मृतं तेषां तु यत् स्थानं तदेव गुरुवासिनाम् ॥३६॥
सप्तर्षीणान्तु यत्स्थानं स्मृतं तद्वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम् ॥३७॥
योगिनाममृतं स्थानं यद्विष्णोः परमं पदम् ॥३८॥
एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये ।
तेषां तत् परमं स्थानं यत् तु पश्यन्ति सूरयः ॥३९॥
गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्य्यादयो ग्रहाः ।
अद्यापि न निवर्त्तन्ते द्वादशाक्षरचिन्तकाः ॥४०॥
तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
असिपत्रवनं घोरं कालसूत्रमवीचिमत् ॥४१॥
विनिन्दकानां वेदस्य यज्ञव्याघातकारिणाम् ।
स्थानमेतत् समाख्यातं स्वधर्म्मत्यागिनश्च ये ॥४२॥

इति श्रीविष्णुपुराणे प्रथमांशे षष्ठोऽध्यायः ॥६॥

आदितः श्लोकानां समष्ट्यङ्काः-२४७+४२=२८९

## ॥ अथ सप्तमोऽध्यायः ॥
## (मानसप्रजासृष्टिः, रुद्रादीनां सृष्टिः, चतुर्विधप्रलयवर्णनञ्च)

### पराशर उवाच

ततोऽभिध्यायतस्तस्य जज्ञिरे मानसीः प्रजाः ।
तच्छरीरसमुत्पन्नैः कार्य्यैस्तैः कारणैः सह ॥
क्षेत्रज्ञाः समवर्त्तन्त गात्रेभ्यस्तस्य धीमतः ॥१॥
ते सर्वे समवर्त्तन्त ये मया प्रागुदीरिताः ।
देवाद्याः स्थावरान्ताश्च त्रैगुण्यविषये स्थिताः ॥२॥
एवंभूतानि सृष्टानि चराणि स्थावराणि च ॥३॥
यदास्य ताः प्रजाः सर्वा न व्यवर्द्धन्त धीमतः ।
अतान्यान् मानसान् पुत्रान् सदृशानात्मनोऽसृजत् ॥४॥
भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा ।
मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसम् ॥५॥
नव ब्रह्माणा इत्येते पुराणे निश्चयं गताः ॥६॥
(ख्यातिं भूतिं च सम्भूतिं क्षमां प्रीतिं तथैव च ।
सन्नतिं च तथैवोर्ज्जामनसूयां तथैव च ॥७॥
प्रसूतिं च ततः सृष्ट्वा ददौ तेषां महात्मनाम् ।
पत्न्यो भवध्वमित्युक्त्वा तेषामेव तु दत्तवान् ॥८॥)
सनन्दनादयो ये च पूर्वं सृष्टा तु वेधसा ।
न ते लोकेष्वसज्जन्त निरपेक्षाः प्रजासु ते ॥९॥
सर्वे ते ह्यागतज्ञाना वीतरागा विमत्सराः ।
तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः ॥१०॥
ब्रह्मणोऽभून्महाक्रोधस्त्रैलोक्यदहनक्षमः ।
तस्य क्रोधात् समुद्भूतज्वालामालाविदीपितम् ॥
ब्रह्मणोऽभूत् तदा सर्वं त्रैलोक्यमखिलं मुने ॥११॥
भ्रकुटीकुटिलात् तस्य ललाटात् क्रोधदीपितात् ।
समुत्पन्नस्तदा रुद्रो मध्याह्नार्कसमप्रभः ॥१२॥
अर्धनारीनरवपुः प्रचण्डोऽतिशरीरवान् ।
विभजात्मानमित्युक्त्वा तं ब्रह्मान्तर्दधे ततः ॥१३॥
तथोक्तोऽसौ द्विधा स्त्रित्वं पुरुषत्वं तथाऽकरोत् ।

बिभेद् पुरुषत्वं च दशधा चैकधा च सः ॥१४॥
सौम्यासौम्यैस्तथा शान्ता शान्तैः स्त्रीत्वं च स प्रभुः ।
बिभेद् बहुधा देवः स्वरूपैरसितैः सितैः ॥१५॥
ततो ब्रह्मात्मसम्भूतं पूर्वं सायम्भुवं प्रभुः ।
आत्मानमेव कृतवान् प्रजापाल्ये मनुं द्विज ॥१६॥
शतरूपां च तां नारी तपोनिर्धूतकल्मषाम् ।
स्वायम्भुवो मनुर्देवः पत्नीत्वे जगृहे विभुः ॥१७॥
तस्माच्च पुरुषाद् देवी शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञितम् ॥१८॥
कन्याद्वयञ्च धर्मज्ञ रूपौदार्य्यगुणान्वितम् ।
ददौ प्रसूतीं दक्षाय तथाकूतिं रुचे पुरा ॥१९॥
प्रजापतिः स जग्राह तयोर्यज्ञ सदक्षिणः ।
पुत्रो यज्ञे महाभाग दम्पत्यं मिथुनं ततः ॥२०॥
यज्ञस्य दक्षिणायान्तु पुत्रा द्वादश जज्ञिरे ।
यामा इति समाख्याता देवाः स्वायम्भुवे मनौ ॥२१॥
प्रसूत्यां च तथा दक्षश्चतस्रो विंशतिस्तथा ।
ससर्ज कन्यास्तासान्तु सम्यङ् नामानि मे श्रृणु ॥२२॥
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्तिस्त्रयोदश ॥२३॥
पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ।
ताभ्यः शिष्टाः यवीयस्य एकादश सुलोचनाः ॥२४॥
ख्यातिः सत्यथ सम्भूतिः स्मृतिः प्रीतिः क्षमा तथा ।
सन्नितिश्चानसूया च ऊर्ज्जा स्वाहा स्वधा तथा ॥२५॥
भृगुर्गवो मरीचिश्च तथा चैवाङ्गिरा मुनिः ।
पुलस्त्यः पुलहश्चैव क्रतुश्चर्षिवरस्तथा ॥२६॥
अत्रिर्वसिष्ठो वह्निश्च पितरश्च यथाक्रमम् ।
ख्यात्याद्या जगृहुः कन्या मुनयो मुनिसत्तम ॥२७॥
श्रद्धा कामं चला दर्पं नियमं धृतिरात्मजम् ।
सन्तोषञ्च तथा तुष्टिर्लोभं पुष्टिरसूयत ॥२८॥
मेधा श्रुतं क्रिया दण्डं नयं विनयमेव च ॥२९॥
बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम् ।
व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ॥३०॥

सुखं सिद्धिर्यशः कीर्तिरित्येते धर्मसूनवः ।
कामान् नन्दा सुतं हर्षं धर्मपौत्रमसूयत ॥३१॥
हिंसा भार्या त्वधर्म्मस्य ततो जज्ञे तथानृतम् ।
कन्या च निकृतिस्ताभ्यां भयं नरकमेव च ॥३२॥
माया च वेदना चैव मिथुनन्त्विदमेतयोः ।
तयोर्जाज्ञेऽथ वै माया मृत्युं भूतापरिहारिणम् ॥३३॥
वेदना स्वसुतश्चापि दुःखं जज्ञेऽथ रौरवात् ।
मृत्योर्व्याधिजराशोकतृष्णाक्रोधश्च जज्ञिरे ॥३४॥
दुःखोत्तराः स्मृता ह्येते सर्वे चाधर्मलक्षणाः ।
नैषां भार्याऽस्ति पुत्रो वा ते सर्वे ह्युर्ध्वरेतसः ॥३५॥
रौद्राणि तानि रूपाणि विष्णुर्मुनिवरात्मज ।
नित्यप्रलयहेतुत्वं जगतोऽस्य प्रयान्ति वै ॥३६॥
दक्षो मरीचिरत्रिश्च भृग्वाद्याश्च प्रजेश्वराः।
जगत्यत्र महाभाग नित्यसर्गस्य हेतवः ॥३७॥
मनवो मनुपुत्राश्च भूपा वीर्यधनाश्च ये ।
सन्मार्गानिरताः शूरास्ते नित्यस्थितिकारिणः ॥३८॥

मैत्रेय उवाच

येयं नित्या स्थितिर्ब्रह्मन् नित्यसर्गस्तथेरितः ।
नित्याभावाश्च तेषां वै स्वरूपं मम कथ्यताम् ॥३९॥

पराशर उवाच

सर्गस्थितिविनाशांश्च भगवान् मधुसूदनः ।
तैस्तैरूपैरचिन्त्यात्मा करोत्यव्याहतान् विभुः ॥४०॥
नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विजः ।
नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः ॥४१॥
ब्राह्मो नैमित्तिकस्तत्र यच्छेते जगतः पतिः ।
प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम् ॥४२॥
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ।
नित्यः सदैव जातानां यो विनाशो दिवानिशम् ॥४३॥

प्रसूतिः प्राकृतेर्या तु सा सृष्टिः प्राकृती स्मृता ।
दैनन्दिनी तथा प्रोक्ता यान्तरप्रलायादनु ॥४४॥
भूतान्यनुदिनं यत्र जायन्ते मुनिसत्तम ।
नित्यः सर्ग स तु प्रोक्तः पुराणार्थविचक्षणैः ॥४५॥
एवं सर्वशरीरेषु भगवान् भूतभावनः ।
संस्थितः कुरुते विष्णुरुत्पत्तिस्थितिसंयमान् ॥४६॥
सृष्टिस्थितिविनाशानां शक्तयः सर्वदेहिषु ।
वैष्णव्यः परिवर्त्तन्ते मैत्रेयाऽहर्निशं सदा ॥४७॥
गुणत्रयमयं ह्येतद् ब्रह्मन् शक्तित्रयं महत् ।
योऽतियाति स चात्येव परं नावर्त्तते पुनः ॥४८॥

इति श्रीविष्णुपुराणे प्रथमांशे सप्तमोऽध्यायः ॥७॥



आदितः श्लोकानां समष्ट्यङ्काः-२८९+४८=३३७





## ॥ अथाष्टमोऽध्यायः ॥
## (लक्ष्म्युत्पत्तिकथनम्)

### पराशर उवाच

कथितस्तामसः सर्गो ब्रह्मणस्ते महामुने ।
रुद्रसर्गं प्रवक्ष्यामि तन्मे निगदतः श्रृणु ॥१॥
कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः ।
प्रादुरासीत् प्रभोरङ्के कुमारो नीललोहितः ॥२॥
रुदन् वै सुस्वरं सोऽथ द्रवंश्च द्विजसत्तम ।
किं रोदिषीत तं ब्रह्मा रुदन्तं प्रत्युवाच ह ॥३॥
नाम देहीति तं सोऽथ प्रत्युवाच प्रजापतिम् ।
रुद्रस्त्वं देव नाम्नासि मा रोदीर्धैर्यमावह ॥
एवमुक्तः पुनः सोऽथ सप्तकृत्वो रुरोद वै ॥४॥
ततोऽन्यानि तदौ तस्मै सप्त नामानि वै प्रभुः ।
स्थानानि चैषामष्टानां पत्नीः पुत्रांश्च वै प्रभुः ॥५॥
भवं सर्वं महेशानं तथा पशुपतिं द्विज ।
भीममुग्रं महादेवं मुवाच स पितामहः ॥६॥
चक्रे नामान्यथैतानि स्थानान्येषां चकार सः ।
सूर्यो जलं मही वह्निर्वायुराकाशमेव च ॥
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात् ॥७॥
सुवर्चला तथैवोमा सुकेशी चापरा शिवा ।
स्वाहा दिशस्तथा दीक्षा रोहणी च यथाक्रमम् ॥८॥
सूर्यादीनां नरश्रेष्ठ रुद्राद्यैर्नामभिः सह ।
पत्न्यः स्मृता महाभाग तदपत्यानि मे श्रृणु ॥९॥
येषां सूतिप्रसूतिर्वा इदमापूरितं जगत् ॥१०॥
शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः ।
स्कन्दः सर्गोऽथ सन्तानो बुधश्चानुक्रमात् सुताः ॥११॥
एवंप्रकारो रुद्रोऽसौ सतीं भार्य्यामविन्दत ।
उपयेमे दुहितरं दक्षस्यैव प्रजापतेः ॥१२॥
दक्षकोपाच्च तत्याज सा सती स्वं कलेवरम् ।
हिमवद्दुहिता साभून्मेनायां द्विजसतम ॥१३॥

उपयेमे पुनश्चोमामनन्यां भगवान् भवः ॥१४॥
देवौ धातृविधातारौ भृगोः ख्यातिरसूयत ।
श्रियं च देवदेवस्य पत्नी नारायणस्य या ॥१५॥

मैत्रेय उवाच

क्षीराब्धौ श्रीः समुत्पन्ना श्रूयतऽमृतमन्थने ।
भृगोः ख्यात्यां समुत्पन्नेत्येतदाह कथं भवान् ॥१६॥

पराशर उवाच

नित्यैव सा जगन्मातां विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥१७॥
अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः ।
बोधो विष्णुरियं बुद्धिर्धर्म्मोऽसौ सत् क्रिया त्वियम् ॥१८॥
स्रष्टा विष्णुरियं सृष्टिः श्रीर्भूमिर्भूधरो हरिः ।
सन्तोषो भगवान् लक्ष्मीस्तुष्टिर्मैत्रेय शाश्वती ॥१९॥
इच्छा श्रीर्भगवान् कामो यज्ञोऽसौ दक्षिणा तु सा ।
आज्याहुतिरसौ देवी पुरोडाशो जनार्द्दनः ॥२०॥
पत्नीशाला मुने लक्ष्मीः प्राग्वंशो मधुसूदनः ।
चितिर्लक्ष्मीर्हरिर्यूप इध्मा श्रीर्भगवान् कुशः ॥२१॥
सामस्वरूपी भगवानुद्गीतिः कमलालया।
स्वाहा लक्ष्मीर्जगन्नाथो वासदेवो हुताशनः ॥२२॥
शङ्करो भगवाञ्छौरिर्भूतिर्गौरी द्विजोत्तम ।
मैत्रेय केशवः सूर्य्यस्तत्प्रभा कमालालया ॥२३॥
विष्णुः पितृगणः पद्मा स्वधा शाश्वतपुष्टिदा ।
द्यौः श्रीः सर्वात्मको विष्णुरवकाशोऽतिविस्तरः ॥२४॥
शशाङ्कः श्रीधरः कान्तिः श्रीस्तस्थैवानपायिनी ।
धृतिर्लक्ष्मीर्जगच्चेष्टा वायुः सर्वत्रगो हरिः ॥२५॥
जलधिर्द्विज गोविन्दस्तद्वेला श्रीर्महामते ।
लक्ष्मीस्वरूपमिन्द्राणी देवेन्द्रो मधुसूदनः ॥२६॥
यमश्चक्रधरः साक्षाद् धूमोर्णा कमलालया ।

ऋद्धिः श्रीः श्रीधरो देवः स्वयमेव धनेश्वरः ॥२७॥
गौरी लक्ष्मीर्महाभागा केशवो वरुणः स्वयम् ।
श्रीर्देवसेना विप्रेन्द्र देवसेनापतिर्हरिः ॥२८॥
अवष्टम्भो गदापाणिः शक्तिर्लक्ष्मीर्द्विजोत्तम ।
काष्ठा लक्ष्मीर्निमेषोऽसौ मुहूर्त्तोऽसौ कला तु सा ॥२९॥
ज्योत्स्ना लक्ष्मीः प्रदीपोऽसौ सर्वः सर्वेश्वरो हरिः ।
लताभूता जगन्माता श्रीविष्णुर्द्रुमसंस्थितः ॥३०॥
विभावरी श्रीर्दिवसो देवश्चक्रगदाधरः ।
वरप्रदो वरो विष्णर्वधूः पद्मवनालया ॥३१॥
नदस्वरूपी भगवाञ्छ्रीर्नदीरूपसंस्थितिः ।
ध्वजश्च पुण्डरीकाक्षः पताका कमालालया ॥३२॥
तृष्णा लक्ष्मीर्जगत्स्वामी लोभो नारायणः परः ।
रति-रागौ च धर्मज्ञ लक्ष्मीर्गोविन्द एव च ॥३३॥
किञ्चातिबहुनोक्तेन सङ्क्षेपेणेदमुच्यते ॥३४॥
देवतिर्य्यङ्मनुष्यादौ पुन्नाम्नि भगवान् हरिः ।
स्त्रीनाम्नि लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥३५॥

इति श्रीविष्णुपुराणे प्रथमांशे अष्टमोऽध्यायः ॥८॥



आदितः श्लोकानां समष्ट्यङ्काः-३३७+३५=३७२





## ॥ अथ नवमोऽध्यायः ॥
## (इन्द्रं प्रति दुर्वाससः शापः, ब्राह्मणः समीपे देवानां गमनम्, समुद्रमन्थनम्, इन्द्रस्य लक्ष्मीस्तुतिश्च)

### पराशर उवाच

इदञ्च श्रृणु मैत्रेय यत् पृष्टोऽहमिह त्वया ।
श्रीसम्बद्धं मया ह्येतच्छ्रुतमासीन्मरीचितः ॥१॥
दुर्वासाः शङ्करस्यांशश्चचार पृथिवीमिमाम् ।
स ददर्श स्रजं दिव्यामृषिर्विद्याधरीकरे ॥२॥
सन्तानकानामखिलं यस्या गन्धेन वासितम् ।
अतिसेव्यमभूद् ब्रह्मन् तद्वनं वनचारिणाम् ॥३॥
उन्मत्तव्रतधृग् विप्रस्तां दृष्ट्वा शोभनां स्रजम् ।
तां ययाचे वरारोहां विद्याधरवधूं ततः ॥४॥
याचिता तेन तन्वङ्गी मालां विद्याधराङ्गना ।
ददौ तस्मै विशालाक्षी सादरं प्रणिपत्य च ॥५॥
तामादायात्मनो मूर्ध्नि स्रजमुन्मत्तरूपधृक् ।
कृत्वा स विप्रो मैत्रय परिबभ्राम मेदिनीम् ॥६॥
स ददर्श तमायान्तमुन्मत्तैरावतस्थितम् ।
त्रैलोक्याधिपतिं देवं सह देवैः शचीपतिम् ॥७॥
तामात्मनः स शिरसः स्रजमुन्मत्तषट्पदाम् ।
आदायामरराजाय चिक्षेपोन्मत्तवन्मुनिः ॥८॥
गृहीत्वामरराजेन स्रगैरावतमूर्द्धनि ।
न्यस्ता रराज कैलासशिखरे जाह्नवी यथा ॥९॥
मदान्धकारिताक्षोऽसौ गन्धाकृष्टेन वारणः ।
करेणाघ्राय चिक्षेप तां स्रजं धरणीतले ॥१०॥
ततश्चुक्रोध भगवान् दुर्वासा मुनिसत्तमः ।
मैत्रेय देवराजं तं क्रुद्धश्चैतदुवाच ह ॥११॥

### दुर्वासा उवाच

ऐश्वर्यमत्त दुष्टात्मन्नतिस्तब्धोऽसि वासव ।

श्रियो धाम स्रजं यस्त्वं मद्दत्तां नाभिनन्दसि ॥१२॥
प्रसाद इति नोक्तं ते प्रणिपातपुरः सरम् ।
हर्षोत्फुल्लकपोलेन न चापि शिरसा धृता ॥१३॥
मया दत्तामिमां मालां यस्मान्न बहु मन्यसे ।
त्रैलोक्यश्रीरतो मूढ विनाशमुपयास्यति ॥१४॥
मां मन्यतेऽन्यैः सदृशं न्यूनं शक्र भवान् द्विजैः ।
अतोऽवमानमस्माकं मानिना भवता कृतम् ॥१५॥
मद्दत्ता भवता यस्मात् क्षिप्ता माला महीतले ।
तस्मात् प्रनष्टलक्ष्मीकं त्रैलोक्यं ते भविष्यति ॥१६॥
यस्य सञ्जातकोपस्य भयमेति चराचरम् ।
तं त्वं मामतिगर्वेण देवराजावमन्यसे ॥१७॥

पराशर उवाच

महेन्द्रो वारणस्कन्धादवतीर्य्य त्वरान्वितः ।
प्रसादयामास तदा दुर्वाससमकल्मषम् ॥१८॥
प्रसाद्यमानः स तदा प्रणिपातपुरः सरम् ।
प्रत्युवाच सहस्राक्षं दुर्वासा मुनिसत्तमः ॥१९॥

दुर्वासा उवाच

नाहं कृपालुहृदयो न च मां भजते क्षमा ।
अन्ये ते मुनयः शक्र दुर्व्वाससमवेहि माम् ॥२०॥
गौतमादिभिरन्यैस्त्वं गर्वमापादितो मुधा ।
अक्षान्तिसारसर्वस्वं दुर्वाससमवेहि माम् ॥२१॥
वसिष्ठाद्यैर्दयासारैः स्तोत्रं कुर्वद्भिरुच्चकैः ।
गर्वं गतोऽसि येनैवं मामप्यद्यावमन्यसे ॥२२॥
ज्वलज्जटाकलापस्य भृकुटीकुटिलं मुखम् ।
निरीक्ष्य कस्त्रिभुवने मम यो न गतो भयम् ॥२३॥
नाहं क्षमिष्ये बहुना किमुक्तेन शतक्रतो ।
विडम्बनामियां भूयः करोष्यनुनयात्मिकाम् ॥२४॥

## पराशर उवाच

इत्युक्त्वा प्रययौ विप्रो देवराजोऽपि तं पुनः ।
आरुह्यैरावतं ब्रह्मन् प्रययावमरावतीम् ॥२५॥
ततः प्रभृति निःश्रीकं सशक्रं भुवनत्रयम् ।
मैत्रैयासीदपध्वस्तं संक्षीणौषधिवीरुधम् ॥२६॥
न यज्ञाः समवर्त्तन्ते न तपस्यन्ति तापसाः ।
न च दानादिधर्मेषु मनश्चक्रे तदा जनः ॥२७॥
निःसत्त्वाः सकला लोका लोभायु पहतेन्द्रियाः ।
स्वल्पेऽपि हि बभूवुस्ते साभिलाषा द्विजोत्तम ॥२८॥
यतः सत्त्वं ततो लक्ष्मीः सत्त्वं भूत्यनुसारि च ।
निःश्रीकाणां कुतः सत्त्वं विना तेन गुणाः कुतः ॥२९॥
बलशौर्य्याद्यभावश्च पुरुषाणां गुणैर्विना ।
लङ्घनीयः समस्तस्य बलशौर्य्य विवर्जितः ॥३०॥
भवत्यपध्वस्तमतिर्लङ्घितः प्रथितः पुमान् ॥३१॥
एवमत्यन्तनिःश्रीके त्रैलोक्ये सत्त्ववर्ज्जिते ।
देवान् प्रति बलोद्योगं चक्रुर्दैतेयदानवाः ॥३२॥
लोभाभिभूता निःश्रीका दैत्याः सत्त्वविवर्जिताः ।
श्रिया विहीनैर्निःसत्त्वैर्देवैश्चक्रुस्ततो रणम् ॥३३॥
विजितास्त्रिदशा दैत्यैरिन्द्राद्याः शरणं ययुः ।
पितामहं महाभागं हुताशनपुरोगमाः ॥३४॥
यथावत् कथितो देवैर्ब्रह्मा प्राह ततः सुरान् ।

## ब्रह्मोवाच

परावरेशं शरणं ब्रजध्वमसुरार्द्दनम् ॥३५॥
उत्पत्तिस्थितिनाशानामहेतुं हेतुमीश्वरम् ।
प्रजापतिपतिं विष्णुमनन्तमपराजितम् ॥३६॥
प्रधानपुंसोरजयोः कारणं कार्यभूतयोः ।
प्रणतार्त्तिहरं विष्णुं स वः श्रेयो विधास्यति ॥३७॥

## पराशर उवाच

एवमुक्त्वा सुरान्सर्वान् ब्रह्मा लोकपितामहः ।
क्षीरोदस्योत्तरं तीरं तैरेव सहितो ययौ ॥३८॥
स गत्वा त्रिदशैः सर्व्वैः समवेतः पितामहः ।
तुष्टाव वाग्भिरिष्टाभिः परापरपतिं हरिम् ॥३९॥

ब्रह्मोवाच

नमाम सर्वं सर्वेशमनन्तमजमव्ययम् ।
लोकधामधराधारमप्रकाशमभेदिनम् ॥४०॥
नारायणमणीयांसमशेषाणामणीयसाम् ।
समस्तानां गरिष्ठं यद् भूरादीनां गरीयसाम् ॥४१॥
यत्र सर्वं यतः सर्वमुत्पन्नं मत्पुरःसरम् ।
सर्वभूतश्च यो देवः पराणामपि यः परः ॥४२॥
परः परस्मात् पुरुषात् परमात्मस्वरूपधृक् ।
योगिभिश्चिन्त्यते योऽसौ मुक्तिहेतुर्मुमुक्षुभिः ॥४३॥
सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।
स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु ॥४४॥
कलाकाष्ठानिमेषादिकालसूत्रस्य गोचरे ।
यस्य शक्तिर्न शुद्धस्य प्रसीदतु स नो हरिः ॥४५॥
प्रोच्यते परमेशो हि यः शुद्धोऽप्युपचारतः ।
प्रसीदतु स नो विष्णुरात्मा यः सर्वदेहिनाम् ॥४६॥
यः कारणञ्च कार्यञ्च कारणस्यापि कारणम् ।
कार्यस्यापि च यः कार्य प्रसीदतु स नो हरिः ॥४७॥
कार्यकार्यस्य यः कार्यं तत्कार्यस्यापि यः स्वयम् ।
तत्कार्यकार्यभूतो यस्ततश्च प्रणताः स्म तम् ॥४८॥
कारणां कारणस्यापि तस्य कारणकारणम् ।
तत्कारणानां हेतुं त्वां प्रणताः स्म सुरेश्वरम् ॥४९॥
भोक्तारं भोज्यभूतञ्च स्रष्टारं सृष्टमेव च ।
कार्यं कर्म्मस्वरूपं तं प्रणताः स्म परं पदम् ॥५०॥
विशुद्धं बोधनं नित्यमजमक्षयमव्ययम् ।
अव्यक्तमविकारं यत् तद्विष्णोः परमं पदम् ॥५१॥

न स्थूलं न च सूक्ष्मं यन्न विशेषणगोचरम् ।
तत्पदं परमं विष्णोः प्रणमामः सदाऽमलम् ॥५२॥
यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता ।
परब्रह्मस्वरूपं यत् प्रणमामस्तमव्ययम् ॥५३॥
यद् योगिनः सदोद्युक्ताः पुण्यपापक्षयेऽक्षयम् ।
पश्यन्ति प्रणवे चिन्त्यं तद्विष्णोः परमं पदम् ॥५४॥
यन्न देवा न मुनयो न चाहं न च शङ्करः ।
जानन्ति परमेशस्य तद्विष्णोः परमं पदम् ॥५५॥
शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवादिकाः ।
भवन्त्यभूतपूर्वस्य तद्विष्णोः परमं पदम् ॥५६॥
सर्वेश सर्वभूतात्मन् सर्व सर्वाश्रयाच्युत ।
प्रसीद विष्णो भक्तानां व्रज नो दृष्टिगोचरम् ॥५७॥

पराशर उवाच

इत्युदीरितमाकर्ण्य ब्रह्मणस्त्रिदशास्ततः ।
प्रणम्योचुः प्रसीदेति व्रज नो दृष्टिगोचरम् ॥५८॥
यन्नायं भगवान् ब्रह्मा जानाति परमं पदम् ।
तन्नाताः स्म जगद्धाम तव सर्वं गताच्युत ॥५९॥
इत्यन्ते वचसस्तेषां देवानां ब्रह्मणस्तथा ।
ऊचुर्देवर्षयः सर्वे बृहस्पतिपुरोगमाः ॥६०॥
आद्यो यज्ञपुमानिड्यो यः सर्वेषाञ्च पूर्वजः ।
तं नताः स्म जगत्स्रष्टुः स्रष्टारमविशेषणम् ॥६१॥
भगवन् भूतभव्येश यज्ञमूर्त्तिधराव्यय ।
प्रसीद प्रणतानां त्वं सर्वेषां देहि दर्शनम् ॥६२॥
एष ब्रह्मा तथैवायं सहरुद्रैस्त्रिलोचनः ।
सर्वादित्यैः समं पूषा पावकोऽयं सहाग्निभिः ॥६३॥
अश्विनौ वसवश्चेमे सर्वे चैते मरुद्गणाः ।
साध्या विश्वे तथा देवा देवेन्द्रश्चायमीश्वरः ॥६४॥
प्रणामप्रवणा नाथ दैत्यसैन्यपराजिताः ।
शरणं त्वामनुप्राप्ताः समस्ता देवतागणाः ॥६५॥

पराशर उवाच

एव संस्तूयमानस्तु भगवाञ्छङ्खचक्रधृक् ।
जगाम दर्शनं तेषां मैत्रेय परमेश्वरः ॥६६॥
तं दृष्ट्वा ते तदा देवाः शङ्खचक्रगदाधरम् ।
अपूर्वरूपसंस्थानं तेजसां राशिमूर्ज्जितम् ॥६७॥
प्रणम्य प्रणताः पूर्वं संक्षोभस्तिमितेक्षणाः ।
तुष्टुवुः पुण्डरीकाक्षं पितामहपुरोगमाः ॥६८॥

देवा ऊचुः

नमो नमोऽविशेषस्त्वं त्वं ब्रह्मा त्वं पिनाकधृक् ।
इन्द्रस्त्वमग्निः पवनो वरुणः सविता यमः ॥६९॥
वसवो मरुतः साध्या विश्वेदेवगणा भवान् ।
योऽयं तवागतो देव समीपं देवतागणः ॥
स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् ॥७०॥
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः प्रजापतिः ।
विद्यावेद्यञ्च सर्वात्मंस्त्वन्मयञ्चाखिलं जगत् ॥७१॥
त्वामत्र शरणं विष्णो प्रयाता दैत्यनिर्ज्जिताः ।
वयं प्रसीद सर्वात्मंस्तेजसाप्याययस्व नः ॥७२॥
तावदार्त्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् ।
यावन्नायाति शरणं त्वामशेषाघनाशनम् ॥७३॥
त्वं प्रसादं प्रसन्नात्मन् प्रपन्नानां कुरुष्व नः ।
तेजसां नाथ सर्वेषां स्वशक्त्याप्यायनं कुरु ॥७४॥

पराशर उवाच

एवं संस्तूयमानस्तु प्रणतैरमरैर्हरिः ।
प्रसन्नदृष्टिर्भगवानिदमाह स विश्वकृत् ॥७५॥

श्रीभगवानुवाच

तेजसो भवतां देवाः करिष्याम्युपबृंहणम् ।
वदाम्यहं यत् क्रियतां भवद्भिस्तदिदं सुराः ॥७६॥
आनीय सहिता दैत्यैः क्षीराब्धौ सकलौषधीः ।
प्रक्षिप्यात्रामृतार्थं ताः सकला दैत्यदानवैः ॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥७७॥
मथ्यताममृतं देवाः सहाये मव्यवस्थिते ॥७८॥
सामपूर्वञ्च दैतेयास्तत्र साहाय्यकर्मणि ।
सामान्यफलभोक्तारो यूयं वाच्या भविष्यथ ॥७९॥
मथ्यमाने च तत्राब्धौ यत् समुत्पद्यतेऽमृतम् ।
तत्पानाद् बलिनो यूयममराश्च भविष्यथ ॥८०॥
तथा चाहं करिष्यामि यथा त्रिदशविद्विषः ।
न प्राप्स्यन्त्यमृतं देवाः केवलं क्लेशभागिनः ॥८१॥

## पराशर उवाच

इत्युक्त्वा देवदेवेन सर्व एव ततः सुराः ।
सन्धानमसुरैः कृत्वा यत्नवन्तोऽमृतेऽभवन् ॥८२॥
नानौषधीः समानीय देवदैतेयदानवाः ।
क्षिप्त्वा क्षिराब्धिपयसि शरदभ्रामलत्विषि ॥८३॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा च वासुकिम् ।
ततो मथितुमारब्धा मैत्रैय तरसामृतम् ॥८४॥
विबुधाः सहिताः सर्वे यतः पुच्छं ततः कृताः ।
कृष्णेन वासुकेर्दैत्याः पूर्वकाये निवेशिताः ॥८५॥
ते तस्य फणःनिश्वासवह्निनापहतत्विषः ।
निस्तेजसोऽसुराः सर्वे बभुवुरमितद्युते ॥८६॥
तेनैव मुखनिःश्वासवायुनास्तबलाहकैः ।
पुच्छप्रदेशे वर्षद्भिस्तथा चाप्यायिताः सुराः ॥८७॥
क्षीरोदमध्ये भगवान् कूर्म्मरूपी स्वयं हरिः ।
मन्थनाद्रेरधिष्ठानं भ्रमतोऽभून्महामुने ॥८८॥
रूपेणान्येन देवानां मध्ये चक्रगदाधरः ।
चकर्ष भोगिराजानं दैत्यमध्येऽपरेण च ॥८९॥
उपर्य्याक्रान्तवान् शैलं बृहद्रूपेण केशवः ।

तथापरेण मैत्रेय यन्न दृष्टं सुरासुरैः ॥९०॥
तेजसा नागराजानं तथाप्यायितवान् हरिः ।
अन्येन तेजसा देवान् उपबृंहितवान् विभुः ॥९१॥
मथ्यमाने ततस्तस्मिन् क्षीराब्धौ देवदानवैः ।
हविर्धामाभवत् पूर्वं सुरभिः सुरपूजिता ॥९२॥
जग्मुर्म्मुदं ततो देवा दानवाश्च महामुने ।
व्याक्षिप्तचेतसश्चैव बभूवुस्तिमितेक्षणाः ॥९३॥
किमेतदिति सिद्धानां दिवि चिन्तयतां ततः ।
बभूव वारुणी देवी मदाघूर्णितलोचना ॥९४॥
कृतावर्तात् ततस्तस्मात् क्षीरोदाद् वासयन् जगत् ।
गन्धेन पारिजातोऽभूद् देवस्त्रीनन्दस्तरुः ॥९५॥
रूपौदार्य्यगुणोपेतस्ततश्चाप्सरसां गणः ।
क्षीरोदधेः समुत्पन्नो मैत्रेय परमाद्भुतः ॥९६॥
ततः शीतांशुरभवज्जगृहे त्वं महेश्वरः ।
जगृहुश्च विषं नागाः क्षीरोदाच्च समुत्थितम् ॥९७॥
ततो धन्वन्तरिर्देवः श्वेताम्बधरः स्वयम् ।
विभ्रत् कमण्डलुं पुर्णममृतस्य समुत्थितः ॥९८॥
ततः स्वस्थमनस्कास्ते सर्वे दैतेयदानवाः ।
बभूवुर्मुदिताः सर्वे मैत्रेय मुनिभिः सह ॥९९॥
ततः स्फुरत्कान्तिमती विकासिकमले स्थिता ।
श्रीर्देवी पयसस्तस्मादुत्थिता धृतपङ्कजा ॥१००॥
तां तुष्टुवुर्मुदा युक्ताः श्रीसूक्तेन महर्षयः ॥१०१॥
विश्वावसुमुखास्तस्या गन्धर्वाः पुरतो जगुः ।
घृताचीप्रमुखा ब्रह्मन् ननृतुश्चाप्सरोगणाः ॥१०२॥
गङ्गाद्याः सरितस्तोयैः स्नानार्थमुपतस्थिरे ।
दीग्गजा हेमपात्रस्थमादाय विमलं जलम् ॥
स्नापयाञ्चक्रिरे देवीं सर्वलोकमहेश्वरीम् ॥१०३॥
क्षीरोदो रुपधृक् तस्यै मालामम्लानपङ्कजाम् ।
ददौ विभूषणान्यङ्गे विश्वकर्मा चकार च ॥१०४॥
दिव्यमाल्याम्बरधरा स्नाता भूषणभूषिता ।
पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेः ॥१०५॥
तया विलोकिता देवा हरिवक्षःस्थलस्थया ।

लक्ष्म्या मैत्रेय सहसा परां निर्वृतिमागताः ॥१०६॥
उद्वेगं परमं जग्मुर्दैत्या विष्णुपराङ्मुखाः ।
त्यक्ता लक्ष्म्या महाभाग विप्रचित्तिपुरोगमाः ॥१०७॥
ततस्ते जगृहुर्दैत्या धन्वन्तरिकरे स्थितम् ।
कमण्डलुं महावीर्या यत्रास्ते तद् द्विजामृतम् ॥१०८॥
मायया लोभयित्वा तान् विष्णुः स्त्रीरूपमास्थितः ।
दानवेभ्यस्तदादाय देवेभ्यः प्रददौ विभुः ॥१०९॥
ततः पपुः सुरगणाः शक्राद्यास्तत् तदामृतम् ।
उद्यतायुधनिस्त्रिंशा दैत्यास्तांश्च समभ्ययुः ॥११०॥
पीतेऽमृते च बलिभिर्देवैर्दैत्यचमूस्तदा ।
बध्यमाना दिशो भेजे पातालं च विवेश वै ॥१११॥
तदा देवा मुदा युक्ताः शङ्खचक्रगदाभृतम् ।
प्रणिपत्य यथापूर्वं अशासत त्रिविष्टपम् ॥११२॥
ततः प्रसन्नभाः सूर्य्यः प्रययौ स्वेन वर्त्मना ।
ज्योतींषि च यथामार्गं प्रययुर्मुनिसत्तम ॥११३॥
जज्वाल भगवांश्चोच्चैश्चारुदीप्तिर्विभावसुः ।
धर्मे च सर्वभूतानां तदा मतिरजायत ॥११४॥
त्रैलोक्यञ्च श्रिया जुष्टं बभूव द्विजसत्तम ।
शक्रश्च त्रिदशश्रेष्ठः पुनः श्रीमानजायत ॥११५॥
सिंहासनगतः शक्रः सम्प्राप्य त्रिदिवं पुनः ।
देवराज्ये स्थितो देवीं तुष्टावाब्जकरां ततः ॥११६॥

इन्द्र उवाच

नमस्ते सर्वभूतानां जननीमब्जसम्भवाम् ।
श्रियमुन्निद्रपद्माक्षीं विष्णोर्वक्षःस्थलस्थिताम् ॥११७॥
पद्मालयां पद्मकरां पद्मपत्रनिभेक्षणाम् ।
वन्दे पद्ममुखीं देवीं पद्मनाभप्रियामहम् ॥११८॥
त्वं सिद्धिस्त्वं सुधा स्वाहा स्वधा त्वं लोकपावनि ।
सन्ध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती ॥११९॥
यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥१२०॥

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्त्वमेव च ।
सौम्यासौम्यैर्जगद्रूपैस्त्वयैत्तद्देवि पूरितम् ॥१२१॥
का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः ।
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः ॥१२२॥
त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ।
विनष्टप्रायमभवत् त्वयेदानीं समेधितम् ॥१२३॥
दाराः पुत्रास्तथागारं सुहृद् धान्यधनादिकम् ।
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ॥१२४॥
शरीरारोग्यमैश्वर्य्यमरिपक्षक्षयः सुखम् ।
देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥१२५॥
त्वं माता सर्वलोकानां देवदेवो हरिः पिता ।
त्वयैतद् विष्णुना चाद्य जगद्व्याप्तं चराचरम् ॥१२६॥
मा नः कोशं तथा गोष्ठं मा गृहं मा परिच्छदम् ।
मा शरीरं कलत्रञ्च त्यजेथाः सर्व्वपावनि ॥१२७॥
मा पुत्रान् मा सुहृद्वर्गं मा पशून् सा विभूषणम् ।
त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये ॥१२८॥
सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः ।
त्यज्यन्ते ते नराः सद्यः सन्त्यक्ता ये त्वयामले ॥१२९॥
त्वया विलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ।
कुलैश्वर्य्यैश्च मुह्यन्ते पुरुषा निर्गुणा अपि ॥१३०॥
स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ।
स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥१३१॥
सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ।
पराङ्मुखी जगद्धात्रि यस्य त्वं विष्णुवल्लभे ॥१३२॥
न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः ।
प्रसीद देवि पद्माक्षि मास्मांस्त्याक्षीः कदाचन ॥१३३॥

पराशर उवाच

एवं श्रीः संस्तुता सम्यक् प्राह देवी शतक्रतुम् ।
श्रृण्वतां सर्वदेवानां सर्वभूतस्थिता द्विज ॥१३४॥

तस्याप्युकल-गयत् विनतसंज्ञास्त्रयः पुत्रा बभूवुः ।
सुद्युम्नस्तु स्त्रीपूर्वकत्वाद् राज्यभागं न लेभे ॥१२॥
तत् पित्रा तु वशिष्ठवचनात् प्रतिष्ठानं नाम नगरं सुद्युम्नाय दत्तम् । तच्चासौ पुरूरवसे प्रादात् । पृषध्रस्तु गुरुगोवधात् शूद्रत्वमगमत् ॥१३॥
करुषात् कारूषा महाबलाः क्षत्रिया बभूवुः ॥१४॥
नाभागो नेदिष्ठपुत्रस्तु वैश्यतामगमत् ॥१५॥
तस्माद् भलन्दनः पुत्रोऽभवत् । भलन्दनाद्वत्सप्रि-रुदारकीर्तिः, वत्सप्रेः प्रांशुरभवत्, प्रजानिश्च प्रांशोरेकोऽभवत्, ततश्च खनित्रः, तस्माच्च क्षुपः, क्षुपाच्च अतिबलपराक्र-मोऽविविंशोऽभवत् । ततो विविंशः, तस्माच्च खनीनेत्र, ततश्चातिविभूतिः, अतिविभूते-र्भुरिबलपराक्रमः करन्धमः पुत्रोऽभवत् । तस्मादप्यविक्षिः, अविक्षेरप्यतिबलः पुत्रो मरुत्तोऽभवत् ॥१६॥
यस्येमावद्यपि श्लोकौ गीयते-
मरुत्तस्य यथा यज्ञस्तथा कस्याभवद् भुविः ।
सर्वं हिरण्मयं यस्य यज्ञ वस्त्वतिशोभनम् ॥
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः (च) ।
मरुतः परिवेष्टारः सदस्याश्च दिवौकसः ॥१७॥
मरुत्तश्चक्रवर्ती नरिष्यन्तनामानं पुत्रमवाप । तस्माच्च दमः, दमस्य पुत्रो राज्यवर्द्धनो जज्ञे । राज्यवर्द्धनात् सुधृतिरभूत् । ततश्च नरः, तस्माच्च केवलः, केवलाद् बन्धुमान्, बन्धुमतो वेगवान्, वेगवतो बुधः, ततः तृणबिन्दुः, तस्याप्येका कन्या इलिबिला नाम । तश्चालम्बुषा नाम वराप्सरा तृणबिन्दुं भेजे । तस्यामस्य विशालो जज्ञे, यः पुरीं वैशालीं नाम निर्म्ममे । हेमचन्द्रश्च विशालस्य पुत्रोऽभवत् । तस्माच्च सुचन्द्रः, तत्तनयो धूम्राश्वः, तस्यापि सृञ्जयोऽभूत् । सृञ्जयात् सहदेवः, ततः कृशाश्वो नाम पुत्रोऽभूत् । सोमदत्तः कृशाश्वाज्जज्ञे, यो दशाश्वमेधानाजहार । तत्पुत्रश्च जनमेजयः, जनमेजयात् सुमतिः । एते वैशालका भूभृतः ॥१८॥
तृणविन्दोः प्रसादेन सर्वे वैशालका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तोऽतिधार्मिकाः ॥१९॥
शर्यातिः कन्या सुकन्या नामाभवत्, यामुपयेमे च्यवनः । आनर्त्तश्च नाम परम धार्म्मिकः शर्यातिपुत्रोऽभवत् । आनर्त्तस्यापि रेवतो नाम पुत्रो जज्ञे, योऽसावानर्त्तविषयं बुभुजे, पुरीञ्च कुशस्थलीमध्युवास । रेवतस्यापि रैवतः पुत्रः ककुद्मी नाम धर्मात्मा भ्रातृशतज्येष्ठोऽभवत् । तस्य च रेवती नाम कन्या । तामादाय कस्येयमर्हतीति भगवन्तमब्जयोनिं प्रष्टुं ब्रह्मलोकं जगाम । तावच्च ब्रह्मणोऽन्तिके हाहाहूहूसंज्ञाभ्यां गन्धर्वाभ्यामतितानं नाम दिव्यं गान्धर्वमगीयत ॥२०॥

तावच्च त्रिमार्गपरिवर्त्तैरनेकयुगपरिवृत्ति तिष्ठन्नपि रैवतकः श्रृण्वन् मुहूर्त्तमिव मेने ॥२१॥ गीतावसाने भगवन्तमब्जयोनिं प्रणम्य रैवतकः कन्यायोग्यं वरमपृच्छत् । तञ्चाह भगवान्, कथय योऽभिमतस्ते वर इति । पुनश्च प्रणम्य भगवते यथाभिमतानात्मनः स वरान् कथयामास, क एषां भगवतोऽभिमतः ? कस्मै कन्यामिमां प्रयच्छामीति । ततः किञ्चिदवनतशिराः सस्मितो भगवान् अब्जयोनिराह ॥२२॥

ये एते भवतोऽभिमताः नैतेषां साम्प्रतमपत्यापत्य-सन्ततिरप्यवनीतलेऽस्ति । बहूनि हि तवात्रैतद् गान्धर्वं श्रृण्वतश्चतुर्युगा यतीतानि । साम्प्रतं भूतलेऽष्टाविंशतितमस्य मनोश्चतुर्युगमतीतप्रायम्, आसन्नो हि तत्कलिः । अन्यस्मै कन्यारत्नमिदं भवतैकाकिनां देयम् ॥२३॥

भवतोऽपि मित्र-मन्त्रि-भृत्य-कलत्र-बन्धु-बल-कोषादयः कालेनैतेनात्यन्त मतीताः ॥ पुनरप्युत्पन्नसाध्वसः स राजा भगवन्तं प्रणम्य पप्रच्छ, भगवन् ! एवमवस्थिते ममेयं कस्मै देयेति । ततः स भगवान् किञ्चिदवनकन्धरं कृताञ्जलिभूतं सप्तलोकगुरुरब्ज-योनि-राह ॥२५॥

ब्रह्मोवाच

न ह्यादिमध्यान्तमजस्य यस्य विद्मो वयं सर्व्वगतस्य धातुः ।
न च स्वरूपं न परं स्वभावं न चैव सारं परमेश्वरस्य ॥२६॥
कलामुहूर्त्तादिमयश्च कालो न यद् विभूतेः परिणामहेतुः ।
अजन्मनाशस्य समस्तमूर्त्तेरनामरूपस्य सनातनस्य ॥२७॥
यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी ।
क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्मात् ॥२८॥
मद्रूपमास्थाय सृजत्यजो यः स्थितौ च योऽसौ पुरुषस्वरूपी ।
रुद्रस्वरूपेण च योऽत्ति विश्वं धत्ते तथानन्तवपुः समस्तम् ॥२९॥
शक्रादिरूपी परिपाति विश्वमर्केन्दुरूपश्च तमो हिनस्ति ।
पाकाय योऽग्नित्वमुपेत्य लोकान् बिभर्ति पृथ्वीवपुरव्ययात्मा ॥३०॥
चेष्टां करोति श्वसनस्वरूपी लोकस्य तृप्तिञ्च जलस्वरूपी ।
ददाति विश्वस्थितिसंस्थितस्तु सर्वावकाशञ्च नभः स्वरूपी ॥३१॥
यः सृज्यते सर्गकृदात्मनैव यः पाल्यते पालयिता च देवः ।
विश्वात्मनः संह्रियतेऽन्तकारी पृथङ् न यस्यास्य च योऽव्ययात्मा ॥३२॥
यस्मिन् जगद् यो जगदेतदाद्यो यश्चाश्रितोऽस्मिन् जगति स्वयम्भूः ।

स सर्वभूतप्रभवो धरित्र्यां स्वांशेन विष्णुर्नृपतेऽवतीर्णः ॥३३॥
कुशस्थली या तव भूप ! रम्या पुरी पुराभूदमरावतीव ।
सा द्वारका सम्प्रति तत्र चास्ते स केशवांशो बलदेवनामा ॥३४॥
तस्मै त्वमेनां तनयां नरेन्द्र ! प्रयच्छ मायामनुजाय जायाम् ।
श्लाघ्यो वरोऽसौ तनया तवेयं स्त्रीरत्नभूता सदृशो हि योगः ॥३५॥

## पराशर उवाच

इतीरितोऽसौ कमलोद्भवेन भुवं समासाद्य पतिः प्रजानाम् ।
ददर्श ह्रस्वान् पुरुषानशेषानत्यौजसः स्वल्पविवेकवीर्य्यान् ॥३६॥
कुशस्थलीं ताञ्च पुरीमुपेत्य दृष्टान्यरूपां प्रददौ स्वकन्याम् ।
सीरध्वजाय स्फटिकाचलाभ वक्षः स्थलायातुलधीर्नरेन्द्रः ॥३७॥
उच्चप्रमाणामति तामवेक्ष्य स्वलाङ्गलाग्रेण स तालकेतुः ।
विनामयामास ततश्च सापि बभूव सद्यो वनिता यथान्या ॥३८॥
तां रेवतीं रैवतभूपकन्यां सीरायुधोऽसौ विधिनोपयेमे ।
दत्त्वा च कन्यां स नृपो जगाम हिमाचलं वै तपसे धृतात्मा ॥३९॥

इति श्रीविष्णुपुराणे चतुर्थांऽशे प्रथमोऽध्यायः ॥

आदितः श्लोकानां समष्टचङ्काः-३,००८+३९=३,०४७



बलराम-रेवती

## ॥ अथ द्वितीयोऽध्यायः ॥
## (ईक्ष्वाकोर्जन्मः ककुथस्य युवनाश्वस्य सौभरेश्चोपाख्यानम्)

### पराशर उवाच

यावच्च ब्रह्मलोकात् ककुद्मी रैवतो नामाभ्येति तावत् पुणयजनसंज्ञा राक्षसास्तामस्य पुरीं कुशस्थलीं जघ्नुः ॥१॥
तावच्चास्य भ्रातृशतं पुण्यजनत्रासाद् दिशो भेजे । तदन्वयाश्च क्षत्रियाः सर्वदिक्षु अभवन् । धृष्टस्यापि धार्ष्टकं क्षत्रं समभवत् । नभागस्यात्मजो नाभागः, तस्याम्बरीषः, अम्बरीषस्यापि विरूपोऽभवत् । विरूपात् पृषदश्वो जज्ञे । ततश्च रथीतरः । तत्रायं श्लोकः ।
एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः ।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥२॥
क्षुवतश्च मनोरिक्ष्वाकुर्घ्राणतः पुत्रो जज्ञे । तस्य पुत्रशतप्रवरा विकुक्षिनिमिदण्डाख्या-स्त्रयः पुत्राः । शकुनिप्रमुखाः पञ्चाशत् पुत्रा उत्तरापथरक्षितारो बभूवुः । चत्वारिंशदष्टौ च दक्षिणापथे भूपालाः ॥३॥
स च इक्ष्वाकुरष्टकायामुत्पाद्य श्राद्धार्हमांसमानयेति विकुक्षिमाज्ञापयामास ॥४॥
स तथेति गृहीताज्ञो वनमभ्येत्यानेकान् मृगान् हत्वा अतिश्रान्तोऽतिक्षुतूपरीतो विकुक्षिरेकं शशमभक्षयत्, शेषञ्च मांसमानीय पित्रे निवेदयामास । इक्ष्वाकुणापि इक्ष्वाकुकुलाचार्य्यस्तत्प्रोक्षणाय वशिष्ठः प्रचोदितः प्राह अलमनेनामे-ध्येनामिषेण । दुरात्मनानेन ते पुत्रेण एतन्मांसमुपहतम्, यतोऽनेन शशको भक्षितः । ततश्चासौ विकुक्षिः गुरुणैवमुक्तः शशादसंज्ञामवाप, पित्रापि च परित्यक्तः । पितर्य्यु-परते चाखिलामेतां पृथ्वीं धर्मतः शशास । शशादस्य च परञ्जयो नाम पूत्रोऽभवत् ॥५॥ इदञ्चान्यत्, पुरा हि त्रेतायां दैवासुरमतीव भीषणं युद्धमासीत् । तत्र चातिबलिभिरसुरैरमराः पराजिता भगवन्तं विष्णुमाराधयाञ्चक्रुः ॥६॥
प्रसन्नश्च देवानामनादिनिधनः सकलजगत्परायणो नारायणः प्राह, ज्ञातमेव मया युष्माभिर्यदभिलषितम् तदर्थमिदं श्रूयताम् ॥७॥
परञ्जयो हि नाम शशादस्य च राजर्षेस्तनयः क्षत्रियवर्यः । तच्छरीरेहऽहमंशेन स्वयमेवावतीर्य्य तानशेषानसुरान् निहनिष्यामि, तद्भवद्भिः । परञ्जयोऽसुरवधार्थाय इह कार्योद्योगः कार्य्य इति । एतच्छ्रुत्वा प्रणम्य भगवन्तं विष्णुममराः परञ्जयसकाशमाजग्मुः ॥८॥
ऊचुश्चैनं भोः भोः क्षत्रियवर्य्य ! अस्माभिरभ्यर्थितेन भवता

अस्माकमरातिवधोद्यतानां साहायकं कृतमिच्छामः ॥९॥
तद्भवता अस्माकमभ्यागतानां प्रणयभङ्गो न कार्यः । इत्युक्तः परञ्जयः प्राह, सकलत्रैलोक्यनाथो योऽयं युष्माकमिन्द्रः शतक्रतुः, अस्य यद्यहं स्कन्धमारूढो युष्मदरातिभिः सह योत्स्ये, तदाहं भवतां सहायः । इत्याकर्ण्य समस्तदेवैरिन्द्रेण च बाढमित्येवमन्वीप्सितम् ॥१०॥
ततश्च शतक्रतोर्वृषभरूपधारिणः ककुत्स्थो हर्षसमन्वितो भगवतश्चराचरगुरोरच्युतस्य तेजसाप्यायितो देवासुरसङ्ग्रामे समस्तानेवासुरान् निजघान । यतश्च वृषभककुत्स्थेन राज्ञा निसूदितमसुरबलम्, ततश्चासौ ककुत्स्थ संज्ञामवाप ॥ ११॥
ककुत्स्थस्याप्यनेनाः पुत्रोऽभूत् । अनेनसः पृथुः, पृथोर्विश्वगश्वः, तस्य चार्द्रोऽभूत्, अर्द्रस्य युवनाश्वः तस्य श्रावस्तः, यः श्रावस्तीं पुरीं निवेशयामास । श्रावस्तस्य बृहदश्वः, बृहदश्वस्यापि कुवलयाश्वः, योऽसावुतङ्कस्य महर्षेरपकारिणां धुन्धुनामानमसुरं वैष्णवेन तेजताप्यायितः पुत्रसहस्रैरेकविंशतिभिः परिवृतो जघान, धुन्धुमारसंज्ञामवाप । तस्य च समस्ता एव पुत्रा धुन्धुमुखनिःश्वासाग्निना विप्लुष्टा विनेशुः ॥१२॥
दृढाश्व-चन्द्राश्व-कपिलाश्वास्त्रयः केवलमवशेषिताः । दृढाश्वाद् वार्यश्वः, तस्माद् निकुम्भः, निकुम्भात् संहताश्वः, ततश्च कृशाश्वः, तस्मात् प्रसेनजित्, ततो युवनाश्वोऽभवत् ।
तस्य चापुत्रस्यातिनिर्वेदाद् मुनीनामाश्रममण्डले निवसतः कृपालुभिस्तैर्मुनिभिरपत्यो- त्पादनाय इष्टिः कृता । तस्याञ्च मध्यरात्रे निवृत्तायां मन्त्रपूतजलपूर्णकलसं वेदिमध्ये निवेश्य ते मुनयः सुषुपुः ॥१३॥
तेषु च सुप्तेषु अतीव तृट्परीतः स भूपालस्तमाश्रमं विवेश, सुप्तांश्च तानृषीन् नैवोत्थापयामास ॥१४॥
तच्च कलसजलमपरिमेयमाहात्म्यं मन्त्रपूतं पपौ प्रबुद्धाश्च ऋषयः पप्रच्छुः, केनैतन्मन्त्रपूतं वारि पीतम् ? अत्र हि पीते राज्ञोऽस्य युवनाश्वस्य पत्नी महाबलपराक्रमं पुत्रं जनयिष्यति । इत्याकर्ण्य स राजा अजानता मया पीतमित्याह ॥१५॥
गर्भश्च युवनाश्वोदरेऽभवत् क्रमेण च ववृधे । प्राप्तसमयश्च दक्षिणं कुक्षिमवनीप- तेर्निर्भिद्य निश्चक्राम न चासौ राजा ममार ॥१६॥
जातो नामैष कं धास्यतीति ते मुनयः प्रोचुः । अथागम्य देवराडब्रवीत्-मामयं धास्यतीति । ततो मान्धाता नामतोऽभवत्, वक्त्रे, चास्य प्रदेशिनी देवराजेन न्यस्ता, तां पपौ । ताञ्चामृतस्राविणीमासाद्य पीत्वा चाह्नैव व्यवर्द्धत ।

स तु मान्धाता चक्रवर्ती सप्तद्वीपां मही बुभुजे । भवति चात्र श्लोकः-
यावत् सूर्य उदेति स्म यावच्च प्रतितिष्ठति ।
सर्वं तद् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥१७॥
मान्धाता च शशबिन्दुदुहितरं बिन्दुमतीमुपयेमे, पुरुकुत्समम्बरीषं मुचुकुन्दञ्च तस्यामपत्यत्रयमुत्पादयामास । पञ्चाशच्च दुहितरस्तस्य नृपतेर्बभूवुः ॥१८॥
बह्वृचश्च सौभरिर्नाम ऋषिरन्तर्जले द्वादशाब्दं काल-मुवास ॥१९॥
तत्र चान्तर्जले सम्मदनामातिबहुप्रजोऽतिप्रमाणो मीनाधिपतिरासीत् । तस्य पुत्र-पौत्र- दौहित्राः पार्श्वतः पृष्ठतोऽग्रतो वक्षः-पुच्छ-शिरसाञ्चोपरि भ्रमन्तस्तैनैव सहाहर्निशमतिनिर्वृता रेमिरे । स चापि तत्स्पर्शोपचीयमान-हर्षप्रकर्षो बहुप्रकारं तस्यर्षेः पश्यतस्तैरात्मज-पौत्र-दौहित्रादिभिः सहानुदिवसं बहुप्रकारं रेमे । अथान्तर्जलावस्थितः स सौभरिरै काग्रतासमाधान-मपहायानुदिनं तत् तस्य मत्स्यस्यात्मजपौत्रदौहित्रादिभिः सहातिरमणीयं ललितमवेक्ष्याचिन्तयत् ॥२०॥
अहो धन्योऽयमीदृशमपि अनभिमतं योन्यन्तरमवाप्य एभिरात्मजपौत्रादिभिः सह रममाणोऽतीवास्माकं स्पृहामुत्पादयति । वयमप्येवं पुत्रादिभिः सह रमयिष्यामः । इत्येवमभिसमीक्ष्य स तस्मादन्तर्जलान्निष्क्रम्य निर्वेष्टुकामः कन्यार्थं मान्धातारं राजानमगच्छत् ॥२१॥
अथागमनश्रवणसमनन्तरं चोत्थाय तेन राज्ञा सम्यग् अर्घ्यादिना पूजितः कृतासनपरिग्रहः सौभरिरुवाच ।
निर्वेष्टकामोऽस्मि नरेन्द्र कन्यां प्रयच्छ मे मा प्रणयं विभाङ्क्षीः ।
न ह्यर्थिनः कार्य्यवशाभ्युपेताः ककुत्स्थगोत्रे विमुखाः प्रयान्ति ॥२२॥
अन्येऽपि सन्त्येव नृपाः पृथिव्यां क्षमापाल येषां तनयाः प्रभूताः ।
किन्त्वर्थिनामर्थितदानदीक्षा कृतव्रतं श्लाघ्यमिदं कुलं ते ॥२३॥
शतार्द्धसङ्ख्यास्तव सन्ति कन्यास्तासां ममैकां नृपते ! प्रयच्छ ।
यत् प्रार्थनाभङ्गभयाद् बिभेमि तस्मादहं राजवरातिदुःखात् ॥२४॥

पराशर उवाच

इति ऋषिवचनमाकर्ण्य स राजा जराजर्ज्जरित देहं तमृषिमालोक्य प्रत्याख्यानकातरस्तस्माच्च भगवतः शापतो बिभ्यत् किञ्चिदधोमुखश्चिरं दध्यौ ।

ऋषिरुवाच
नरेन्द्र ! कस्मात् समुपैषि चिन्तामशक्यमुक्तं न मयात्र किञ्चित् ।

याऽवश्यदेया तनया तयैव कृतार्थता नो यदि किं न लब्धम् ॥२५॥

पराशर उवाच

अथ तस्य शापभीतः सप्रश्रयमुवाचासौ राजा ।

राजोवाच

भगवन् ! अस्मत्कुलस्थितिरियम्, य एव कन्यायाअभिरुचितोऽभिजनवान् वरः, तस्मै कन्या प्रदीयते । भगवद्याञ्चा चास्मन्मनोरथानामप्यगोचरवर्तिनी कथमप्येषा सञ्जाता । तदेवमवस्थिते न विद्मः किं कुर्म इति, तन्मया चिन्त्यत इत्यभिहिते तेन भूभुजा मुनिरचिन्तयत् । अहो अयमन्योऽस्मत्प्रत्याख्यानोपायः । वृद्धोऽयमनभिमतः स्त्रीणां किमुत कन्यानामिति अमुना सञ्चिन्त्यैवमभिहितम् ॥२६॥
एवमस्तु तथा करिष्यामीति सञ्चिन्त्य मान्धातारमुवाच ॥२७॥
यद्येवं तदादिश्यतामस्माकं प्रवेशाय कन्यान्तः पुरवर्षवरः ॥२८॥
यदि कन्यैव काचिन्मामभिलषति, तदाहं दारपरिग्रहं करिष्यामीति ।
अन्यथा चैतदलमस्माकमेतेनातीतकालारम्भेणोत्युक्त्वा विरराम ।
ततश्च मान्धात्रा मुनिशापशङ्कितेन कन्यान्तः पुरवर्षवरः समाज्ञप्तः ।
कन्यान्तः पुरं प्रविशन्नेव भगवानखिलसिद्ध-गन्धर्व-मनुष्येभ्योऽतिशयेन कमनीयं रूपमकरोत् । प्रवेश्य च तमृषिमन्तःपुरवर्षवरस्ताः कन्यकाः प्राह, भवतीनां जनयिता महाराजः समाज्ञापयति, अयमस्मान् ब्रह्मर्षिः कन्यार्थी समभ्यागतः, मया चास्य प्रतिज्ञातं, यद्यस्मत् कन्यका काचिद् भगवन्तं वरयति, तत्कन्यायाश्छन्दे नाहं परिपन्थानं करिष्यामि, इत्याकर्ण्य सर्वा एव ताः कन्यकाः सानुरागाः समन्मथाः क रेणव इवेभयूथपतिं तमृषिमहमहमिकया वरयाम्बभूवुरूचुश्च ॥२९॥
अलं भगिन्योऽहमिमं वृणोमि वृतो मया नैष तवानुरूपः ।
ममैव भर्त्ता विधिनैष सृष्टः सृष्टाहमस्योपशमं प्रयाहि ॥३०॥
वृतो मयायं प्रथमं मयायं गृहं विशन्नेव विहन्यसे किम् ।
मया मयेति क्षितिपात्मजानां तदर्थमत्यर्थकलिर्बभूव ॥३१॥
यदा तु सर्वाभिरतीव हार्द्दाद् धृतः स कन्याभिरनिन्द्यकीर्त्तिः ।
तदा स कन्याधिकृतो नृपाय यथावदाचष्ट विनम्रमूर्त्तिः ॥३२॥
तदवगमात् किमेतत् कथय, किं करोमीति किं मयाभिहितमित्याकुलमतिरनिच्छन्नपि कथमपि राजानुमेने । कृतानुरूपविवाहश्च महर्षिः सकला एव ताः कन्यकाः

स्वमाश्रममनयत् । तत्र चाशेष शिल्पिशिल्पप्रणेतारं विधातारमिवान्यं विश्वकर्म्माणमाहूय सकलकन्यानामेकैकस्याः प्रोत्फुल्लपङ्कजकूजत्कलहंसकारण्वादिविहमङ्गाभिरामजलाशयाः सोपवनाः सविकाशाः साधुशय्यासन परिच्छदाः प्रासादाः क्रियन्तामित्यादिदेश ॥३३॥

तच्च तथैवानुष्ठितमशेषशिल्पविशेषाचार्य्यस्त्वष्टा दर्शितवान् ॥३४॥

ततश्च परमर्षिणा सौभरिणाज्ञप्तस्तेषु गुहेष्वनपायानन्दनामा महानिधिरासाञ्श्चक्रे ॥३५॥

ततोऽनवरतभक्ष्यभोज्यलेह्याद्युपभोगैरागतानुगतभृत्यादीनहर्निशमशेषगृहेषु ताः क्षितीशदुहितरो भोजयामासुः ॥३६॥

एकदा तु दुहितृस्नेहाकृष्टहृदयः स महीपतिरतिदुःखितास्ताः सुखिता वा इति विचिन्त्य तस्य महर्षेराश्रममुपेत्य स्फुरदंशुमालां स्फटिकमयीं प्रासादमालामतिरम्योपवनजलाशयां ददर्श ॥३७॥

प्रविश्य चैकं प्रासादमात्मजां परिष्वज्य कृतासनपरिग्रहः प्रवृत्तस्नेहनयनाम्बुगर्भनयनोऽब्रवीत् ॥३८॥

अप्यत्र वत्से भवत्याः सुखमुत किञ्चिदसुखम् अपि ते महर्षिः स्नेहवान्, उत संस्मर्यतेऽस्मद्गृहवासस्य ? इत्युक्ता तत्तनया पितरमाह-तात ! अतिशयरमणीयः प्रासादोऽत्र-अतिमनोज्ञमुपवनम् अतिकलवाक्य विहगाभिरुताः प्रोत्फुल्लपद्माकरजलाशयाः, मनोऽनुकूलभक्ष्यभोज्यानुलेपन-वस्त्रभूषणादि-भोगोपभोगः, मृदूनि शयनानिः सर्व्वसम्पत्समवेतमेतद् गार्हस्थ्यम्, तथापि केन वा जन्मभूमिर्न स्मर्य्यते ? त्वत्प्रसादादिदमशेषमतिशोभनम् ॥३९॥

किन्तु एतन्ममैकं दुः स्वकारणम्, यदस्मद्भर्तास्मद्गेहान्न निःसरति । ममैव केवलमतिप्रीत्या समीपवर्त्ती, नान्यासां मद्भगिनीनाम् एवञ्च मम सहोदरा दुःखिता इत्येवमतिदुःखकारणम्, इत्युक्तस्तया द्वितीयं प्रासादमुपेत्य स्वतनयां परिष्वज्योपविष्टस्तथैव पृष्टवान् । तयापि तथैव सर्व्वमेतत् प्रासादाद्युपभोगसुखमाख्यातम् । ममैव केवलं पार्श्ववर्ती नान्यासामस्मद्भगिनीनामित्येवमादि श्रुत्वा समस्तप्रासादेषु राजा प्रविवेश । तनयां तनया तथैवापृच्छत्, ताभिश्च तथैवाभिहितः परितोषविस्मयनिर्भरविवशहृदयो भगवन्तं सौभरिमेकान्तावस्थितमुपेत्य कृतपूजोऽब्रवीत् ॥४०॥

दृष्टस्ते भगवन् सुमहानेष सिद्धिप्रभावो नैवंविधमन्यस्य कस्यचिदस्माभिर्विभूतिविलसितमुपलक्षितम् । कियदेतद्भगवंस्तपसः फलमित्यभिपूज्य तमृषिं तत्रैव तेन

ऋषिवर्य्येण सह किञ्चित् कालमभिमतोपभोगं वुभुजे, स्वपुरञ्च जगाम ॥४१॥
कालेन गच्छता तस्य राजतनयासु तासु पुत्रशतं सार्द्धमभवत् । तदनुदिनारूढस्नेहः स तत्रातीव ममताकृष्टहृदयोऽभवत् ॥४२॥
अप्येतेऽस्मत्पुत्राः कलभाषिणः पद्भ्यां गच्छेयुः । अत्येते यौवनिनो भवेयुः, अपि कृतदारानेतान् पश्येयम्, अप्येतेषां पुत्रा भवेयुः, अथ तत्पुत्रान् पुत्रसमन्नितान् पश्येयम् ? एवमादिमनोरथमनुदिनकालसम्पत्तिवृत्तिमवेत्यैतत् सञ्चिन्तयामास ॥४३॥
अहो मे मोहस्यातिविस्तारः ।
मनोरथानां न समाप्तिरस्ति वर्षायुतेनापि तथाब्दलक्षैः ।
पूर्णेषु पूर्णेषु पुनर्नवानाम् उत्पत्तयः सन्ति मनोरथानाम् ॥४४॥
पद्भ्यां गता यौवनिनश्च जाता दारैश्च संयोगमिताः प्रसूताः ।
दृष्टाः सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा ॥४५॥
द्रक्ष्यामि तेषामपि चेत् प्रसूतिं मनोरथो मे भविता ततोऽन्यः ।
पूर्णेऽपि तत्राप्यपरस्य जन्म निवार्य्यते केन मनोरथस्य ॥४६॥
आ मृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मया च ।
मनोरथासक्तिपरस्य चित्तं न जायते वै परमात्मसङ्गि ॥४७॥
स मे समाधिर्जलवासमित्र मत्स्यस्य सङ्गात् सहसैव नष्टः ।
परिग्रहः सङ्गकृतो ममायं परिग्रहोत्थाश्च महाविधित्साः ॥४८॥
दुःखं यदेवैकशरीरजन्म शतार्द्धसङ्ख्यं तदिदं प्रसूतम् ।
परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत् ॥४९॥
सुतात्मजैस्तत्तनयैश्च भूयो भूयश्च तेषां स्वपरिग्रहेण ।
विस्तारमेष्यत्यतिदुःखहेतुः परिग्रहो वै ममतानिधानम् ॥५०॥
चीर्णं तपो यत्तु जलाश्रयेण तस्यर्द्धिरेषा तपसोऽन्तरायः ।
मत्स्यस्य सङ्गादभवच्च यो मे सुतादिरागो मुषितोऽस्मि तेन ॥५१॥
निःसङ्गता मुक्तिपदं यतीनां सङ्गादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगोऽपि निपात्यतेऽधः सङ्गेन योगी किमुताल्पसिद्धिः ॥५२॥
अहं चरिष्यामि तथात्मनोऽर्थे परिग्रहग्राहगृहीतबुद्धिः ।
यथा हि भूयः परिहीणदोषो जनस्य दुःखैर्भविता न दुःखी ॥५३॥
सर्वस्य धातारमचिन्त्यरूपमणोरणीयांसमतिप्रमाणम् ।
सितासितञ्चेश्वरमीश्वराणामाराधयिष्ये तपसैव विष्णुम् ॥५४॥
तस्मिन्नशेषौजसि सर्वरूपिण्यव्यक्तविस्पष्टतनावनन्ते ।
ममाचलं चित्तमपेतदोषं सदास्तु विष्णावभवाय भूयः ॥५५॥
समस्तभूतादमलादनन्तात् सर्वेश्वरादन्यदनादिमध्यात् ।

यस्मान्न किञ्चित् तमहं गुरूणां परं गुरु संश्रयमेमि विष्णुम् ॥५६॥

इति श्रीविष्णुपुराणे चतुर्थांशे द्वितीयोऽध्यायः ॥२॥

आदितः श्लोकानां समष्ट्यङ्काः-३,०४७+५६=३,१०३



विश्वामित्रेण त्रिशङ्कुं सशरीरः स्वर्गमारोपितः

## ॥ अथ तृतीयोऽध्यायः ॥
## (सर्पविनाशमन्त्रवर्णनम्, अनरण्यवंशस्य सगरोत्पत्तेश्च कथनम्)

### पराशर उवाच

इत्यात्मानमात्मनैवाभिधायासौ सौभरिरपहाय पुत्रगृहासनपरिवर्हादिकमशेषमर्थजातं सकलभार्य्यासमवेतो वनं प्रविवेश । तत्राप्यनूदिनं वैखानसनिष्पाद्यमशेषं क्रियाकलापं निष्पाद्य क्षयितसकलपापः परिपक्कमनोवृत्तिरात्मन्यग्नीनारोप्य भिक्षुरभवत् ॥१॥

भगवति आसज्याखिलं कर्म्मकलापमजमविकार-ममरणादिधर्म्ममवाप परं परवता-मच्युतपदम् ॥२॥

इत्येतन्मान्धातुर्दुहितृसम्बन्धाद्व्याख्यातम् ॥३॥

यश्चैतत् सौभरिचरितमनुस्मरति पठति श्रृणोत्यवधारयति, तस्याष्टौ जन्मान्यसन्मति-रसद्धर्म्मो वा मनसोऽसन्मागाचरणमशेषहेयेषु वा ममत्वं न भवतीति । अतो मान्धातुः पुत्रसन्ततिरभिधीयते ॥४॥

अम्बरीषस्य मान्धातुस्तयस्य युवनाश्वः पुत्रोऽभूत् । तस्मात् हरितः, यतोऽङ्गिरसो हारिताः ॥५॥

रसातले च मौनेया नाम गन्धर्वाः षट्कोटिसङ्ख्यास्तैरशेषाणि नागकुलानि अपहृत-प्रधानरत्नाधिपत्यान्यक्रियन्त ॥६॥

तैश्च गन्धर्ववीर्य्यावधूतैरुरगैश्वरैर्भगवान् अशेषदेवेशस्तवश्रवणोन्मीलितोद्भिन्नपुण्डरी-कनयनो जलशयनो निद्रावसानाद् बिबुद्धः प्रणिपत्याभिहितो भगवन्! अप्यस्माक-मेतेभ्यो गन्धर्वेभ्यो भयमुपशममेष्यतीत्याह भगवानादिपुरुषः पुरुषोत्तमो यौवनाश्वस्य मान्धातुः पुरुकुत्सनामा पुत्रस्तमहमनुप्रविश्यैतानशेषदुष्टगन्धर्वानुपशमं नयिष्यामि ॥७॥

इत्याकर्ण्य भगवते कृतप्रणामाः पुनर्नागलोकमागताः पन्नगपतयो नर्म्मदाञ्च पुरुकुत्सानयनाय चोदयामासुः ॥८॥

सा चैन रसातले नीतवती । रसातलगतश्चासौ भगवत्तेजसाप्यायितात्मवीर्य्यः सकल-गन्धर्वान् जघान, पुनश्च स्वभवनमाजगाम । सकलपन्नगपतयश्च नर्म्मदायै वरं ददुः । यस्तेऽनुस्मरणसमवेतं नामग्रहणं करिष्यति, तस्य सर्पविषभयं न भविष्यतीति ॥९॥

अत्र श्लोकः ॥

नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ।
नमोऽस्तु नर्मदे तुभ्यं रक्ष मां विषसर्पतः ॥

इत्युच्चार्य्याहर्निशमन्धकारप्रवेशे वा न सर्पैर्दश्यते ॥१०॥
न चापि कृतानुस्मरणभुजो विषमपि सुभुक्तमुपघाताय भविष्यति ॥११॥
पुरुकुत्साय च भवतः सन्ततिविच्छेदो न भविष्यतीत्युरगपतयो वरं ददुः ॥१२॥
पुरुकुत्सो नर्मदायां त्रसदस्युमजीजनत् । त्रसदस्युसुतः सम्भूतः, ततोऽनरण्यः, तं रावणो दिग्विजये जघान । अनरण्यस्य पृषदश्वः, पृषदश्वस्य हर्य्यश्वः पुत्रोऽभवत् । ततश्च सुमनाः, तस्यापि त्रिधन्वनस्त्रय्यारुणः ॥१३॥
तस्मात् सत्यव्रतः । सोऽसौ त्रिशङ्कु संज्ञामवाप, चण्डालतामुपगतश्च द्वादशवार्षिक्यामनावृष्ट्यां विश्वामित्रकलत्रापत्यपोषणार्थं चाण्डालप्रतिग्रहपरिहरणाय च जाह्नवीतीरे न्यग्रोधे मृगमांसमनुदिनं बबन्ध ॥१४॥
परितुष्टेन च विश्वामित्रेण सशरीरः स्वर्गमारोपितः । त्रिशङ्कोर्हरिश्चन्द्रः, तस्मात् रोहिताश्वः, ततश्च हरितः, हरिताच्चञ्चुः, चञ्चोर्विजयसुदेवौ । रुरुको विजयात्, रुरुकस्य च वृकः, ततो बाहुः । योऽसौ हैहयतालजङ्घादिभिरवजितोऽन्तर्वल्न्या महिष्या सह वनं प्रविवेश ॥१५॥
तस्याश्च सपत्न्या गर्भस्तम्भनाय गरो दत्तः । तेनास्या गर्भः स सप्त वर्षाणि जठर एव तस्थौ । स च बाहुर्वृद्धभावादौर्वाश्रमसमीपे ममार ॥१६॥
सा तस्य भार्य्या चितां कृत्वा तमारोप्यानुमरणकृतनिश्चयाभूत् । अथैनामतीतानागतवर्त्तमानकालवेदी भगवानौर्वः स्वस्मादाश्रमान्निर्य्यायाब्रवीत् अलमेतेनासद्ग्रहेण, अखिलभूमण्डलपतिरतिवीर्य्यपराक्रमोऽनेकयज्ञकृदरातिपक्षक्षयकर्त्ता तवोदरे चक्रवर्ती तिष्ठति । मैवं मैवं साहसाध्यवसायिनी भवती भवतु, इत्युक्ता च सा तस्मादनुमरणनिर्बन्धाद् विरराम ॥१७॥
तेनैव भगवता स्वाश्रममानीयत । कतिपयदिनान्तरे च सहैव तेन गरणातितेजस्वी बालको जज्ञे । तस्यौर्वो जातकर्म्मादीकां क्रियां निष्पाद्य सगर इति नाम चकार । कृतोपनयनञ्चैनमौर्वा वेदान् शास्त्राण्यशेषाणि अस्त्रञ्चाग्नेयं भार्गवाख्यमध्यापयामास । उत्पन्नबुद्धिश्च मातरमपृच्छत्, अम्ब ! कथमत्र वयम् ? क्व वा तातः ? तातोऽस्माकं कः? इत्येवमादि पृच्छतः तन्माता सर्वमवोचत् । ततः पितृराज्यहरणामर्षितो हैहयतालजङ्घादिवधाय प्रतिज्ञामकरोत् । प्रायशश्च हैहयान् जघान । शकयवनकाम्बोजपारदपह्लवा हन्यमानास्तत्कुलगुरुं वशिष्ठं शरणं ययु ॥१८॥
अथैतान् वशिष्ठो जीवन्मृतकान् कृत्वा सगरमाह, वत्स ! वत्स ! अलमेभिरतिजीवन्मृतकैरनुसृतैः ॥१९॥
एते च मयैव त्वत्प्रतिज्ञापरिपालनाय निजधर्म्मं द्विजसङ्गपरित्यागं कारिताः ॥२०॥
स तथेति तद्गुरुवचनमभिनन्द्य तेषां वेशान्यत्वमकारयत् । यवनान् मुण्डितशिरसः, अर्द्धमुण्डान् शकान्, प्रलम्बकेशान् पारदान्, पह्लवांश्च श्मश्रुधरान् निःस्वाध्यायवष-

ट्कारान् एतानन्यांश्च क्षत्रियांश्चकार । ते च निजधर्मपरित्यागाद् ब्राह्मणैश्च परित्यक्ता म्लेच्छतां ययुः । सगरोऽपि स्वमधिष्ठानमागम्य अस्खलितचक्रः सप्तद्वीपवतीमिमा-मूर्वीं प्रशशास ॥२१॥

इति श्रीविष्णुपुराणे चतुर्थांऽशे तृतीयोऽध्यायः ॥३॥

आदितः श्लोकानां समष्ट्यङ्काः-३,१०३+२१=३,१२४



Sagara.

## ॥ अथ चतुर्थोऽध्यायः ॥

## (सागरस्याश्वमेधयज्ञः भगीरथस्य गङ्गानयनम्, रामचन्द्रादजीनामुत्पत्तिश्च)

### पराशर उवाच

कश्यपदुहिता सुमतिर्विदर्भराजतनया च केशिनी द्वे भार्य्ये सगरस्यास्ताम् ॥१॥
ताभ्याञ्चापत्यार्थमाराधित और्व्वः परमेण समाधिना वरमदात् ॥२॥
एका वंशधरमेकं पुत्रम्, अपरा षष्टिं पुत्रसहस्राणि जनयिष्यतीति, यस्या यदभिमतं गृह्यताम् । इत्युक्ते केशिनी पुत्रमेकम्, सुमतिः पुत्रसहस्राणि षष्टिं वव्रे । तथेति च ऋषिणाभिमते अल्पैरेवाहोभिरेकमसमञ्जसं नाम वंशधरं पुत्रमसूत केशिनी । विनतातनयायास्तु सुमत्याः षष्टीः पुत्र सहस्राण्यभवन् । तस्मादसमञ्जसोंऽशुमान् नाम कुमारो जज्ञे ॥३॥
स तु असमञ्जा बाल्यादेवापवृत्तः । पिता चास्या चिन्तयत् अयमतीतबाल्यो बुद्धिमान् भविष्यतीति । अथ तत्रापि वयस्यतीते तच्चरितमेवैनं पिता तत्याज ॥४॥
तान्यपि षष्टिः कुमारसहस्राणि असमञ्जसश्चरितमनुचक्रुः ॥५॥
ततश्चासमञ्जसश्चरितानुकारिभिः सागरैरपध्वस्तयज्ञादि सन्मार्गे जगति देवाः सकलविद्यामयमसंस्पृष्टमशेषदोषैर्भगवतः पुरुषोत्तमस्यांशभूतं कपिलर्षिं प्रणम्य तदर्थमूचुः ॥६॥
भगवन् ! एभिः सगरतनयैरसमञ्जसश्चरितमनुगम्यते, कथमेवमेभिरनुसरद्भिर्जगद्भविष्यतीत्यार्त्तजगत्परित्राणाय च भगवतोऽत्र शरीरग्रहणम् । इत्याकर्ण्य भगवान् 'अल्पैरेव दिनैरेते विनङ्क्ष्यन्ति' इत्युक्तवान् ॥७॥
तत्रान्तरे च सगरो हयमेधमारेभे । तत्र च ततपुत्रैरधिष्ठितमस्याश्वं कोऽप्यपहृत्य भुवो विवरं प्रविवेश ॥८॥
ततश्चाश्वान्वेषणाय तनयान् युयोज । ततस्तत्तनयाश्चाश्वखुरपदवीमनुसरन्तोऽतिनिर्बन्धेन वसुधातलमेकैको योजनं योजनमवनेश्चखान ॥९॥
पाताले चाश्वं परिभ्रमन्तमवनीपतिनन्दनास्ते ददृशुः । नातिदूरस्थितञ्च भगवन्तमपघने शरत्कालेऽर्कमिव तेजोभिरनवरतमूर्द्ध्वमधश्चाशेषदिशश्चोद्भासयमानं कपिलर्षिमपश्यन् ॥१०॥
ततश्चोद्यतायुधा 'दुरात्मायमस्मदपकारी यज्ञविघातकर्त्ता हयहर्त्ता हन्यतां हन्यतामित्यधावन् । ततश्च तेनापि भगवता किञ्चिदीषत्परिवर्त्तितलोचनेन विलोकिताः स्वशरीरसमूत्थेनाग्निना दह्यमाना विनेशुः ॥११॥
सगरोऽप्यनुगम्याश्चानुसारि तत् पुत्रबलमशेषं परमर्षिकपिलतेजसा

दग्धमंशुमन्तमसमञ्जसः पुत्रमश्वानयनाय चोदयामास ॥१२॥
स तु सगरतनयखातमार्गेण कपिलमुपगम्य भक्ति नम्रस्तथा तथा च तुष्टाव, यथैनं भगवानाह, गच्छैनं पितामहायाश्वं प्रापय, वरं वृणीष्व च । पुत्र ! पौत्रश्च ते स्वर्गाद् गङ्गामानयिष्यतीति ॥१३॥
अथांशुमानपि ब्रह्मदण्डहतानामस्मत्पितृणां स्वर्गाय स्वर्गायोग्यानां स्वर्गप्राप्तिकरं वरमस्माकं भगवान् प्रयच्छतु इत्याह ॥१४॥
तञ्चाह भगवान्-उक्तमेवैतन्मया पौत्रस्ते त्रिदिवाद् गङ्गां भुवमानयिष्यतीति । तदम्भसा संस्पृष्टेष्वस्थि भस्मस्वेते स्वर्गमारोक्ष्यन्ति ।
भगवद्विष्णुपादाङ्गुष्ठविनिर्गतजलस्य हि तन्माहात्म्यं यन्न केवलमभिसन्धिपूर्व्वकं स्नानाद्युपभोगेषूपकारकम्, अनभिसंहितमप्यपेतत्प्राणस्यास्थिचर्म्मस्नायु केशाद्युत्सृष्टं शरीरजं यद्भूपतितं सद्यः शरीरिणां स्वर्गं नयतीत्युक्तः प्रणाम्य च भगवतेऽश्वमादाय पितामहयमाजगाम ॥१५॥
सगरोऽस्याश्वमादाय तं यज्ञं समापयामास । सागरञ्चात्मजप्रीत्या पुत्रत्वे कल्पयामास ॥१६॥
तस्याप्यंशुमतो दिलीपः पुत्रोऽभवत् । दिलीपस्यापि भगीरथः, योऽसौ गङ्गां स्वर्गादिहानीय भागीरथीसंज्ञां चकार ॥१७॥
भगीरथात् श्रुतः, तस्यापि नाभागः, ततोऽप्यम्बरीषः, तस्मात् सिन्धुद्वीपः। तस्याप्ययुताश्वः, तत्पुत्र ऋतुपर्णो नलसहायोऽक्षहृदयज्ञोऽभूत् ॥१८॥
ऋतुपर्णपुत्रः सर्वकामः । तत्तनयः सुदासः । सुदासात् सौदसोमित्रसहनामा ॥१९॥
योऽसावटव्यां मृगयागतो व्याघ्रद्वयमपश्यत् ॥२०॥
ताभ्याञ्च तद्वनमपमृगं कृतम् ॥२१॥
स चैकं तयोर्वाणेन जघान ॥२२॥
म्रियमाणश्चासावतिभीषणाकृतिरतिकरालवदनो राक्षसोऽभवत् ॥२३॥
द्वितीयोऽपि प्रतिक्रियां ते करिष्यामीत्युत्तवान्तर्धानं जगाम ॥२४॥
कालेन गच्छता स सौदासो यज्ञमयजत् । परिनिष्ठितयज्ञे चाचार्य्यवशिष्ठे निष्क्रान्ते तद्रक्षो वशिष्ठरूपमास्थाय यथावसाने मम समांसं भोजनं देयम्, तत् संष्क्रियतां क्षणादिहागमिष्यामीत्युक्त्वा निष्क्रान्तः ॥२५॥
भूयश्च सूदवेशं कृत्वा राजाज्ञया मानुषमांसं संस्कृत्य राज्ञे न्यवेदयत् । असावपि हिरण्यपात्रस्थितं मांसमादाय वशिष्ठागमनप्रतीक्षोऽभवत् ॥२६॥
आगताय च वशिष्ठाय निवेदितवान्, स चाचिन्तयत्, अहो ! राज्ञोऽस्य दौःशील्यम्, येनैतन्मांसमस्माकं प्रयच्छति । किमेतद् द्रव्यजातमितिध्यानपरोऽभूत्, अपश्यच्च तन्मानुषमांसम् । ततश्च क्रोधकलुषीकृतचेता राजानम्प्रति शापमुत्ससर्ज्ज,

यस्मादभोज्यमस्मद् विधानां तपस्विनाम् अवगच्छन्नपि भवान् मह्यं ददाति, तस्मात्तवैवात्र लोलुपा बुद्धिर्भविष्यतीति ॥२७॥

अनन्तरञ्च तेनापि भगवतैवाभिहितोऽस्मीत्युक्तः किं किं मयैवाभिहितम् इति पुनरपि समाधौ तस्थौ ॥२८॥

समाधिविज्ञानावगतार्थश्चास्यानुग्रहं चकार, नात्यन्तमेतत्, द्वादशाब्दं भवतो भोजनं भविष्यतीति ॥२९॥

असावपि तु प्रगृह्योदकाञ्जलिं मुनिशापप्रदानायोद्यतो भगवानस्मद्गुरुः नार्हस्येवं कुलदेवताभूतमाचार्यं शप्तुमिति स्वपत्न्या मदयन्त्या प्रसादितः । शस्याम्बुदरक्षार्थं तच्छापाम्बु नोर्व्यांनाकाशे चिक्षेप, तेनैव स्वपादौ सिषेच ॥३०॥

तेन क्रोधश्रृतेनाम्भसा दग्धच्छायौ तत्पादौ कल्माषतामुपगतौ ॥३१॥

ततश्च स कल्माषपादसंज्ञामवाप, वशिष्ठशापाच्च षष्ठे काले राक्षसभावमुपेत्याटव्यां पर्य्यटन्ननेकशो मानुषानभक्षयत् ॥३२॥

एकदा तु कञ्चिन्मुनिमृतुकाले भार्यया सह सङ्गतं ददर्श ॥३३॥

तयोश्च तमतिभीषणं राक्षसमवलोक्य त्रासात् प्रधावितयोर्दम्पत्योर्ब्राह्मणं जग्राह ॥३४॥

ततः सा ब्राह्मणी बहुशस्तं याचितवती, प्रसीद इक्ष्वाकुकुलतिलकभूतस्त्वं महाराजमित्रसहः, न राक्षसः । नार्हसि स्त्रीधर्म्मसुखाभिज्ञो मय्यकृतार्थायामिम मद्भर्तारमत्तुम्, इत्येवं बहुप्रकारं तस्यां विल पन्त्यां व्याघ्रः पशुमिव तं ब्राह्मणमभक्षायत् ॥३५॥

ततश्चातिकोपसमन्विता ब्राह्मणी तं राजानं यस्मादेवं मय्यतृप्तायां त्वयायं मत्पतिर्भक्षितः, तस्मात् त्वमप्यन्तमवलोपभोगप्रवृत्तौ प्राप्स्यसि इति शशापाग्निं प्रविवेश च ॥३६॥

ततस्तस्य द्वादशाब्दपर्य्यये विमुक्तशापस्य स्त्रीविषयाभिलाषिणो प्रदयन्ती स्मारयामास । ततश्च परमसौ स्त्रीसम्भोगं तत्याज ॥३७॥

वसिष्ठश्च अपुत्रिणा राज्ञा पुत्रार्थमभ्यर्थितो मदयन्त्यां गर्भाधानं चकार । यदा च सप्त वर्षाण्यसौ गर्भो न जज्ञे, ततस्तं गर्भमश्मना देवी जघान । पुत्रश्चाजायत । तस्य चाश्मक एव नामाभवत् । अश्मकस्य मूलको नाम पुत्रोऽभवत् । योऽसौ निःक्षत्त्रेऽस्मिन् क्ष्मातले क्रियमाणे स्त्रीभिर्विवस्त्राभिः परिवार्य्य रक्षितः । ततस्तं नारीकवचमुदाहरन्ति । मूलकाद् दशरथः तस्मादिलिविलः, ततश्च विश्वसहः, तस्माच्च खट्वाङ्गो दिलीपः । योऽसौ देवासुराणां सङ्ग्रामे देवताभिरभ्यर्थितोऽसुरान् जघान । स्वर्गे च कृतप्रियैर्देवैर्वरार्थं चोदितः प्राह, यद्यवश्यं वरो ग्राह्यस्तन्ममायुः कथ्यतामिति । अनन्तरञ्चैतैरुक्तम्-एकमुहूर्तप्रमाणमायुः । इत्युक्तोऽस्खलितगतिना विमानेन लघिमगुणो मर्त्यलोकमागम्याह, यथा न ब्राह्मणेभ्यः सकाशादात्मापि मे प्रियतरः न

चापि स्वधर्मोल्लङ्घनं मया कदाचिदप्यनुष्ठितम्, न च सकलदेवमानुषपशुवृक्षादिकेऽप्यच्युतव्यतिरेकवती दृष्टिर्ममाभूत्, तथा तमेव देवं मुनिजनानुस्मृतं भगवन्तमस्खलितगतिरद्य प्रापयेय मित्यशेषदेवगुरौ भगवत्यनिर्देश्यवपुषि सत्तामात्रात्मन्यात्मानं परमात्मनि वासुदेवे युयोज, तत्रैव लयमवाप ॥३८॥

तत्रापि श्रूयते श्लोको गीतः सप्तर्षिभिः पुरा ।
खट्वाङ्गेन समो नान्यः कश्चिदुर्व्यां भविष्यति ॥
येन स्वर्गादिहागत्य मुहूर्तं प्राप्य जीवितम् ।
त्रयोऽभिसंहिता लोका बुद्ध्या दानेन चैव हि ॥३९॥

खट्वाङ्गतो दीर्घबाहुः पुत्रोऽभवत् । ततो रघुः, तस्मादप्यजः, अजाद् दशरथः, दशरथस्यापि श्रीभगवान् अब्जनाभो जगत्स्थित्यर्थमात्मांशेन रामलक्ष्मणभरतशत्रुघ्नरूपिणा चतुर्द्धा पुत्रत्वमयासीत् ॥४०॥

रामोऽपि बाल एव विश्वामित्रयज्ञरक्षणाय गच्छंस्ताडकां जघान ॥४१॥

यज्ञे च मारीचमिषुपाताहतं दूरं चिक्षेप, सुबाहुप्रमुखाश्च क्षयमनयत् । सन्दर्शनमात्रेणैवाहल्यामपापां चकार । जनकगृहे च माहेश्वरं चापमनायासैनैव बभञ्ज सीताञ्चायोनिजां जनकाराजतनयां वीर्य्यशुल्कां लेभे ॥४२॥

सकलक्षात्रयकारिणशेषहैहयकुलकेतुभूतञ्च परशुराममपास्तवीर्य्यबलावलेपं चकार ॥४३॥

पितृवचनाच्चागणितराज्याभिलाषो भ्रातृभार्या समन्वितो वनं विवेश ॥४४॥

विराधखरदूषणादीन् कबन्धवालिनौ च जघान । बद्ध्वा चाम्भोनिधिम् अशेषराक्षसकुलक्षयं कृत्वा दशाननापहृतां तद्वधापहतकलङ्कामप्यनलप्रवेश-शुद्धामशेषदेवेशसंस्तूयमानां सीतां जनकराजतनयामयोध्यामानिन्ये ॥४५॥

भरतोऽपि गन्धर्वविषयसाधनायोग्रगन्धर्वकोटीस्तिस्रो जघान । शत्रुघ्नेनाप्यमितबलपराक्रमो मधुपुत्रो लवणो नाम राक्षसेश्वरो निहतो मथुरा च निवेशिता । इत्येवमाद्यतुलबलपराक्रमविक्रमणैरतिदुष्टनिवर्हणैस्यास्य जगतो निष्पादितस्थितयो रामलक्ष्मणभरतशत्रुघ्नाः पुनर्द्दिवमारूढाः । योऽपि तेषु भगवदंशेष्वनुरागिणः कोशलनगरजनपदास्तेऽपि तन्मनसस्तत्सलोकतामवापुः ॥४६॥

रामस्य तू कुशलवौ पुत्रौ, लक्ष्मणस्याङ्गदचन्द्रकेतू, तक्षपुष्करौ भरतस्य, सुबाहुशूरसेनौ च शत्रुघ्नस्य ॥४७॥

कुशस्यातिथिः, अतिथेरपि निषधः पुत्रोऽभवत् । निषधस्यापि नलः, तस्यापि नभाः, नभसः पुण्डरीकः, तत्तनयः क्षेमधन्वा, तस्य च देवानीकः । तस्याप्यहीनगुः (ततो रूपः) ततो रुरुः, तस्य च पारिपात्रः, पारिपात्राद्दलः, दलाच्छलः, तस्याप्युक्थः,

उक्थाद् वज्रनाभः, तस्मात् शङ्खनाभः, ततो व्युत्थिताश्वः, ततश्च विश्वसहो जज्ञे । हिरण्यनाभस्ततो महायोगीश्वरजैमिनिशिष्यः । यतो याज्ञवल्क्यो योगमवाप । हिरण्यनाभस्य पुत्रः पुष्यः, तस्माद् ध्रुवसन्धिः, ततः सुदर्शनः, तस्मादग्निवर्णः, ततश्च शीघ्रः, ततोऽपि मरुः पुत्रोऽभूत् ! योऽसौ योगमास्थायाद्यापि कलापग्राममाश्रितस्तिष्ठति । आगामियुगे सूर्यवंशक्षत्रप्रवर्तयिता भविष्यतीति । प्रसुश्रुतस्तस्यात्मजः, तस्यापि सुगन्धिः, ततश्चामर्षः, तस्य महस्वान् ततो विश्रुतवान्, ततो बृहद्बलः, योऽर्जुनतनयेनाभिमन्युना भारतयुद्धे क्षयमनीयत ॥४८॥

एते हीक्ष्वाकुभूपालाः प्राधान्येन मयोदिताः ।
एतेषाञ्चरितं श्रृण्वन् सर्वपापैः प्रमुच्यते ॥४९॥

इति श्रीविष्णुपुराणे चतुर्थांऽशे चतुर्थोऽध्यायः ॥४॥



आदितः श्लोकानां समष्टयङ्काः-३,१२४+४९=३,१७३







## ॥ अथ पञ्चमोऽध्यायः ॥
## (निमियज्ञविवरणम्, सीताया उत्पत्तिः, कुशध्वजवंशकथनञ्च)

### पराशर उवाच

इक्ष्वाकुतनयो योऽसौ निमिर्नाम, स तु सहस्रवत्सरं सत्रमारेभे, वशिष्ठञ्च होतारं वरयामास ॥१॥

तमाह वशिष्ठः, अहमिन्द्रेण पञ्चवर्षशतं यागार्थं प्रथमतरं वृतः, तदन्तरं प्रतिपाल्यताम्, आगतस्तवापि ऋत्विग् भविष्यामि, इत्युक्ते स पृथिवीपतिना न किञ्चिदुक्तः ॥२॥

वशिष्ठोऽप्यनेन समन्वीप्सिमित्यमरपतेर्यागमकरोत् ॥३॥

सोऽपि तत्कालमेवान्यैर्गौतमादिभिर्यागमकरोत् । समाप्ते चामरपतेर्यागे त्वरावान् वशिष्ठो निमेः कर्म्म करिष्यामीत्याजगाम, तत्कर्म्मकर्त्तृत्वञ्च तत्र गौतमस्य दृष्ट्वा, अथ स्वपते तस्मै राज्ञे मामप्रत्याख्यायैतदनेन गौतमाय कर्मान्तरमर्पितं यस्मात्, तस्मादयं विदेहो भविष्यातीति शापं ददौ ॥४॥

प्रतिबुद्धश्चासाववनीपतिरपि प्राह, यस्मान्मामसम्भाष्य अजानत एव शयानस्य शापो सर्गमसौ दुष्टगुरुश्चकार, तस्मात् तस्यापि देहः पतितो भविष्यतीति प्रतिशापं दत्त्वा देहमत्यजत् ॥५॥

तस्माच्छापाच्च मित्रावरुणयोस्तेजसि वशिष्ठतेजः प्रविष्टम्, उर्वशीदर्शनादुद्भूतवीर्यप्रपातयोः सकाशाद् वशिष्ठो देहमपरं लेभे ॥६॥

निमेरपि तच्छरीरमतिमनोहरतैलगन्धादिभिरुपस्क्रियमाणं नैव क्लेदादिकं दोषमवाप, सद्योमृतमिव तस्थौ ॥७॥

यज्ञसमाप्तौ च भागग्रहणायागतान् देवान् ऋत्विज ऊचुः, यजमानाय वरो दीयतामिति । देवैश्छन्दितो निमिराह ॥८॥

भगवन्तोऽखिलसंसारदु:खसङ्घातस्य च्छत्तोरः, न ह्येतावज्जगत्यन्यद दुःखमस्ति, यच्छरीरात्मनोर्वियोगो भवति, तदहमिच्छामि सकललोकलोचनेषु वस्तुम्, न पुनः शरीरग्रहणं कर्त्तुम् । इत्युक्ते देवैरसावशेषभूतानां नेत्रेषु आसां कारितः । ततो भूतान्युन्मेषनिमेषं चक्रुः ॥९॥

अपुत्रस्य च तस्य भूभुजः शरीरमराजकभीरवस्ते मुनयोऽरण्यां ममन्थुः ॥१०॥

तत्र कुमारो जज्ञे, जननाज्जनकसंज्ञाञ्चासाववाप ॥११॥

अभूद् विदेहोऽस्य पितेति वैदेहो मथनान्मिथिरभूत् । तस्योदावसुः पुत्रोऽभूत् । ततो नन्दिवर्द्धनः, तस्मात् सुकेतुः, तस्यापि देवरातः, ततश्च बृहदुक्थः, तस्य च

महावीर्य्यः, तस्यापि सत्यधृतिः, ततश्च धृष्टकेतुः, धृष्टकेतोर्हर्य्यश्वः, तस्य च मरुः मरोः प्रतिबन्धकः, तस्मात् कृतरथः, तस्मात् कृतिः, तस्य विबुधः, तस्याप महाधृतिः, तस्य च कृतिरातः, ततो महारोमा, ततः सुवर्णरोमा, तस्यापि पुत्रो ह्रस्वरोमा, ततः सीरध्वजोऽभूत् । तस्य पुत्रार्थं यजनभुवं कृषतः सीरे सीता दुहिता समुत्पन्नासीत् । सीरध्वजस्य भ्राता साङ्काश्याधिपतिः कुशध्वजनामा ।

सीरध्वजस्यापत्यं भानुमान्॥१२॥

भानुमतः शतद्युम्नः, तस्य शुचिः, तस्मादूर्जवहो नाम पुत्रो जज्ञे । तस्यापि सत्यध्वजः, ततः कुनिः (कूणिः), कुनेरञ्जनः, तत्पुत्रः ऋतुजित्, ततोऽरिष्टनेमिः, तस्मात् श्रुतायुः, ततः सूर्य्याश्वः, तस्मात् सञ्जयः (सन्नयः), ततः क्षेमारिः, तस्मादनेनाः, तस्मान्मीनरथः (मानरथः), तस्य सत्यरथः, तस्य सात्यरथिः, सात्यरथेरुपगुः, तस्मात् श्रुतः (उपगुप्तः), तस्मात् शाश्वतः, तस्मात् सुधन्वा (सुवर्चाः), तस्यापि सुभासः, ततः सुश्रुतः, तस्माज्जयः, जयपुत्रो विजयः, तस्य ऋतः, ऋतात् सुनयः, ततो वीतहव्यः, तस्मात् सञ्जयः, तस्माद् क्षेमाश्वः, तस्मात् धृतिः, धृतेर्बहुलाश्वः, तस्य पुत्रः कृतिः, कृतौ सन्तिष्ठतेऽयं जनकवंशः ॥१३॥ इत्येते मैथिलाः । प्राचुर्य्येण एतेषामात्मविद्याश्रयिणो भूपाला भविष्यन्तीति ॥१४॥

इति श्रीविष्णुपुराणे चतुर्थांऽशे पञ्चमोऽध्यायः ॥५॥

आदितः श्लोकानां समष्ट्यङ्काः-३,१७३+१४=३,१८७



सीता जन्म

## ॥ अथ षष्ठोऽध्यायः ॥
## (चन्द्रवंशकथनम्, ताराहरणम्, अग्नित्रयोत्पत्तिश्च)

### मैत्रेय उवाच

सूर्यस्य भगवन्! वशः कथितो भवता मम ।
सोमस्य वेशे त्वखिलान् श्रोतुमिच्छामि पार्थिवान्॥१॥
कीर्त्यते स्थिरकीर्त्तीनां येषामद्यापि सन्ततिः ।
प्रसादसुमुखस्तन्मे ब्रह्मन्नाख्यातुमर्हसि॥२॥

### पराशर उवाच

श्रूयतां मुनिशार्द्दूल वंशः प्रथिततेजसः।
सोमस्यानुक्रमात् ख्याता यत्रोर्वीपतयोऽभवन्॥३॥
अयं हि वंशोऽतिबलपराक्रमद्युतिशीलचेष्टावद्भिरतिगुणान्वितैर्नहुषययाति-
कार्त्तवीर्य्यार्ज्जुनादिभिर्भूपालैरलङ्कृतः॥४॥
तमहं कथयामिश्रूयताम्-अखिलजगत्स्रष्टुर्भगवन्नारायणनाभिसरोजिनीसमुद्भवाब्ज-
योनेर्ब्रह्मणः पुत्रोऽत्रिः, अत्रेः सोमः, तञ्च भगवानब्जयोनिरशेषौधि-
द्विजनक्षात्राणामधिपत्येऽभ्यषचयत्॥५॥ स च राजसूयमकरोत्। तत्
प्रभावादत्युत्कृष्टाधिपत्याधिष्ठातृत्वाच्चैनं मद आविवेश॥६॥
मदावलेपाच्चासौ सकलदेवगुरोर्बृहस्पतेस्तारां नाम पत्नीं जहार॥७॥
बहुशश्च बृहस्पतिचोदितेन भगवता ब्रह्मणा चोद्यमानः सकलैश्च
देवर्षिभिर्याच्यमानोऽपि न मुमोच। तस्य हि
बृहस्पतिद्वेषादुशनाः पार्ष्णिग्राहोऽभवत्॥८॥
अङ्गिरसश्च सकाशोपलब्धविद्यो भगवान् रुद्रो बृहस्पतेः साहायमकरोत्॥९॥
यतश्चोशनाः ततो हि जम्भकुजम्भाद्याः समस्ता एव दैत्यदानवनिकाया महान्तमुद्यमं
चक्रुः। बृहस्पतेरपि सकलदेवसैन्यसहायः शक्रोऽभवत्॥१०॥
एवञ्च तयोरतीवोग्रः संग्रामस्तारकानिमित्तस्तारकामयो नामाभवत्। ततश्च
समस्तशस्त्राण्यसुरेषु रुद्रपुरोगमा देवा देवेषु चाशेषदानवा मुमुचुः॥११॥
एवञ्च देवासुराहवक्षोभक्षुब्धहृदयमशेषमेव जगद् ब्रह्माणां शरणां जगाम॥१२॥
ततश्च भगवानप्युशनसं शङ्करमसुरान् देवांश्च निवार्य बृहस्पतेस्तारामदात्।
ताञ्चान्तः प्रसवामवलोक्य बृहस्पतिराह॥१३॥

नैष मम क्षेत्रे भवत्यान्यसुतो धार्यस्तदुत्सृजैनमलमतिधाष्टर्येनेति । सा च तैनैवमुक्ता पतिव्रता भर्त्तृवचनात् तमीषिकास्तम्बे गर्भमुत्ससर्ज ॥१४॥

स चोत्सृष्टमात्र वातितेजसा देवानां तेजांस्याचिक्षेप ॥१५॥

बृहस्पतिमिन्दुञ्च तस्य कुमारस्यातिचारुतया साभिलाषौ दृष्ट्वा देवाः समुत्पन्नसन्देहास्तारां पप्रच्छुः सत्यं कथयास्माकमतिसुभगे ! कस्यायमात्मजः, सोमस्याथ बृहस्पतेः ? इत्युक्तापि सा तारा ह्रिया न किञ्चिदुवाच ॥१६॥

बहुशोऽप्यभिहिता यदासौ देवेभ्यो नाचचक्षे, ततःकुमारस्तां ! शप्तुमुद्यतः प्राह च दुष्टे ! अम्ब कस्मान्मम तातं नाख्यासि, अद्यैव तेऽलोकलज्जावत्याः शास्तिमयमहं करोमि, यथा नैवमन्याप्यतिमन्थरवचना भवतीति ॥१७॥

अथ भगवान् पितामहस्तं कुमारं सन्निवार्य्य स्वयमपृच्छत् ताराम्, कथय वत्से ! कस्यायमात्मजः ? सोमस्याथ बृहस्पतेः ? इत्युक्ता लज्जाजडमाह-सोमस्येति ॥१८॥

ततः स्फुरदुच्छसितामलकपोलकान्तिर्भगवानुडुपतिस्तमालिङ्ग्य कुमारं साधु साधु वत्स ! प्राज्ञोऽसीति बुध इति नाम चक्रे ॥१९॥

स च आख्यातमेवैतत्-यथेलायात्मजं पुरूरवसमुत्पादयामास । पुरूरवास्त्वतिदानशीलोऽतियज्वातितेजस्वी । यं सत्यवादिनमतिरूपस्ववन्तं मित्रावरुणशापान्मानुषे लोके मया वस्तव्यम् इति कृतमतिरुर्वशी ददर्श ॥२०॥

दृष्टमात्रे च यस्मिन् अपहाय मानमशेषमपास्य स्वर्गसुखाभिलाषं तन्मना भूत्वा तमेवोपतस्थे ॥२१॥

सोऽपि च तामतिशयितसकललोकस्त्रीकान्तिसौकुमार्य-लावण्यातिविलासहासादिगुणामवलोक्य तदायत्तचित्तवृत्तिर्बभूव ॥२२॥

उभयमपि तन्मनस्कमनन्यदृष्टि परित्यक्तसमस्तान्यप्रयोजनमभूत् ॥२३॥

राजा तु प्रागल्भ्यात् तामाह ॥२४॥

सुभ्रु त्वामहमभिकामोऽस्मि प्रसीदानुरागमद्वह

इत्युक्ता लज्जावखण्डितमुर्वशी प्राह ॥२५॥

भवत्वेवं यदि मे समयपरिपालनं भवान् करोतीति ॥२६॥

आख्याहि मे समयमित्यथ पृष्टा पुनरब्रवीत् ॥२७॥

शयनसमीपे ममोरणकद्वयं पुत्रभूतं नापनेयम् ॥२८॥

भवांश्च मया नग्नो न द्रष्टव्यः, घृतमात्रञ्च ममाहारः । इत्येवमेवेति भूपतिराह । तया च सहावनीपतिरलकायां चैत्ररथादिवनेषु अमलपद्मषण्डेषु अभिरमणीयेषु मानसादिसरःसु अभिरममाण एव षष्टिवर्षसहस्राणि अनुदिनप्रवर्द्धमानप्रमोदोऽनयत् । उर्वशी च तदुपभोगात् प्रतिदिनप्रवर्द्धमानानुरागा अमरलोकवासेऽपि न स्पृहां चकार । विना चोर्वश्या सुरलोकऽप्सरसां सिद्धगन्धर्वाणाञ्च नातिरमणीयोऽभवत् ॥२९॥

ततश्चोर्वशी-पुरूरवसोः समयविद् विश्वावसुर्गन्धर्वसमवेतो
निशि शयनाभ्यासादेकमुरणकं जहार ॥३०॥
तस्य चाकाशे नीयमानस्योर्व्वशी शब्दमश्रृणोत् आह च, ममानाथायाः पुत्रः
केनाप्ययमपह्रियते, कं शरणमुपयामीत्याकर्ण्य राजा, "नग्नं मां देवी द्रक्ष्यती"-ति न
ययौ । अथान्यमप्युरणकमादाय गन्धर्वा ययुः ।
तस्याप्यपह्रियमाणस्य शब्दमाकर्ण्य आकाशे पुनरपि "अनाथास्म्यहमभर्त्तृका
कुपुरुषाश्रयेति" आर्त्तराविणी बभूव । राजाप्यमर्षवशादन्धकारमेतदिति खड्गमादाय
दुष्ट ! दुष्ट ! हतोऽसीति व्याहरन्नभ्यधावत् । तावच्च गन्धर्वैरतीवोज्वला विद्युज्जनिता ।
तत् प्रभया चोर्व्वशी राजानमपगताम्बरं दृष्ट्वा
अपवृत्तसमया तत्क्षणादेवापक्रान्ता ॥३१॥
परित्यज्य तावुरणकौ गन्धर्वाः सुरलोकमुपागताः । राजापि तौ मेषावादाय हृष्टमनाः
स्वशयनमायातो नोर्वशीं ददर्श ॥३२॥
ताञ्चापश्यन्नपगताम्बर एवोन्मत्तरूपो बभ्राम, कुरुक्षेत्रे चाम्भोजसरसि
अन्याभिश्चतसृभिरप्सरोभिः समवेतामुर्व्वशीं ददर्श ।
ततश्चोन्मत्तरूपो राजा जायेह तिष्ठ, मनसि,
घोरे वचसि, इत्यनेकप्रकारं सूक्तमवोचत् ॥३३॥
आह चोर्व्वशी-महाराज अलमनेनाविवेकचेष्टितेन । अन्तर्वत्नी अहम्, अब्दान्ते
भवतात्रागन्तव्यम् कुमारस्ते भविष्यति, एकाञ्च निशामहं त्वया सह वत्स्यामि,
इत्युक्तः प्रहृष्टः स्वपुरमाजगाम । तासाञ्चाप्सरसामुर्व्वशी कथयामास, अयं स
पुरुषोत्कर्षो, येन अहमेतावन्तं कालमनुरागाकृष्टमनसा सहोषिता ॥३४॥
इत्येवमुक्तास्ता अप्सरस ऊचुः-साधु साधु अस्य रूपम्, अनेन सहास्माकमपि
सर्वकालमभिरन्तुं स्पृहा भवेदिति ॥३५॥
अब्दे च पूर्णे स राजा तत्राजगाम कुमारञ्चायुषमस्मै तदोर्वशी ददौ, एकाञ्च निशां तेन
राज्ञा सहोषित्वा पञ्चपुत्रोत् पत्तये गर्भमाप ॥३६॥
उवाच चैनं राजानम्-अस्मत् प्रीत्या महाराजाय सर्व एव गन्धर्वा वरदाः संवृत्ताः,
तस्माद् व्रियतां वर इति ॥३७॥
आह राजा च विजितसकलारातिरहतेन्द्रियसामर्थ्यो बन्धुमानमितबलकोषः,
नान्यदस्माकमुर्वशीसालोक्याद् अप्राप्यमस्ति, तदहमनया सहोर्वश्या कालं
नेतुमभिलषामि ॥३८॥
इत्युक्ते गन्धर्वा राज्ञेऽग्निस्थालीं ददुः ॥३९॥
ऊचुश्च एनमग्निमाम्नायानुसारी भूत्वा त्रिधा कृत्वा उर्वशीसलोकतामनोरथमुद्दिश्य
सम्यग् यजेथाः । ततोऽवश्यमभिलषितमवाप्स्यसि ॥४०॥

इत्युक्तस्तामग्निस्थालीमादायाजगाम, अन्तरटव्यामचिन्तयत्अहो मे अतिमूढता, यदग्निस्थाली मयानीता नोर्वशीति । अथैनामटव्यामेवाग्निस्थालीं तत्याज स्वपुरञ्चाजगाम ॥४१॥

व्यतीतार्द्धरात्रौ विनिद्रश्चाचिन्तयत्, ममोर्वशीसालोक्यप्राप्त्यर्थमग्निस्थाली गन्धर्व्वैर्दत्ता, सा च मया अटव्यां परित्यक्ता । तदहं तत्र तदाहरणाय यास्यामि इत्युत्थाय तत्राप्युपगतो नाग्निस्थालीमपश्यत् । शमी गर्भञ्चाश्वत्थमग्निस्थालीस्थाने दृष्ट्वा अचिन्तयत् मयात्र स्थाली निक्षिप्ता, सा चाश्वत्थः शमीगर्भोऽभूत् । तदेतमेवाहमग्निरूपमादाय स्वपुरमभिगम्य अरणीं कृत्वा तदुत्पन्नाग्नेरुपास्तिं करिष्यामीति ॥४२॥

एवमेव स्वपुरमुपगतोऽरणीं चकार ॥४३॥

तत्प्रमाणश्चाङ्गुलैः कुर्वन् गायत्रीमपठत् । पठतश्चाक्षरसंख्यान्येवाङ्गुलान्यरण्यभवत् ॥४४॥

तत्राग्निं निर्मथ्याग्नित्रयमाम्नायानुसारी भूत्वा जुहाव, उर्वशीसालोक्यं चेह फलमभिसंहितवान् । तेनैवाग्निविधिना बहुविधान् यज्ञान् इष्टा गन्धर्वलोकान् प्राप्य उर्व्वश्या सह वियोगं नावाप ॥४५॥

एकोऽग्निरादावभवत्, ऐलेन त्वत्र मन्वन्तरे त्रेता प्रवर्तिता ॥४६॥

इति श्रीविष्णुपुराणे चतुर्थांशे षष्ठोऽध्यायः ॥६॥

आदितः श्लोकानां समष्ट्यङ्काः-३,१८७+४६=३,२३३



## ॥ अथ सप्तमोऽध्यायः ॥
## (पुरूरवसो जह्नोश्च वंशकथनम्)

### पराशर उवाच

तस्याप्यायुर्धीमानमावसु-विश्वावसु-शतायुः
श्रुतायुः (अयुतायुः) संज्ञाः षडभवन् पुत्राः ॥१॥
अमावसोर्भीमो नाम पुत्रोऽभवत् । भीमस्य काञ्चनः, काञ्चनात् सुहोत्रः, तस्यापि जह्नुः
। योऽसौ यज्ञवाटमखिलं गङ्गाम्भसा प्लावितमालोक्य क्रोधसंरक्तनयनो भगवन्तं
यपुरुषमात्मनि परमेण समाधिना समारोप्याखिलामेव गङ्गामपिबत् ॥२॥
अथैनं देवर्षयः प्रसादयामासुः, दुहितृत्वे चास्य गङ्गामनयन् । जह्नोश्च सुजह्नुर्नाम
पुत्रोऽभवत् । तस्याप्यजकः, ततो बलाकाश्वः, तस्मात् कुशः, कुशस्य कुशाश्व-
कुशनाभामूर्त्तरयामावसवश्चत्वारः पुत्रा बभूवुः ॥३॥
तेषां कुशाश्वः "शक्रतुल्यो मे पुत्रो भवे"-दिति तपश्चचार । तञ्चोग्रतपसमवलोक्य मा
भवत्वन्योऽस्मत्तुल्यवीर्य्य" इत्यात्मनैरास्येन्द्रः पुत्रत्वमगच्छत् ॥४॥
गाधिर्नाम स कौशिकोऽभवत् । गाधिश्च सत्यवतीं नाम कन्यामजनयत् । ताञ्च भार्गव
ऋचीको वव्रे ॥५॥
गाधिरप्यतिरोषणाय अतिवृद्धाय च ब्राह्मणाय दातुमनिच्छन्नेकतः
श्यामकर्णानामिन्दुवर्चसामनिलरंहसामश्वानां सहस्रं कन्याशुल्कमयाचत ॥६॥
तेनापि ऋषिणा वरुणसकाशादुपलभ्य अश्वतीर्थोत्पन्नं तादृशाश्वसहस्रं दत्तम् ॥७॥
ततस्तामृचीकः कन्यामुपयेमे । ऋचीकश्च तस्याश्चरुमपत्यार्थं चकार । तथा
प्रसादितश्च तन्मात्रे क्षत्रवरपुत्रोत्पत्तये चरुमपरं साधयामास ॥८॥
एष चरुर्भवत्या अयमपरस्त्वन्मात्रा सम्यगुपयोज्य इत्युक्त्वा वनं जगाम ॥९॥
उपयोगकाले च तां माता सत्यवतीमाह-सर्व एवात्मपुत्रमतिगुणं समभिलषति,
नात्मजायाभ्रातृगुणेष्व-तीवादृतो भवतीत्यतोऽर्हसि मम त्वमात्मीयञ्चरुं दातुं
मदीयञ्चरुमात्मनोपयोक्तुम् ॥१०॥
मत्पुत्रेण हि सकलभूमण्डलपरिपालनं कार्यम् ॥११॥
कियद्ब्राह्मणास्य बलवीर्यसम्पदित्युक्ता सा स्वं चरुं मात्रे दत्तवती ॥१२॥
अथ वनादभ्यागत्य सत्यवतीमृषिरपश्यत् आह चैनाम्-अतिपापे ! किमिदमकार्य्यं
भवत्या कृतम्, अतिरौद्रं ते वपुरालक्ष्यते, नूनं त्वया त्वन्मातृसत्कृतश्चरुरुपयुक्तः, न
युक्तमेतत् ॥१३॥
मया हि तत्र चरौ सकलैव शौर्यबलसम्पदारोपिता,

त्वदीये चरावप्यखिलशान्ति-ज्ञान-तितिक्षादिका ब्राह्मणगुण-सम्पत्, एतच्च विपरीतं कुर्वत्यास्तवातिरौद्रास्त्रधारणमारणनिष्ठः क्षत्रियाचारः पुत्रो भविष्यति, अस्याश्चोपशमरुचिर्ब्राह्मणाचारः ॥१४॥

इत्याकर्ण्यैव सा तस्य पादौ जग्राह । प्रणिपत्य च एनमाह-भगवन् ! मयैतदज्ञानादनुष्ठितं प्रसादं मे कुरु, मैवंविधः पुत्रो भवतु, काममेवंविधः पौत्रो भवतु इत्युक्तो मुनिरप्याह-एवमस्तु इति ॥१५॥

अनन्तरञ्च सा जमदग्निमजीजनत् । तन्माता च विश्वामित्रं जनयामास । सत्यवती च कौशिकी नाम नद्यभवत् । जमदग्निरिक्ष्वाकुवंशोद्भवस्य रेणोस्तनयां रेणुकामुपयेमे । तस्माच्चाशेषक्षत्रवशहन्तारं परशुरामसंज्ञं भगवतः सकललोकगुरोर्नारायणस्यांशं जमदग्निरजीजनत् ॥१६॥

विश्वामित्रपुत्रस्तु भार्गव एव शुनःशेफो नाम देवैर्दत्तः, ततश्च देवरातनामाभवत् । ततश्च ते मधुच्छन्द-जय-कृतदेव- देवाष्टक-कच्छप- हरीतकाख्या विश्वामित्रपुत्रा बभूवुः ॥१७॥

तेषाञ्च बहूनि कौशिकगोत्राणि ऋष्यन्तरेषु वैवाह्यानि भवन्तीति ॥१८॥

इति श्रीविष्णुपुराणे चतुर्थांशे सप्तमोऽध्यायः ॥७॥



आदितः श्लोकानां समष्ट्यङ्काः-३,२३३+१८=३,२५१





उर्वशी-पुरुरवा

## ॥ अथाष्टमोऽध्यायः ॥
## (आयुर्वंशकथनम्, धन्वन्तरेरुत्पत्तिः, तद्वंशवर्णनञ्च)

### पराशर उवाच

पुरूरवसो ज्येष्ठः पुत्रो यस्त्वायुर्नामा स राहोर्दुहितरमुपयेमे । तस्यां च पञ्च पुत्रान् जनयामास नहुष-क्षत्त्रवृद्धः-रम्भ-रजिसंज्ञाः, तथैवानेनाः पञ्चमः पुत्रोऽभूत् । क्षात्रवृद्धात्सुहोत्रः पुत्रोऽभूत् । काशलेश-गृत्समदास्तस्य पुत्रास्त्रयोऽभवन् । गृत्समदस्य शौनकश्चातुर्वर्ण्यप्रवर्त्तयिताऽभूत् ॥१॥ काश्यस्य काशीराजः, ततो दीर्घतमाः पुत्रोऽभवत् । धन्वन्तरिस्तु दीर्घतमसोऽभूत् । स हि संसिद्धकार्य्यकरणः सकलसम्भूतिष्वशेषज्ञानवित् ॥२॥ भगवता नारायणेन च अतीतसम्भूतावस्मै वरो दत्तः ॥३॥ काशीराजगोत्रेऽवतीर्य्य त्वमष्टधा सम्यगायुर्वेदं करिष्यसि, यज्ञभाग् भविष्यसीति ॥४॥ तस्य च धन्वन्तरेः पुत्रः केतुमान् । केतुमतो भीमरथः, तस्यापि दिवोदासः, तस्यापि प्रतर्द्दनः । स च भद्रश्रेण्यवंशविनाशनादशेषाः शत्रवोऽनेन जिता इति शत्रुजिदभवत् ॥५॥ तेन च प्रीतिमतात्मपुत्रो वत्स वत्सेत्यभिहितः, ततो वत्सोऽसावभवत् सत्यव्रततया ऋतध्वजसंज्ञामवाप । ततश्च कुवलयनामानमश्वं लेभे, कुवलयाश्व इत्यस्यां पृथिव्यां प्रथितः ॥६-७॥ तस्य च वत्सस्य पुत्रोऽलर्को नामाभवत् । यस्यामद्यापि श्लोको गीयते ।

षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
अलर्कादपरो नान्यो बुभुजे मेदिनीं युवा ॥८॥

तस्यालर्कस्य सन्नतिनामात्मजोऽभवत् । ततः सुनीथः, तस्य सुकेतुः, ततो धर्मकेतुः, तत सत्यकेतुः तस्माद्विभुः, तत्तनयः सुविभुः, ततश्च सुकुमारः, तस्यापि धृष्टकेतुः, ततश्च वैनहोत्रः, ततश्च भार्गः, भार्गस्य भार्गभूमिः, अतश्चातुर्वर्ण्यप्रवृत्तिः, इत्येते काश्यपा भूपतयः कथिताः । रजेस्तु सन्ततिः श्रूयतामिति ॥९॥

इति श्रीविष्णुमाहापुराणे चतुर्थांशेऽष्टमोऽध्यायः ॥८॥

आदितः श्लोकानां समष्ट्यङ्काः-३,२५१+९=३,२६०

## ॥ अथ नवमोऽध्यायः ॥
## (रजेर्दैत्यानाञ्च युद्धम्, क्षात्रवृद्धस्य वंशावलिकथनञ्च)

### पराशर उवाच

रजेः पञ्चपुत्रशतान्यतुलवीर्यसांराण्यासन् । देवासुरसंग्रामारम्भे परस्परवधेप्सवो देवाश्चासुराश्च ब्रह्माणां पप्रच्छुः ॥१॥ भगवन् ! अस्माकमत्र विरोधे कतरः पक्षो जेता भविष्यतीति अथाह भगवान्येषामर्थे रजिरात्तायुधो योत्स्यतीति । अथ दैत्यैरुपेत्य रजिरात्मसाहाय्यदानायाभ्यर्थितः प्राह, योत्स्येऽहं भवतामर्थे, यद्यहममर जयाद् भवतामिन्द्रो भविष्यामि इति । आकर्ण्यैतत् तैरभिहितो, न वयमन्यथा वदिष्यामोऽन्यथा करिष्यामः । अस्माकमिन्द्रः प्रह्लादस्तदर्थमयमुद्यम इत्युक्त्वा गतेष्वसुरेषु देवैरप्यसाववनी पतिरेवमेवोक्तः । तेनापि च तथैवोक्ते देवैरिन्द्रस्त्वं भविष्यसीति समन्वीप्सितम् ॥२॥ रजिनापि देवसैन्यसहायेन अनेकैर्महास्त्रैस्तदशेषमसूरबलं निषूदितम् । अवजितारातिपक्षश्च इन्द्रो रजिचरणयुगलमात्मशिरसा निपीड्याह, भयत्राणदानादस्मत्पिता भवान्, अशीषलोकानामुत्तमो भवान्, यस्याहं पुत्रस्त्रिलोकेन्द्रः ॥३॥ स चापि राजा प्रहस्याह, एवमेवास्तु, अनतिक्रमणीया हि वैरिपक्षादप्यनेकविधचाटुवाक्यगर्भा प्रणति, इत्युक्त्वा स्वपुरमाजगाम ॥४॥ शतक्रतुरपीन्द्रत्वं चकार । स्वर्याते च रजौ नारदर्षिचोदिता राजसूताः शतक्रतुमात्मपितृपुत्रमाचाराद्राज्यं याचितवन्तः ॥५॥ अप्रदाने चावजित्येन्द्रमतिबलिनः स्वयमिन्द्रत्वं चक्रुः । ततश्च बहुतिथे काले व्यतीते बृहस्पतिमेकान्ते दृष्ट्वापहृतत्रैलोक्ययज्ञभागः शतक्रतुराह ॥६॥ वदरीफलमात्रमप्यर्हसि मम आप्यायनाय पुरोडाशखण्डं दातुमित्युक्तो बृहस्पतिरूचेयद्येवं पूर्वमेव त्वयाहं चोदितः स्यां, तन्मया त्वदर्थं किमकर्त्तव्यमिति ॥७॥ स्वल्पैरेवाहोभिस्त्वां निजं पदं प्रापयिष्यामि इत्यभिधाय तेषामनुदिनाभिचारिकं बुद्धिमोहाय शक्रस्य च तेजोवृद्धये जुहाव । (ते चापि तेन बुद्धिमोहेनाभिभूयमाना ब्रह्मद्विषो धर्मत्यागिनो वेदवादपराङ्मुखा बभूवुः ततश्च तानपेतधर्मा चारान् इन्द्रो जघान पुरोहिताप्यायिततेजाश्च त्रिदिवमाक्तामत् । एतदिन्द्रस्य स्वपदच्यवनारोहणां श्रुत्वा पुरुषः स्वपदभ्रंशं दौरात्म्यं वा न चाप्नोति ।) रम्भस्त्वनपत्योऽभवत् । क्षत्रवृद्धसुत, प्रतिक्षत्त्रः, तत्पुत्रः सञ्जयः, ततश्च विजयः, तस्माच्च यलकृत्, तस्य हर्षवर्द्धनः, हर्षवर्द्धनसुतः सहदेवः, तस्माददीनः, तस्य जयसेनः, ततश्च संहुतिः, तत्पुत्रः क्षात्रधर्म्माः, इत्येते क्षात्रवृद्धस्य । अतो नहुषवंशं वक्ष्यामि इति ॥८॥

**इति श्रीविष्णुमाहापुराणे चतुर्थांशे नवमोऽध्यायः ॥९॥**

**आदितः श्लोकानां समष्ट्यङ्काः-३,२६०+८=३,२६८**



**राजा हर्षवर्धन**

## ॥ अथ दशमोऽध्यायः ॥
## (नहुषवंशवर्णनम्, ययातेरुपाख्यानञ्च )

### पराशर उवाच

यतिययातिसंयातिअयातिवियतिकृतिसंज्ञा नहुषस्य षट् पुत्रा महाबलपराक्रमा बभूवुः । यतिस्तु राज्यं नैच्छत् । ययातिस्तु भूबृदभवत्, उशनसश्च दुहितरं देवयानीं शर्म्मिष्ठाञ्च वार्षपर्वणीमुपयेमे ॥१॥ अत्रानुवंशश्लोको भवति ।

यदुञ्च तुर्वसुञ्चैव देवयानी व्यजायत ।
द्रह्युञ्चानुञ्च पूरुञ्च शर्म्मिष्ठा वार्षपर्वणी ॥२॥

काव्यशापाच्च अकालेनैव ययातिर्जरामवाप ॥३॥ प्रसन्नशुक्तवचनाच्च जरां सङ्क्रामयितुं ज्येष्ठं पुत्रं यदुमुवाच, त्वन्माता महशापादियमकालेनैव जरा मामुपस्थिता । तानहं तस्यैवानुग्रहाद् भवतः सञ्चारयाम्येकं वर्षसहस्रम्, न तृप्तोऽस्मि विषयेषु, त्वद्वयसा विषयानहं भोक्तुमिच्छामि ॥४॥ नात्र भवता प्रत्याख्यानं कर्त्तव्यमित्युक्तः स नैच्छत् तां जरामादातुम् । तञ्चापि पिता शशाप, त्वत् प्रसूतिर्न राज्यार्हा भविष्यतीति ॥५॥ अनन्तरञ्च द्रह्युतुर्वसुमनुञ्च पृथिवीपतिर्जराग्रहणार्थं स्वयौवनप्रदानाय च चोदयामास । तैरप्येककैश्येन, प्रत्याख्यातस्तांश्च शशाप । अथ शर्म्मिष्ठातनयमशेषकनीयांसं पूरुं तथैवाह, स चातिप्रवणमतिः प्रणम्य पितरं सबहुमानो महान् प्रसादोऽयमस्माकमित्युदारमभिधाय जरां प्रतिजग्राह । स्वकीयञ्च यौवनं पित्रे ददौ । सोऽपि च नवं यौवनमासाद्य धर्माविरोधेन यथाकामं यथाकालोपपन्नं यथोत्साहं विषयं चचार । सम्यक् प्रजापालनमकरोत् ॥६॥ विश्वाच्या सहोपभोगं भुक्त्वा कामानामन्तमवाप्स्यामीत्यनुदिनं तन्मनस्को बभूव ॥७॥ अनुदिनञ्च उपभोगतश्च कामानतीव रम्यान् मेने ॥८॥ ततश्चैवमगायत् ।

### ययातिरुवाच

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥९॥
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तदित्यतितृषं त्यजेत् ॥१०॥
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
समदृष्टेस्तदा पुंसः सर्वा एव सुखा दिशः ॥११॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्य्यतः ।
तां तृष्णां सन्त्यजन् प्राज्ञः सुखेनैवाभिपूर्यते ॥१२॥
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
धनाशा जीविताशा च जीर्यतोऽपि न जीर्यति ॥१३॥
पूर्णवर्षसहस्रं मे विषयासक्तचेतसः ।
तथाप्यनुदिनं तृष्णा ममैतेष्वेव जायते ॥१४॥
तस्मदितामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ॥१५॥

## पराशर उवाच

पूरोः सकाशादादाय जरां दत्त्वा च यौवनम् ।
राज्येऽभिषिच्य पूरुञ्च प्रययौ तपसे वनम् ॥१६॥
दिशि दक्षिणपूर्वस्यां तुर्वसुं प्रत्यथादिशत् ।
प्रतीच्याञ्च तथा द्रुह्युं दक्षिणापथतो यदुम् ॥१७॥
उदीच्याञ्च तथैवानुं कृत्वा मण्डलिनो नृपान् ।
सर्वपृथ्वीपतिं पूरुं सोऽभिषिच्य वनं ययौ ॥१८॥

इति श्रीविष्णुमाहापुराणे चतुर्थांशे दशमोऽध्यायः ॥१०॥

आदितः श्लोकानां समष्ट्यङ्काः-३,२६८+१८=३,२८६



## ॥ अथैकादशोऽध्यायः ॥
## (यदुवंशस्य सहस्रहस्तार्ज्जुन चरित्रस्य च वर्णनम्)

### पराशर उवाच

अतः परं ययातेः प्रथमपुत्रस्य यदोर्वंशमहं कथयामि । यत्राशेषलोकनिवासिमनुष्य-सिद्ध-गन्धर्व-यक्ष-राक्षस-गुह्यक-किम्पुरुषाप्सर-उरग-विहग-दैत्य-दानव-देवर्षि-राजर्षि मुमुक्षुभिर्धर्मार्थकाममोक्षार्थिभिस्तत्फललाभाय सदाभिष्टुता-परिच्छेद्यमाहात्म्येनांशेन भगवाननादिनिधनो विष्णुरवततार ॥१॥

अत्र श्लोकः-

यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ।
यत्रावतीर्णं विष्णवाख्यं परं ब्रह्म निराकृति ॥२॥

सहस्रजित्-क्रोष्टु-नल-रघुसंज्ञाश्चत्वारो यदुपुत्रा बभूवुः । सहस्रजित् पुत्रः शतजित् । तस्य हैहयवेणुहयास्त्रयः पुत्रा बभूवुः । हैहयाद् धर्मनेत्रः, ततः कुन्तिः, कुन्तेः साहञ्जिः, तत्तनयो महिष्मान्, तस्माद् भद्रश्रेण्यः, ततो दुर्द्दमः, तस्माद् धनकः, धनकस्य कृतवीर्य्य-कृताग्नि-कृतवर्म्म-कृतौजस-श्चत्वारः पुत्राः । कृतवीर्यादर्ज्जुनः सप्तद्वीपपति- बाहुसहस्रो जज्ञे । योऽसौ भगवदंशमत्रिकुलप्रसूतं दत्तात्रेयाख्यमाराध्य बाहुसहस्रम- धर्म्मसेवानिवारणां धर्म्मेण पृथिवीजयं धर्म्मतश्चानुपालनमरातिभ्योऽपराजय- मखिलजगत्प्रख्यातपुरुषाच्च मृत्युम्-इत्येतान् वरान् अभिलषितवान्, लेभे च । तेनेयमशेषद्वीपवती पृथ्वी सम्यक् परिपालिता । दशयज्ञसहस्राण्यसावजयत् । तस्य त श्लोकोऽद्यापि गीयते ॥३॥

नूनं न कार्त्तवीर्य्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञैर्दानैस्तपोभिर्वाप्रश्रयेण दमेन च ॥४॥

अनष्टद्रव्यता च तस्य राज्येऽभवत् ॥५॥ एवं पञ्चाशीतिसहस्राण्यब्दानव्याहता-रोग्यश्रीबलपराक्रमो राज्यमकरोत् । माहिष्मत्यां दिग्विजयाभ्यागतो नर्मदाजलाब-गाहनक्रीडानिपानमदाकुलेनायत्नेनेव तेनाशेषदेवदैत्यगन्धर्वेशजयोद्भूतमदावलेपो-ऽपि रावणः पशुरित बद्ध्वा स्वनगरैकान्ते स्थापितः ॥६॥ यः पञ्चाशीतिवर्षसहस्रो-पलक्षणकालावसाने भगवन्नारायणांशेन परशुरामेण उपसंहृतः । तस्य पुत्रशतप्रधानाः पञ्च पुत्रा बभूवुः, शूर-शूरसेनवृषणमधुध्वजसंज्ञाः । जयध्वजात् तालजङ्घः पुत्रोऽभवत् । तालजङ्घस्य पुत्रशतमासीत् । येषां ज्येष्ठो बीतिहात्रः, तथान्यो भरतः, भरताद् वृष-सुजातौ च । वृषस्य पुत्रो मधुरभवत् । तस्यापि वृष्णिप्रमुखं पुत्रशतमासीत् । यतो वृष्णिसंज्ञामेतद् गोत्रमवाप ।

मधुसंज्ञाहेतुश्च मधुरभवत् । यादवाश्च यदुनामोपलक्षणात् ॥७॥

इति श्रीविष्णुपुराणे चतुर्थांशे एकादशोऽध्यायः ॥११॥

✷

आदितः श्लोकानां समष्टयङ्काः-३,२८६+७=३,२९३

✷



## ॥ अथ द्वादशोऽध्यायः ॥
## (यदुपुत्रक्रोष्टृवंशकथनम्)

### पराशर उवाच

क्रोष्टुश्च यदुपुत्रस्यात्मजो वृजिनीवान् ।
त तश्च स्वाहिः, ततो रुषद्गुः, रुषद्गोश्चित्ररथः, तत्तनयः शशविन्दु-
चतुर्दश-महारत्नशचक्रवर्त्यभवत् ॥१॥ तस्य च शतसहस्रन्न पत्नीनामभवत् ।
दशलक्ष सङ्ख्याश्च पुत्राः । तेषाञ्च पृथुयशाः, पृथकर्म्मा, पृथुजयः, पृथुदानः,
पृथुकीर्तिः, पृथुश्रवाः, षट् पुत्राः प्रधानाः । पृथुश्रवसः पुत्रस्तमः, तस्मादुशनाः ।
यो वाजिमेधानां शतमाजहार ।
तस्य च शितेषुर्नाम पुत्रोऽभूत्, तस्यापि रुक्मवचः, ततः परावृत्, परावृत्तो
रुक्मेषुपृथुरुक्म- ज्यामघ-पालित-हरित-संज्ञाः पञ्चात्मजा बभूवः अत्राद्यापि
ज्यामघस्य श्लोको गीयते ॥२॥ भार्यावशास्तु ये केचिद् भविष्यन्तथवा मृताः ।
तेषान्तु ज्यामघः श्रेष्ठः शैव्यापतिरभून्नृपः ॥ अपुत्रा तस्य सा पत्री शैव्या नाम
तथाप्यसौ । अपत्यकामोऽपि भयान्नान्यां भार्य्यामविन्दत ॥ स
त्वेकदातिप्रभूत-गज-तुरग-सम्मर्द्दनातिदारुणे महाहवे युध्यमानः
सकलमेवारातिचक्रमजयत् ।
तच्चारिचक्रमपास्तपुत्र-कलत्रबन्धु- बलकोषं स्वमधिष्ठानं परित्यज्य दिशः प्रविद्रुतम्
॥३॥ तस्मिंश्च विद्रुतेऽतित्रासाल्लोलायत- लोचनयुगलं त्राहि तात भ्रातरित्याकुल
विलापविधुरं राजकन्यारत्नमद्राक्षीत् ॥४॥ तद्दर्शनाच्च तस्यामनुरागानुगतान्तरात्मा
स भूपोऽचिन्तयत् ॥५॥ साध्विदं ममाप्तयविरहितस्य बन्ध्याभर्त्तुः साम्प्रतं
विधिनापत्यकारणं कन्यारत्नमुपपादितम्, तदेतत् समुद्वहामि ।
अथ चैनां स्यन्दनमारोप्य स्वमधिष्ठानं नयामि ॥६॥ तथैव देव्याहमनुज्ञातः
समुद्वक्ष्यामीति ।
अथैनां रथमारोप्य स्वनगरमागच्छत् ॥७॥ विजयिनञ्च
राजानमशेषपौरभृत्यपरिजनामात्यसमवेता शैव्या द्रष्टुमधिष्ठानद्वारमागता ॥८॥ सा च
अवलोक्य राज्ञः सव्यपार्श्वर्त्तिनीं कन्यामीषदुद्भूतामर्षस्फुरदधरपल्लवा
राजानमवोचत्-अतिचपलचित्तात्र स्यन्दने केयमारोपिता इति ।
असावप्यनालोचितोत्तर- वचनोऽतिभयात् तामाह,-स्नुषा ममेयमिति ॥९॥ अथैनं
शैव्योवाच ॥ नाहं प्रसूता पुत्रण नान्या पत्न्यभवत् तव ।
स्नुषासम्बन्धवाच्यैषा कतमेन सुतेन ते ॥१०॥

इत्यात्मेर्ष्याकोप-कलुषित-वचनमुषितविवेकतया दुरुक्तपरिहारार्थमिदमवनी पतिराह- ॥११॥ यस्ते जनिष्यत्यात्मदजः, तस्येयमनैगतमेव भार्य्या निरूपिता । इत्याकर्ण्योद्भूतमृदुहासा तथेत्याह प्रविवेश च राज्ञा सहाधिष्ठानमिति ॥१२॥ अनन्तरश्चातिशुद्धलग्नहोरांशकावयवोक्तकृतपुत्रजन्मालापगुणाद् वयसः परिणाममुपगतापि शैव्या स्वल्पैरेवाहोभिर्गर्भमवाप ॥१३॥ कालेन च पुत्रमजीजनत् । तस्य च विदर्भ इति पिता नाम चक्रे ।

स च तां स्नुषामुपयेमे ॥१४॥ तस्याञ्चासौ क्रथ-कौशिकसंज्ञौ पुत्रावजनयत् । पुनश्च तृतीयं रोमपादसंज्ञं कुमारमजीजनत् । रोमपादाद् बभ्रुः, बभ्रोः पुत्रो धृतिः । कौशिकस्यापि चेदिः पुत्रोऽभूत्, यस्य सन्ततौ चैद्या भूपालाः ।

क्रथस्य स्नुषापुत्रस्य पुत्रः कुन्तिरभवत् ॥१५॥ कुन्तेर्वृष्णिः, वृष्णेर्निर्वृतिः, निवृतेर्दशार्हः ततश्च व्योमा, तस्मादपि जीमूतः, तस्यापि वंशकृतिः, ततो भीमरथः, तस्माद् नवरथः, ततश्च दशरथः, तस्य शकुनिः, तत्तनयः करम्भिः, करम्भेर्देवरातोऽभवत् । तस्माद् देवक्षत्त्रः तस्य मधुः, मधोरनवरथः, अनवरथात् कुरुवत्सः, ततश्चानुरथः, ततः पुरुहोत्रो जज्ञे ।

ततश्च अंशः, ततश्च सत्वतः, सत्वतादेते सात्वताः ॥१६॥ इत्येतां ज्यामघसन्ततिं सम्यक् श्रद्धासमन्वितः श्रुत्वा सर्वपापैः प्रमुच्यते ॥१७॥

इति श्रीविष्णुपुराणे चतुर्थांशे द्वादशोऽध्यायः ॥१२॥

आदितः श्लोकानां समष्ट्यङ्काः-३,२९३+१७=३,३१०



## ॥ अथ त्रयोदशोऽध्यायः ॥
## (सत्वपुत्राणां वर्णनम्, स्यमन्तकमणिवृत्तान्तकथनञ्च)

### पराशर उवाच

भजिन-भजमान-दिव्यान्धक-देवावृध-महाभोजवृष्णिसंज्ञाः सत्वतस्य पुत्रा बभूवुः ॥१॥
भजनानस्य निमि-बृकण-वृष्णयः, तथान्ये तद्वैमात्राः-शताजित् सहस्राजित्
अयुताजित् संज्ञाः ॥२॥
देवावृधस्यापि बभ्रुः पुत्रोऽभूत् । तस्य च अयं श्लोको गीयते ॥३॥
यथेव श्रृणुमो दूरात् सम्पश्यामस्तथान्तिकात् ।
बभ्रुः श्रेष्ठो मनुष्याणां दैवैर्देवाबृधः समः ॥४॥
पुरुषाः षट् च षष्टिश्च षट् सहस्राणि चाष्ट च ।
येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥५॥
महाभोजस्त्वतिधर्म्मात्मा । तस्यान्वये भोजा मार्त्तिकावता बभूवुः ॥६॥
वृष्णेः सुमुत्रो युधाजिच्च पुत्रोऽभवत् । ततश्चानमित्रशनी तथा ॥७॥
अनिमित्रान्निघ्नः, निघ्नस्य प्रसेन-सत्राजितौ ।
तस्य च सत्राजितस्य भगवानादित्यः सखाभवत् ॥८॥
एकदा त्वम्भोधेस्तीरसंश्रयः सूर्यं सत्राजितस्तुष्टाव ।
तन्मनस्कतया च भास्वानभिष्टूयमानोऽग्रतस्तस्य तस्थौ, अस्पष्टमुर्त्तिधरं
चैनमालोक्य सत्राजितः सूर्य्यमाह,-यथैव व्योम्नि त्वां वह्निपिण्डोपममहमपश्यं
तथैवाद्याग्रतो गतमप्यत्र नि किञ्चिद्भगवता प्रसादीकृतं विशेषमुपलक्षयामि ॥९॥
इत्येवमुक्ते (भगवता) सूर्य्येण निजकण्ठादुन्मुच्य स्यमन्तकनामा मणिरवतार्य्य
एकान्ते न्यस्तः, ततस्तमाताम्रोज्वादिकञ्च सत्राजितमाह भगवान्-वरमस्मत्तोऽभिमतं
वृणीष्वेति । स च तदेव मणिरत्नमयाचत । स चापि तस्मै तद् दत्त्वा वियति स्वं
धिष्ण्यमारुरोह ॥१०॥ सत्राजितोऽप्यमलमणिरत्नसनाथकण्ठतया सूर्य्य इव
तेजोभिरशेषदिगन्तराण्युद्भासयन् द्वारकां विवेश ॥११॥ द्वारकावासिजनपदस्तु
तमायान्तमवेक्ष्य भगवन्तमनादिपुरुषं पुरुषोत्तममवनिभारावतारणायांशेन
मानुषरूपधारिणं प्रणिपत्याह-भगवन् ! भगवन्तमयं नूनं द्रष्टुमायात्यादित्यः
इत्याकर्ण्य प्रहस्य च तानाह भगवान्, नायमादित्यः सत्राजितोऽयमादित्यदत्तं
स्यमन्तकाख्यं महामणिं बिभ्रदत्रोपायाति । तदेनं विश्रब्धाः पश्यत, इत्युक्तास्ते ययुः
॥१२॥ स च तं स्यमन्तकाख्यं महामणिमात्मनिवेशने चक्रे ॥१३॥

(भांजनभजमानदिव्यान्धकःदेवावृधमहाभोज) प्रतिदिनञ्च तन्मणिरत्नप्रवरमष्टौ कनकभारान् स्रवति ॥१४॥ तत्प्रभावाच्च सकलस्यैव राष्ट्रस्योपसर्गा अनावृष्टि-व्यालाग्नि- चौरदुर्भिक्षादिभयं न भवति ॥१५॥ अच्युतोऽपि तद्रत्नमुग्रसेनस्य भूपतयोग्यमेतदिति लिप्साञ्चक्रे, गोत्रभेदभयाच्च शक्तोऽपि न जहार ॥१६॥ सत्राजितोऽप्यच्युतो मामेतद् याचिष्यतीत्यवगतरत्नलोभः स्वभ्रात्रे प्रसेनाय तद्रत्नं दत्तवान् ॥१७॥ तच्च शुचिना ध्रियमाणामशेषसुवर्णस्रावादिकं गुणमुत्पादयति, अन्यथा य एव धारयति, तमेव हन्तीति । असावपि प्रसेनः स्यमन्तकेन कण्ठासक्तेनाश्वमारुह्याटव्यां मृगयामागच्छत् । तत्र च सिंहाद् वधमवाप । साश्वञ्च तं निहत्य सिंहोऽप्यमलमणिरत्नमास्याग्रेणादाय गन्तुमुद्यतः ऋक्षाधिपतिना जाम्बवता दृष्टो घातितश्च । जाम्बवानप्यमलं तन्मणिरत्न मादाय स्वविलं प्रविवेश, सुकुमारकसंज्ञाय च बालकाय क्रीडनमकरोत् ॥१८॥ अनागच्छति च तस्मिन् प्रसेने कृष्णो मणिरत्नमभिलषितवान् न च प्राप्तवान्, नूनमेतदस्य कर्म्म, नान्येन प्रसेनो हन्यत इत्यखिल एव यदुलोकः परस्परं कर्णाकर्ण्यकथयत् ॥१९॥ विदितलोकापवादवृत्तान्तश्च भगवान् यदुस्यैन्यपरिवारः प्रसेनाश्वपद वीमनूससार, ददर्श चाश्वसमेतं प्रसेनं निहतं सिंहेन । अखिलजनपदमध्ये सिंहपददर्शनकृतपरिशुद्धिः सिंहपदमनुससार ॥२०॥ ऋक्षविनिहतञ्च सिंहमप्यल्पे भूमिभागे दृष्ट्वा ततश्च तद्रत्नगौरवादृक्षस्यापि पदान्यनुययौ । गिरितटे च सकलमेव यदुसैन्यमवस्थाप्य तत् पदानुसारी ऋक्षविलं प्रविवेश । अर्द्ध प्रविष्टश्व धात्र्याः सुकुमाराकमुल्लापयन्त्या वाणीं शुश्राव ॥२१॥ सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः । सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तकः ॥२२॥ इत्याकर्ण्य लब्धस्यमन्तकोदन्तोऽन्तः प्रविष्टः कुमार-क्रीडनकीकृतञ्च धात्रीहस्ते तेजोभिर्जाज्वल्यमानं स्यमन्तकं ददर्श ॥२३॥ तञ्च स्यमन्तकाभिलाषचक्षुषमपूर्व पुरुषमागतमवेक्ष्य धात्री त्राहि त्राहीति व्याजहार ॥२४॥ तदार्त्तनादश्रवणानन्तरञ्चामर्षपूर्णहृदयः स जाम्बवान् आजगाम, तयोश्च परस्परं युध्यतोर्द्वयोर्युद्धमेकविंशतिं दिनान्यभवत् । ते च यदुसैनिकास्तत्र सप्ताष्टदिनानि तन्निष्क्रान्तिमुदीक्षमाणस्तस्थुः । अनिष्क्रममाणे च मधुरिपौ असाववश्यमत्र विलेऽत्यन्तनाशमाप्तो भविष्यत्यन्यथा तस्य कथमेतावन्ति दिनानि शत्रुजये व्याक्षेपो भवतीति कृताध्यवसाया द्वारकामागता हतः कृष्णा इति कथयामासुः ॥२५॥ तद् बान्धवाश्च तत्कालोचितमखिलमुपरतक्रियाकलापं चक्रुः ॥२६॥ तत्र तास्य युध्यमानस्यातिश्रद्धादत्तविशिष्टपात्रोपयुक्तान्नतोयादिना कृष्णस्य बलप्राणपुष्टिरभूत् ॥२७॥ इतरस्यानुदिनमतिगुरुपुरुषभिद्यमानस्यातिनिष्ठुरप्रहारपीडिताखिलावयवस्य निराहारतया बलहानिः । निर्जितश्च भगवता जाम्बवान्

प्रणिपत्याह-असुर-सुर-यक्ष-गन्धर्व-राक्षसादिभिरप्यखिलैर्भगवान् न जेतुं शक्यः, किमुतावनिगोचरै- रल्पवीर्य्यैर्नरावयवभूतैश्च तिर्य्यग्योन्यनुसृतिभिः, किं पुनस्मद्विधैरवश्यं भगवतोऽस्मत्स्वामिनो नारायणस्य सकलजगत्परायण- स्यांशेन भगवता भवितव्यमित्युक्तः ॥२८॥ तस्मै भगवाखिलमवनिभारावतारमाचचक्षे ॥२९॥ प्रीत्याञ्जितकरतलस्पर्शनेन चेनमपगतयुद्धखेदं चकार ॥३०॥ स च प्रणिपत्यैनं पुनरपि प्रसाद्य जाम्बवतीं नाम कन्यां गृहागमनार्घ्यभूतां ग्राहयामास ॥३१॥ स्यमन्तकमणिमप्यसौ प्रणिपत्य तस्मै प्रददौ । अच्युतोऽप्यतिप्रणतात् तस्मादग्राह्यमपि तन्मणिरत्नमात्मशोधनाय जग्राह ॥३२॥ सह जाम्बवत्या द्वारकामाजगाम । भगवदागमनोद्भूतहर्षोत्कर्षस्य द्वारकावासिजनस्य कृष्णावलोकनानुक्षणमेवातिपरिणत- वयसोऽपि नवयौवनामिवाभवत् । आनकदुन्दुभिश्च दिष्ट्या दिष्ट्येति च सकलयादवाः स्त्रियश्च सभाजयामासुः ॥३३॥ भगवानपि यथानुभूतमशेषयादवसमाजे यथावदाचचक्षे, स्यमन्तकञ्च सत्राजिताय दत्त्वा मिथ्याभिशस्तिवशुद्धिमवाप, जाम्बवतीञ्चान्तः पुरे निवेशयामास । सत्राजितोऽपि मयास्यभूतमलिनमारोपितमिति जातसन्त्रासः स्वसुतां सत्यभामां भगवते भार्यां ददौ ॥३४॥ ताञ्चाक्रूर-कृतवर्म्म-शतधन्वप्रमुखा यादवाः पूर्वं वरयामासुः । ततस्तत्प्रदानादवज्ञातमात्मानं मन्यमानाः सत्राजिते वैरानुबन्धं चक्रुः । अक्रूर-कृतवर्म्मप्रमुखाश्च शतधन्वानमूचुः, अयमितिदुरात्मा सत्राजितो योऽस्माभिर्भवता चाभ्यर्थितोऽप्यात्मजामस्मान् भवन्तं चाविगणय्य कृष्णाय दत्तवान्, तदलमनेन जीवता । घातयित्वैनं तन्महारत्नं त्वया किं न गृह्यते ? वयमप्यभ्युपपत्स्यामः यद्यच्युतस्तवापि वैरानुबन्धं करिष्यतीति ॥३५॥ एवमुक्तस्तथेत्यसावप्याह । जतुगृहदग्धानाञ्च पाण्डुनन्दनानां विदितपरमार्थोऽपि भगवान् दुर्योधन प्रयत्नशैथिल्यार्थं कुल्यकरणाय वारणावतं गत ॥३६॥ गते च तस्मिन् सुप्तमेव सत्राजितं शतधन्वा जघान, मणिरत्नञ्चाददे । पितृवधामर्षपूर्णा च सत्यभामा शीघ्रं स्यन्दनमारूढा वारणावतं गत्वा भगवतेऽहं प्रतिपादितेति अक्षान्तिमता शतधन्वना अस्मत्पिता व्यापादितः, तच्च स्यमन्तकमणिरत्नमपहृतम् । तदियमस्यावहासना । तदालोच्य यदत्र युक्तं, तत्क्रियतामिति कृष्णमाह ॥३७॥ तया चैवमुक्तः परितुष्टान्तः करणोऽपि कृष्णः सत्यभामाममर्षताम्रलोचनः प्राह, सत्ये ! ममैषावहासना, नाहमेतां तस्य दुरात्मनः सहिष्ये ॥३८॥ न ह्यनुल्लङ्घ्य वरपादपं तत्कृतनीडाश्रयिणो विहङ्गा वध्यन्ते ॥३९॥ तदलमत्यर्थममुनास्मत्पुरतः शोकप्रेरितवाक्यपरिकरेण, इत्युक्त्वा द्वारकामभ्येत्य बलदेवमेकान्ते वासुदेवः प्राह, मृगयागतं प्रसेनमटव्यां मृगपतिर्जघान । सत्राजितोऽप्यधुना शतधन्वना निधनं प्रापितः । तदुभयविनाशात् तन्मणिरत्नमावाभ्यां सामान्यं भविष्यति ॥४०॥ तदुत्तिष्ठ,

आरुह्यतां रथः, शतघनुर्निधनायोद्यमं कुरु, इत्यभिहितस्तथेति समन्वीप्सितवान्।
कृतोद्योगौ च तावुभावुपलभ्य शतधन्वा कृतवर्माणमुपेत्य
पार्ष्णिपूरण-कर्मनिमित्तमचोदयत्। आह चैनं कृतवर्मा, नाहं बलभद्र-वासुदेवाभ्यां
सह विरोधायालम्, इत्युक्तश्चाक्रूरमचोदयत्।
आह चासावपि, नहि कश्चिद् भगवता पादप्रहार-परिकम्पितजगत्त्रयेण
असुरवरवनितावैधव्यकारिणा प्रबलरिपुचक्राप्रतिहतचक्रेण चक्रिणा,
मदमुदितनयनावलोकितारिबलविशातनेन अतिगुरुवैरिवारणा-
कर्षाविष्कृतमहिमोरुसीरेण सीरिणा च सह सकलजगद्वन्द्यानाममरवराणामपि योद्धुं
समर्थः, किमुताहम्। तदन्यतः शरणमभिलष्यताम्॥४१॥ इत्युक्तः
शतधनुराह,यद्यस्मत् परित्राणासमर्थं भवानात्मानमवगच्छति, तदयमस्मन्मणिः
संगृह्य रक्ष्यताम्। इत्युक्तः सोऽप्याह, यद्यन्त्यायामप्यवस्थायां न कस्मैचिद्भवान्
कथयिष्यति, तदहमेनं ग्रहीष्यामि। तथेत्युक्ते अक्रूरस्तन्मणिरत्नं जग्राह॥४२॥
शतधनुरप्यतुलवेगां शतयोजनवाहिनीं वडवामारुह्यापक्रान्तः।
शैव्य-सुग्रीव-मेघपुस्प- बलाहकाश्व-चतुष्टय-युक्तरथावस्थितौ बलदेववासुदेवौ
तमनुप्रयातौ॥४३॥ सा च वडवा शतयोजनप्रमाणं मार्गमतीत्य पुनरपि वाह्यमाना
मिथिलावनोद्देशे प्राणानुत्ससर्ज। शतधनुरपि तां परित्यज्य पदातिरेवाद्रवत्॥४४॥
कृष्णोऽपि बलभद्रमाह, तावदत्रैव स्यन्दने भवता स्थेयम्।
अहमेनमधमाचारं पदातिरेव पदातिमनुगम्य यावद् घातयामि।
अत्र हि भूभागे दृष्टदोषा हयाः नैतिऽश्वा भवतेमं भूमिभागमुल्लङ्घ्य नेयाः॥४५॥
तथेत्युक्त्वा बलभद्रो रथ एव तस्थौ। कृष्णोऽपि द्विक्रोशमात्र भूमि भागमनुसृत्य
दूरस्थस्यैव चक्रं क्षिप्त्वा शतधनुषः शिरीश्चिच्छेद।
तच्छरीराम्बरादिषु च बहुप्रकारमन्विष्यन्नपि स्यमन्तकं मणिं नावाप यदा, तदोपगम्य
बलभद्रमाह, वृथैवास्माभिर्घातितः शतधनुः न प्राप्तमखिलजगत्सार भूतं तन्मणिरत्नम्
। इत्याकर्ण्य उद्भूतकोपो बलदेवो वासुदेवमाह, धिक् त्वां यस्त्वमर्थलिप्सुः।
एतच्च ते भ्रातृत्वान्मर्षये तदयं पन्थाः, स्वेच्छया गम्यताम्, न मे द्वारकया, न त्वया,
न बन्धुभिः कार्यम्। अलमेभिर्ममाग्रतोऽलीकशपथैः।
इत्याक्षिप्य तं तथा प्रसाद्यमानोऽपि न तस्थौ, विदेहपुरीं प्रविवेश॥४६॥
जनकश्चार्घ्यपूर्वकमेवैनं गृहं प्रवेशयामास। स तत्रैव ततस्थौ।
वासुदेवोऽपि द्वारकामाजगाम। यावच्च जनकराजगृहे बलभद्रोऽवतस्थे, तावत्
धर्तराष्ट्रो दुर्योधनस्तत्सकाशाद् गदाशिक्षामशिक्षत॥४७॥ वर्षत्रयान्ते च
बभ्रूग्रसेनप्रभृतिभिर्यादवैर्न तद्रत्नं कृष्णेनापहृतमिति कृतावगतिर्विदेशपुरीं गत्वा
बलदेवः सम्प्रत्याय्य द्वारकामानीतः॥४८॥ अक्रूरोऽप्युत्तममणिसमुद्भूतसुवर्ण-

ध्यानपरस्ततो यज्ञानीजे ॥४९॥ सवनगतौ हि क्षत्त्रियवैश्यौ निघ्नन् ब्रह्महा भवतीत्यतो दीक्षाकवचं प्रविष्ट एव तस्थौ द्विषष्टिवर्षाणि ॥५०॥ एव तन्मणिरत्नप्रभावात् तत्रोपसर्गदुर्भिशमराकादिकं नाभूत् ॥५१॥ अथाक्रूरपक्षीयैर्भोजैः शत्रुघ्ने सात्वतस्य प्रपौत्रे व्यापादिते भोजैः सहाक्रूरो द्वारकामपहाय अपक्रान्तः ॥५२॥ तदपक्रान्तिदिनादारभ्य तत्रोपसर्गव्यालानावृष्टिमरकाद्युपद्रवा बभूवुः । अथ यादव-बलभद्रोग्रसेन-समवेतोऽमन्त्रयद् भगवानुरगारिकेतनः, कियदिदमेकदैव प्रचुरोपद्रवागमनोमेतदालोच्यताम् ॥५३॥ इत्युक्ते अन्धकनामा यदुवृद्धः प्राह, अस्याक्रूरस्य पिता श्वफल्को नाम यत्र यत्राभूत्, तत्र तत्र दुर्भिक्ष-मरकानावृष्ट्यादिकं नाभूत् ॥५४॥ काशिराजस्य विषयेऽत्यन्तानावृष्ट्यां श्वफल्कोऽनीयत्, ततस्तत्क्षणादेव देवो ववर्ष । काशिराजस्य पत्न्याश्च गर्भे कन्या पूर्वमासीत् ॥५५॥ सापि पूर्णेऽपि प्रसूतिकाले नैव निश्चक्राम । एवञ्च तस्य गर्भस्य द्वादश वर्षाण्यनिष्क्रामतो ययुः । काशिराजस्तु तामात्मजां गर्भस्थामाह, पुत्रि ! कस्मान्न जायसे ? निष्क्रम्यताम् आस्यन्ते द्रष्टुमिच्छामि । स्वकाञ्च मातरं किमिति चिरं क्लेशयसि इत्युक्ता सा गर्भस्थैव व्याजहार, तात ! यद्येकैकां गां दिने दिने ब्राह्मणेभ्यः प्रयच्छसि, तदाहमन्यैस्त्रिभिर्वर्षैरस्माद्गर्भात् तावदवश्यं निष्क्रमिष्यामीति । एतच्च तद्वचनमाकर्ण्य राजा ब्राह्मणाय दिने दिने गां प्रादात्, सापि तावता कालेन जाता । ततस्तस्याः पिता गान्दिनीति नाम चकार । ताञ्च गान्दिनीं कन्यां श्वफल्कायोपकारिणो गृहागतायार्घ्यभूतां प्रादात्, सा च गान्दिनी प्रतिदिनं यावज्जीवं ब्राह्मणाय गां दत्तवती । तस्यामयमकूरः श्वफल्काज्जज्ञे । तस्यैवङ्गुणमिथनादुत्पत्तिः ॥५६॥ तत् कथमस्मिन्नपक्रान्तेऽत्र मरकदुर्भिक्षाद्युपद्रवा न भविष्यन्ति । तदयमानियतामिति, अलमत्रातिगुणवत्यपराधान्वेषणेन इति ॥५७॥ यदुवृद्धस्यान्धकस्य एतद्वचनमाकर्ण्य केशवोग्रसेनबलभद्रपुरोगमैर्यदुभिः कृतापराधतितिक्षाभवमभयं दत्त्वा श्वाफल्किः स्वपुरमानीतः, तत्र चागत एव तत्स्थ स्यमन्तकमणेरनुभावादनावृष्टि-मरक-दुर्भिक्षव्यालाद्युपद्रवः शशाम । कृष्णश्च चिन्तयामास, श्वल्पमेतत् कारणं यदयं गान्दिन्यां श्वफल्केनाक्रूरो जनितः, सुमहांश्चायमनावृष्टिदुर्भिक्षमरकाद्युपशमनकारी प्रभावः ॥५८॥ तन्नूनमस्य सकाशे स महामणिः स्यमन्तकाख्यस्तिष्ठति । तस्य ह्येवंविधाः प्रभावाः श्रूयन्ते । अयमपि यज्ञादनन्तरमन्यत् क्रत्वन्तरं, तस्माद् यज्ञान्तरं यजतीति । अल्पोपादानञ्चास्य । असंशयमत्रासौ वरमणिस्तिष्ठतीति कृताध्यवसायोऽन्यत् प्रयोजनमुद्दिश्य सकलयादवसमाजमात्मगेहे एवाचीकरत् । तत्र चोपविष्टेष्वखिलेषु यादवेषु पूर्वप्रयोजनमुपन्यस्य पर्यवसिते च तस्मिन् प्रसङ्गागतपरिहासकथामक्रूरेण सह कृत्वा जनार्द्दनस्तमक्रूरमाह ॥५९॥ दानपते !

जानीम एव वयं, यथा शतधन्वना अखिलजगत्सारभूतं स्यमन्तकरत्नं भवतः सकाशे समर्पितम् । तदेतद्राष्ट्रोपकारकं भवतः सकाशे तिष्ठतीति तिष्ठतु, सर्व एव वयं तत्प्रभावफलभुजः, किन्त्वेष बलभद्रोऽस्मानाशङ्कितवान् । तदस्मत्प्रीतये दर्शय, इत्यभिहितः सरत्नः सोऽचिन्तयत् । किमत्रानुष्ठेयम् ? अन्यथा चेत् ब्रवीम्यहं, तत् केवलाम्बरतिरोधानमन्विष्यन्तो रत्नमेते द्रक्ष्यन्तीति, अतोऽन्वेषणां न क्षेममिति सञ्चिन्त्य तमखिलजगत्कारणभूतं नारायणमाहाक्रूरः भगवन् ! ममै तत् स्यमन्तकमणिरत्नं शतधनुषा समर्पितम् ॥६०॥ अपगते च तस्मिन् अद्य श्वः परश्वो वा भगवान् मां याचिष्यतीति कृतमतिरतिकृच्छ्रेणैतावन्तं कालमधारयम्, अस्य च धारणक्लेशेनाहमशेषोपभोगेष्वसङ्गिमानसो न वेदिम् स्वसुखकलामपि ॥६१॥ एतावन्मात्रमशेषराष्ट्रोपकारि धारयितुं न शक्नोतीति मां भगवान् मंस्यत इत्यात्मना न चोदितम् ॥६२॥ तदिदं स्यमन्तकरत्नं गृह्यताम्, इच्छया यस्याभिमतं तस्य समर्प्यताम् । ततः सोऽधरवस्त्रनिगोपितातिलघुकनकसमुद्गकं प्रकटीकृतवान् ॥६३॥ ततश्च निष्काम्य स्यमन्तकमणिं तत्र यदुसमाजे मुमोच । मुक्तमात्रे च तेनातिकान्त्या तदखिलमास्थानमुद्द्योतितम् ॥६४॥ अथाहाक्रूरः, स एष मणिर्यः शतधन्वनास्माकं समर्पितः, यस्यायं, स एनं गृह्णात्विति । तन्मणिरत्नमालोक्य सर्वयादवानां साधु साध्विति विस्मितमनसां वाचाऽश्रूयन्त । तमालोक्य ममायमच्युतेनैव सामान्यः समन्विच्छित इति बलमद्रः सस्पृहोऽभवत् ॥६५॥ ममैवेदं पितृधनमित्यतीव च सत्यभामापि स्पृहयाञ्चकार । बलसत्यान्नावलोकनात् कृष्णोऽप्यात्मानं चक्रान्तरावस्थितमिव मेने ॥६६॥ सकलयादवसमक्षञ्चाक्रूरमाह, एतद्धि मणिरत्नमात्मशोधनायैषां यदूनां दर्शितम् । एतच्च मम बलभद्रस्य च सामान्यं, पितृधनञ्चैतत् सत्यभामाया नान्यस्य ॥६७॥ एतच्च सर्वकालं शुचिना ब्रह्मचर्यगुणवता ध्रियमाणमशेषराष्ट्रस्योपकारकम्, अशुचिना ध्रियमाण माधारमेव हन्ति ॥६८॥ अतोऽहमस्य षोडशस्त्रीसहस्रपरिग्रहादसमर्थो धारणे ॥६९॥ कथञ्चैतत्, सत्यभामा स्वीकरोतु ? आर्य्येण बलभद्रेणापि मदिरा पानाद्यशेषोपभोगपरित्यागः कथं कार्यः । तदयं यदुलोकोऽयं बलभद्रोऽहं सत्या च त्वां दानपते ! प्रार्थयामः, एतद्भवानेव धारयितं समर्थः, त्वत्स्थञ्चास्य राष्ट्रस्योपकारकं, तद्भवानशेषराष्ट्रोपकारनिमित्तमेतत्पूर्ववद् धारयतु । त्वयान्यथा न वक्तव्यमित्युक्ते दान पतिस्तथेत्युक्त्वा जग्राह तन्महामणिरत्नम् । ततः प्रभृति चाक्रूरः प्रकटेनैवातीव तेजसा जाज्वल्यमानेनात्मकण्ठासक्तेनादित्य इवांशुमाली चचार ॥७०॥ इत्येतां भगवतो मिथ्याभिशस्तिक्षालनां यः स्मरति, न तस्य कदाचिदल्पापि मिथ्याभिशस्तिर्भवति,

## अव्याहतेन्द्रियश्चाखिलपापमोक्षमवाप्नोति ॥७१॥

**इति श्रीविष्णुपुराणे चतुर्थांशे त्रयोदशोऽध्यायः ॥१३॥**

**आदितः श्लोकानां समष्ट्यङ्काः-३,३१०+७१=३,३८१**



## ॥ अथ चतुर्दशोऽध्यायः ॥
## (अनमित्रान्धकयोर्वंशवर्णनम्)

### पराशर उवाच

अनमित्रस्यानुजः शिनिर्नामाभवत् । तस्यापि सत्यकः, सत्यकात् सात्यकिर्युयुधाननामा, ततोऽप्यसङ्गः, तत्पुत्रश्च तूणिः, तूणेर्युगन्धर इति शैनेयाः ॥१॥ अनिमित्रस्यैवान्वये पृश्निः, तस्माच्च श्वफल्कः। तत्प्रभावः कथित एव । श्वफल्कस्य कनीयांश्चिचक्रका नामाभवद् भ्राता, श्वफल्कादक्रूरो गान्दिन्यामभवत् । तथोपमद्गु-मृदल-विशारि-मेजय-गिरि-क्षत्रोपक्षत्र- शत्रुघ्न-विमर्दनधर्म-धृगद्दष्टशर्म-गन्धमोजावाह-प्रतिवाहाख्याःपुत्राः सुताराख्या च कन्या । देववान् उपदेवश्च अक्रूरपुत्रौ । पृथुविपृथुप्रमुखाश्चिचक्रकस्य पुत्रा बहवोऽभवन्॥२॥ कुकुर-भजमान-शुचि-कम्बलबर्हिषख्यास्तथान्धकस्य चत्वारः पुत्राः ॥३॥ कुकुलाद् धृष्टः, तस्माच्च कपोतरोमा, ततश्च विलोमा, तस्मादपि तुम्बुरुसखा भवसंज्ञकश्चन्दोदकदुन्दुभिः । ततश्चाभिजित्, ततः पुनर्वसुः, तस्याप्याहुकः पुत्रः, आहुकी कन्याभूत्॥४॥ आहुकस्य देवकोग्रसेनौ द्वौ पुत्रौ । देववानुपदेवश्च सुदेवो देवरक्षितो देवकस्यापि चत्वारः पुत्राः । तेषाञ्च वृकदेवा उपदेवा देवरक्षिता श्रीदेवा शान्तिदेवा सहदेवा देवकी च सप्त भगिन्यः । ताश्च सर्वा एव वसुदेव उपयेमे । उग्रसेनस्यापि कंस-न्यग्रोध-सुनाम-कङ्क-शङ्क-स्वभूमि-राष्ट्रपाल-युद्धमुष्टि-तुष्टिमत्-संज्ञाः पुत्राः, कंसा कंसवती सुतनू राष्ट्रपाली कङ्की चोग्रसेनतनुजाः ॥५॥ भजमानाथ विदूरथः पुत्रोऽभवत् । विदूरथात् शूरः, शूरात् शमी, शमिनः प्रतिक्षत्रः, तस्मात् स्वयम्भोजः, ततश्च हृदिकः ॥६॥ ततश्च कृतवर्मा, तस्मात् शतधनुर्देवमीढुषाद्या बभूवुः ॥७॥ देवमीढुषस्य शूरः, शूरस्यापि मारिषा नाम पत्न्यभवत्॥८॥ अस्याञ्चासौ दश पुत्राजनयद् वासुदेवपूर्वान् । वासुदेवस्य जातमात्रस्यैव एतद्गृहे भगवदंशावतारमव्याहतदृष्ट्या पश्यद्भिर्देवैर्दिव्या आनका दुन्दुभयश्च वादिताः ॥९॥ ततस्तदैवानकदुन्दुभिसंज्ञामवाप । तस्यापि देवभाग-देवश्रवोऽनाधृष्टि-करुन्धक-वत्सबालकसृञ्जय-श्याम-शमीक-गण्डूषसंज्ञा नव भ्रातरो बभूवुः, पृथा श्रुतदेवा, श्रुतकीर्त्तिः, श्रुतश्रवाः राजाधिदेवी च वसुदेवादीनां पञ्चभगिन्योऽभवन् । शूरस्य च कुन्तिभोजनामा सखाभवत् । तस्मै चापुत्राय पृथामात्मजां विधिना शूरोऽददात् । ताञ्च पाण्डुरुवाह । तस्याञ्च धर्मानिलशक्रैर्युधिष्ठिर भीमार्जुनाख्यास्त्रयः पुत्राः समुत्पादिताः । पूर्वमनढायाश्च भगवता भास्वता कर्णाख्यः कानीनः पुत्रोऽजन्यत ॥१०॥ तस्याश्च

सपत्नी माद्री नामाभवत् । तस्याञ्च नासत्यदस्राभ्यां नकुलसहदेवौ पाण्डोः पुत्रौ जनितौ । श्रुतदेवान्तु वृद्धशर्मा नाम कारूष उपयेमे । तस्यां दन्तवक्रो नाम महासुरो जज्ञे । श्रुतकीर्तिमपि कैकेयराज उपयेमे । तस्यां सन्तर्द्दनादयः पञ्च कैकेयाः पुत्रा बभूवुः । राजधिदेव्यामावन्त्यौ विन्दानुविन्दौ जज्ञाते ॥११॥ श्रुतश्रवसमपि चेदिराजो दमघोषनामा उपयेमे । तस्यां शिशुपालमुत्पादयामास ।
स हि पूर्वमप्यनाचारविक्रमसम्पन्नो दैत्यादिपुरुषो हिरण्यकशिपुरभूत् ॥१२॥ यश्च भगवता सकललोकगुरुणा घातितः, पुनरप्यक्षतवीर्यशौर्यसम्पत् पराक्रमगुणः समाक्रान्तसकल-त्रैलोक्येश्वरप्रभावो दशाननोऽभवत् ॥१३॥
बहुकालोपभुक्त-भगवत्सकाशादेवाप्त-शरीर-पातोद्भव-पुण्यफलोशऽथ भगवतैव राघवरूपिणा सोऽपि निधनमुपनीतः, पुनश्चेदिराज-दमघोषपुत्रः शिशुपाल-नामाभवत् ॥१४॥ शिशुपालत्वे च भगवतो भूभारावतारणायावतीर्णांशस्य पुण्डरीकनयनाख्यस्य उपरि द्वेषानुबन्धमतितरां चकार । भगवता च निधनमुपनीतस्तत्रैव परमात्मभूते मनसस्तदेकाग्रतया तत्रैव सायुज्यमवाप ॥१५॥ भगवान् हि प्रसन्नो यथाभिलषितं ददाति, अप्रसन्नोऽपि निघ्नन् दिव्यमनुपमं स्थानं प्रयच्छति ॥१६॥

इति श्रीविष्णुपुराणे चतुर्थांशे चतुर्दशोऽध्यायः ॥१४॥

आदितः श्लोकानां समष्टयङ्काः-३,३८१+१६=३,३९७



## ॥ अथ पञ्चदशोऽध्यायः ॥
## (शिशुपालस्य पूर्व-पूर्वजन्मवृत्तान्तस्य वसुदेवस्य च सन्तानानां वर्णनम्)

### मैत्रेय उवाच

हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना ।
अवाप निहतो भोगानप्राप्यानमरैरपि ॥
न लयं तत्र तेनैव निहतः स कथं पुनः ।
सम्प्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ ॥
एतदिच्छाम्यहं श्रोतु सर्वधर्मभृतां वर ! ।
कौतूहलपरेणैतत् पृष्टो मे वक्तुमर्हसि ॥१॥
दैत्येश्वरस्य तु वधायाखिललोकोतूपत्तिस्थितिविनाशकारिणा पूर्वतनुं गृह्णाता नृसिंहरूपमाविष्कृतम् । तत्र हिरणयकशिपोर्विष्णुरयमित्येवं न मनस्यभूत् ॥२॥ निरतिशयपुण्यजातसम्भूतमेतत् सत्त्वमिति रजोद्रेकप्रेरितैकाग्रमतिस्तद्भावनायोगात् ततोऽवाप्तवधहेतुकां निरतिशयामेवाखिलत्रैलोक्याधिक्यधारिणीं दशाननत्वे भोगसम्पदमवाप ॥३॥ नातस्तस्मिम्मन्ननादिनिधने परब्रह्मभूते भगवत्यनालम्बनीकृते मनसस्तत्रलयम् ॥४॥ दशाननत्वेऽप्यनङ्गपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपधारिणस्तद्रूपदर्शनमेवासीत्, नायमच्युत इत्यासक्तिर्विपद्यतोऽन्तः करणस्य मानुषबुद्धिरेव केवलमभूत् ॥५॥ पुनरच्युतविनिपात मात्रफलमखिल-भूमण्डलश्लाघ्य चेदिराजकुलजन्माव्याहतञ्चैश्वर्य्यं शिशुपालत्वे चावाप ॥६॥ तत्र त्वखिलान्येव भगवन्नामकारणान्यभवन् । ततश्च तत्कारणकृतानां तेषामशेषाणामेवाच्युतनाम्नामनवरतमनेकजन्मसंवर्द्धितविद्वेषानुबन्धिचित्तो विन्दिन् सन्तर्जनादिषु उच्चारणमकरोत् ॥७॥ तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्वलपीतवस्त्रधारी अमल-किरीट-केयूर-कटकोपशोभितमुदारपीवरचतुर्बाहु शङ्खचक्रगदासिधरमतिप्रौढवैरानुभावादटन-भोजन-स्नानासनशयनादिष्टवस्थान्तरेषु नैवा पययावस्यात्मचेतसः ॥८॥ ततस्तमेवाक्रोशेषूच्चारयन् तमेव हृदये धारयनात्मवधाय भगवदस्तचक्रांशुमालोज्वलमक्षयतेजः स्वरूपं परमब्रह्मस्वरुपमपगतरागद्वेषादिदोषं भगवन्तमद्राक्षीत् तावच्च भगवच्चक्रेणाशु व्यापादितः । तेन तत्स्मरणदग्धाखिलाघसञ्चयो भगवतैवान्तमुपनीतस्तस्मिन्नेव लयमुपययौ ॥९॥ एतत् तवाखिलं मयाभिहितम् ।

भगवानिह कीर्त्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिलसुरासुरादिदुर्लभं फलं प्रयच्छति
किमुत सम्यग् भक्तिमताम् ॥१०॥ वसुदेवस्यानकदुन्दुभेः
पौरवी-रोहिणी-मदिरा-भद्रा-देवकी-प्रमुखा बह्वयः पत्न्योऽभवन् ।
बलभद्र-शारण-शठ-दुर्मदादीन् पुत्रान् रोहिण्यामानक-दुन्दुभिरुत्पादयामास ।
बलभद्रोऽपि रेवत्यां निशठोल्मुकौ पुत्रावजनयत् ।
मार्ष्टि-मार्ष्टिम-च्छिशिशिशु-सत्यधृतिप्रमुखाः शारणास्यात्मजाः ॥११॥
भद्राश्व-भद्रबाहु-दुर्द्दम-भूताद्या रोहिण्याः कुलजाः ॥१२॥ नन्दोपनन्दकृतकाद्या
मदिरायास्तनयाः । भद्रायाश्चोपनिधि-गदाद्याः ।
वैशाल्यां च कौशिकमेकमजनयदानकदुन्दुभिः ।
देवक्यामपि कीर्त्तिमत्सुषेणोदापि-भद्रसेन- ऋजुदास-भद्रदेहाख्याः षट् पुत्रा जज्ञिरे ।
तांश्च सर्वानेव कंसो घातितवान् ॥१३॥ अनन्तरञ्च सप्तमं गर्भमर्द्धरात्रे भगवत्प्रहिता
योगनिद्रा रोहिण्या जठरमपकृष्य नीतवती ॥१४॥ कर्षणाच्चासावपि सङ्कर्षणाख्यमवाप
॥१५॥ ततः सकलजगन्महातरुमूलभूतो भूतातीतभविष्यदादि-सकलसुरासुर-मुनि-
मनुज-मनसामप्यगोचरोऽब्जभवप्रमुखै-रनलप्रमुखैश्च प्रणम्यावनिभारावतारणाय
प्रसादितो भगवाननादिमध्यो देवकीगर्भे समवततार वासुदेवः ॥१६॥
तत्प्रसादविवर्द्धितमानाभिमाना च योगनिद्रा नन्दगोपपत्न्या यशोदाया
गर्भमधिष्ठितवती ॥१७॥ सुप्रसन्नादित्यचन्द्रादिग्रहमव्यालादिभयं
सुस्थमानसमखिलमेवैतज्जगदपास्तधर्ममभवत् तस्मिंश्च पुण्डरीकनयने जायमाने
॥१८॥ जातेन च तेनाखिलमेवैतत् सन्मार्गवर्त्ति जगद्क्रियत ।
भगवतोऽप्यत्र मर्त्यलोकेऽवतीर्णस्य षोडशसहस्राण्येकोत्तरशताधिकानि
स्त्रीणामभवन् । तासाञ्च रुक्मिणी-सत्यभामा-जाम्बवती-जालहासिनी-प्रमुखा अष्टौ
पत्न्यः प्रधानाः । तासु चाष्टायुतानि लक्षञ्च पुत्राणां
भगवानखिलमुर्त्तिरनादिमानजनयत् ॥१९॥ तेषाञ्च प्रद्युम्न-चारुदेष्ण-
साम्बादयस्त्रयोदश प्रधानाः । प्रद्युम्नो हि रुक्मिणस्तनयां ककुद्वतीं नामोपयेमे ।
तस्यामस्यानिरुद्धो जज्ञे । अनिरुद्धोऽपि रुक्मिण एव पौत्रीं सुभद्रां नामोपयेमे ।
तस्यामस्य वज्रोऽभवत् । वज्रस्य प्रतिबाहुः, तस्यापि सुचारुः ।
एवमनेकशतसाहस्त्रपुरुषसङ्घस्य यदुकुलस्य पुरुषसंख्या वर्षशतैरपि
ज्ञातुं न शक्यते । यतो हि श्लोकावत्र चरितार्थौ ॥२०॥
तिस्रः कोटयः सहस्राणामष्टाशीतिशतानि च ।
कुमाराणां गुहाचार्याश्चापयोग्यासु ये रताः ॥२१॥
सङ्ख्यानं यादवानां कः करिष्यति महात्मनाम् ।
यत्रायुतानामयूतं लक्षेणास्ते शताधिकम् ॥२२॥

देवासुरहता ये तु दैतेयाः सुमहाबलाः ।
ते चोत्पन्ना मनुष्येषु जनोपद्रवकारिणः ॥२३॥
तेषामुत्सादनार्थाय भुवि देवो यदोः कुले ।
अवतीर्णः कुलशतं यत्रैकाभ्यधिकं द्विज ॥२४॥
विष्णुस्तेषां प्रमाणो च प्रभुत्वे च व्यवस्तितः ।
निदेशस्थायिनस्तस्य बभूवुः सर्वयादवाः ॥२५॥
प्रसूति वृष्णिवीराणां यः श्रृणोति नरःसदा ।
स सर्वपातकैर्मुक्तो विष्णुलोकं प्रपद्यते ॥२६॥

इति श्रीविष्णुपुराणे चतुर्थांशे पञ्चदशोऽध्यायः ॥१५॥

आदितः श्लोकानां समष्टयङ्काः-३,३९७+२६=३,४२३



## ॥ अथ षोडशोऽध्यायः ॥
## (तुर्वसुवंशकथनम्)

### पराशर उवाच

इत्येष समासतस्ते कथितः, तूर्वसोर्वंशमवधारय ॥१॥ तुर्वसोर्वह्निरात्मजः, वह्नेर्गोभानुः, ततश्च त्रैशाम्बः, तस्माच्च करन्धमः, तस्मादपि मरुतः, सोऽनपत्योऽभवत् ।
ततश्च पौरवं दुष्मन्तं पुत्रमकल्पयत्ष एवं ययातिशापात्
तद्वंशः पौरवं वंशमाश्रितवान् ॥२॥

इति श्रीविष्णुपुराणे चतुर्थांशे षोडशोऽध्यायः ॥१६॥
आदितः श्लोकानां समष्टचङ्काः-३,४२३+२=३,४२५





## ॥ अथ सप्तदशोऽध्यायः ॥
## (द्रुह्युवंशविवरणम्)

### पराशर उवाच

द्रुह्योस्तु तनयो बभ्रु ॥१॥ ततःसेतुः सेतुपुत्र आरद्धान् नाम, तदात्मजो गान्धारः, ततो धर्मः, धर्मादि धृतः, घृताद् दुर्गमः, ततः प्रचेताः, प्रचेतसः पुत्रशतधर्मबहुलानां म्लेछानामुदीच्यादीनामाधिपत्यमकरोत् ॥२॥

इति श्रीविष्णुपुराणे चतुर्थांशे सप्तदशोऽध्यायः ॥१७॥



आदितः श्लोकानां समष्टयङ्का:-३,४२५+२=३,४२७





## ॥ अथाष्टादशोऽध्यायः ॥
## (ययातिपुत्रस्यानोर्वंशवर्णनम्)

### पराशर उवाच

ययातेश्चतुर्थस्य पुत्रस्यानोःसभानर-चाक्षुषपरमेक्षुसंज्ञास्त्रयः पुत्रा बभूवुः, सभानरपुत्रः कालनरः, कालानरात् सृञ्जयः, सृञ्जयात् पुरञ्जयः, तस्माज्जनमेजयः, ततो महामणिः, तस्माच्च महामनाः, तस्मादप्युशीनर-तितीक्षू द्वौ पुत्रावुत्पन्नौ ।
उशीनरस्यापि शिवि-नृप-नर-कृमिखर्वाख्याः पञ्च पुत्रा बभूवुः ।
वृषदर्भ-सुवीर-कैकय-मद्रकाश्चत्वारः शिविपुत्राः, तितीक्षोरुषद्रथः पुत्रोऽभूत् ।
ततो हेमः, हेमात् सुतपाः, तस्माद् बलिः, यस्य क्षेत्रे दीर्घतमसा
अङ्ग-वङ्ग-कलिङ्ग-सुह्म-पौण्ड्राख्यं बालेयं क्षत्रमजन्यत ॥१॥ तन्नामसन्ततिसंज्ञाश्च पञ्च विषयाः बभूवुः ॥२॥ अङ्गसुतः पारः ततो दिविरथः, तस्माद् धर्मरथः, ततश्चित्ररथः ।
रोमपादसंज्ञो यस्य पुत्रो दशरथो यज्ञे ।
यस्मै अजपुत्रो दशरथः शान्तां नाम कन्यामनपत्याय दुहितृत्वे युयोज ॥३॥
रोमपादाच्च तुरङ्गः, तस्माच्च पृथुलाक्षः, ततश्चम्पः ।
यश्चम्पां निवेशायामास ॥४॥ चम्पस्य हर्यङ्गः, ततो भद्ररथः, भद्ररथाद् बृहद्रथः, बृहद्रथाद् बृहत्कर्मा । बृहत्कर्मणश्च वृहद्भानुः, तस्माद् बृहन्मनाः, ततो जयद्रथः, जयद्रथस्तु ब्रह्मक्षत्रान्तरालसंभूत्यां पत्न्यां विजयं नाम पुत्रमजीजनत् ॥५॥ विजयश्च धृतिं पुत्रमवाप । तस्यापि वृतव्रतः पुत्रोऽभूत् ।
धृतव्रतात् सत्यकर्मा, सत्यकर्मणस्त्वतिरथः ।
योऽसौ गङ्गां गतो मञ्जूषागतं पृथापविद्धं कर्णं पुत्रमवाप ॥६॥ कर्णाद् वृषसेनः इत्येते अङ्गाः ॥७॥ अतश्च पुरोर्वंशं श्रीतुमर्हसीति ॥८॥

इति श्रीविष्णुपुराणे चतुर्थांशे अष्टादशोऽध्यायः ॥१८॥

आदितः श्लोकानां समष्ट्यङ्काः-३,४२७+८=३,४३५

## ॥ अथैकोनविंशोऽध्यायः ॥
## (पुरुवंशकथनम्)

### पराशर उवाच

पुरोर्जनमेजयः पुत्रस्तस्यापि प्रचिन्वान्, प्रचिन्वतः प्रवीरः, तस्मान्मनस्युः,
मनस्योश्चाभयदस्तस्यापि सुद्युम्नः, ततो बहुगवः, तस्य सम्पातिः,
सम्पातेरहम्पातिस्ततो रौद्राश्वः ।
ऋतेयु कृतेयु-कक्षेयु-स्थण्डिलेयु-धृतेयु-स्थलेयु-सन्ततेयु-धनेयु-वनेयुनामानो
रौद्राश्वस्य दशात्मजा बभूवुः ॥१॥ ऋतेयो रन्तिनारः पुत्रोऽभूत् ।
तंसुमप्रतिरथं ध्रुवञ्च रन्तिनारः पुत्रानवाप ।
अप्रतिरथात् कण्वस्तस्यापि मेधातिथिः, यतः काण्वायना द्विजा बभूवुः ।
तंसोरैनिलः, ततो दुष्मन्ताद्याश्चत्वारः पुत्रा बभूवुः, दुष्मन्ताच्चक्रवर्ती भरतोऽभवत् ।
यन्नामहेतुर्देवैः श्लोको गीयते ॥२॥ माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुष्मन्त मावमंस्थाः शकुन्तलाम् ॥३॥ रेतोधाः पुत्र उन्नयति नरदेव !
यमक्षयात् । त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥४॥ भरतस्य च पत्नीनां ये
नव पुत्रा बभूवुः, नैते ममानुरूपाः पुत्रा इत्यभिहितास्तन्मातरो जघ्नुः परित्यागभयात्
॥५॥ ततोऽस्य पुत्रजन्मनि वितथे पुत्रार्थिनो मरुत्स्तोयाजिनो दीर्घतमसा
पाष्र्ण्यपास्तबृहस्पतिवीर्य्याद्दूतथ्यपत्नी-ममतासमुत्पन्नो भरद्वाजाख्यः पुत्रो मरुद्भिर्दत्तः
। तस्यापि नामनिर्वचनश्लोकः पठ्यते ॥६॥ मूढे ! भरद्वाजमिमं भर द्वाजं बृहस्पते ।
यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥७॥ इति ।
भरद्वाजश्च तस्य वितथे पुत्रजन्मनि मरुद्भिर्दत्तः, ततो वितथसंज्ञामवाप ॥८॥ वितथस्य
भवन्मन्युः पुत्रोऽभूत् । बृहत्क्षत्र-महावीर्य-नर-गर्गाद्या भबन्मन्युपुत्राः ।
नरस्य सङ्कृतिः, संकृतेः रुचिरधी-रन्तिदेवौ ।
गर्गाच्छिनिस्ततो गार्ग्याः शैन्याः क्षत्रोपेता द्विजातयो बभूवुः ॥९॥ महावीर्य्यदुरुक्षयो
नाम पुत्रोऽभूत् । तस्य त्रय्यद्यारुण-पुष्करिण्यौ कपिलश्च पुत्रत्रयमभूत् ।
तच्च त्रितयमपि पश्चाद् विप्रतामुपजगाम ।
बृहत् क्षत्रस्य सुहोत्रः, सुहोत्राद् हस्ती, य इदं हस्तिनापुरमारोपयामास ।
अजमीढ-द्विमीढ-पुरुमीढास्त्रयो हस्तिनस्तनयाः, अजमीढात् कण्वः, कण्वाद्
मेधातिथिः, यतः काण्वायना द्विजाः ॥१०॥ अजमीढस्यान्यः पुत्रो बृहदिषुः,
बृहदिषोबृहद्वसुः, ततश्च बृहत्कर्मा, तस्माज्जयद्रथः ।
ततोऽपि विश्वजित्, ततश्च सेनजित् ।

रुचिराश्व-काश्य-दृढ-धनुर्वत्-सहनुसंज्ञाः सेनजितः पुत्राः ।
रुचिराश्वतः पृथुसेनः, तस्मात् पारः, पाराद् नीपः ।
तस्यैक शतं पुत्राणाम्, तेषां प्रधानः काम्पिल्याधिपतिः समरः ॥११॥ समरस्यापि पार-सम्पार-सदश्वास्त्रयः पुत्राः ।
पारात् पृथुः, पृथोः सुकृतिः, सुकृतेर्विभ्राज, ततश्चानुहः स च शुकदुहितरं कीत्ति नामोपयेमे ॥१२॥ अनुहाद् ब्रह्मदत्तः, ततो विष्वक्सेनः, तस्योदकसेनः, ततो भल्लाटः, तस्यात्मजो द्विमीढः, द्विमीढस्य यवीनरसंज्ञः, तस्मापि धृतिमान्, ततः सत्यधृतिः, ततश्च दृढनेमिः, तस्माच्च सुपार्श्वः, ततः सुमतिः, ततश्च सन्नतिमान्, सन्नतिमतः, कृतोऽभूत् । यं हिरण्यनाभो योगमध्यापयामास,यश्चतुर्विंशतिं प्राच्यसामगानां चकार संहिताः ॥१३॥ कृताच्चोग्रायुधः, येन प्राचुर्य्येण नृपक्षयः कृतः ॥१४॥
उग्रायुधात् क्षेम्यः, तस्मात् सुवीरः, तस्य नृपञ्जयः, ततो बहुरथः ।
इत्येते पौरवाः । अजमीढस्य नीलिनी नाम पत्नी, तस्यां नीलसंज्ञः पूत्रोऽभवत् । तस्मादपि शान्तिः, शान्तेः सुशान्तिः, सुशान्तेः पुरुजानुः, ततश्चक्षुः, ततो हर्य्यश्वः, तस्माद् मुद्गल-सृञ्जय-बृहदिषु-प्रवीर-काम्पिल्याः ।
पञ्चानामेतेषां विषयाणां रक्षणायालमेते मत्पुत्राः, इति पित्राभिहिताः, अतस्ते पाञ्चालाः ॥१५॥ मुदलाच्च मौद्गल्याः क्षत्त्रोपेता द्विजातयो बभूवुः ।
मुद्गलाद् वृद्धश्वः, वृद्धश्वाद् दिवोदासः, अहल्या च मिथुनमभूत् ।
शरद्वतोऽहल्यायां शतानन्दोऽभवत् ।
शतानन्दात् सत्यधृतिः धनुर्वेदान्तगो जज्ञे ।
सत्यधृतेस्तु वराप्सरसमुर्व्वशीं दृष्ट्वा रेतःस्कन्नं शरस्तम्बे पपात ॥१६॥ तच्च द्विधागतमपत्यद्वयं कुमारः कन्यका च अभवत् ।
मृगयामुपामतः शान्तनुर्दृष्ट्वा कृपया जग्राह ॥१७॥ ततः स कुमारः कृपः, कन्या चाश्वत्थाम्नो जननी कृपी द्रोणपत्न्यभवत् ।
दिवोदासस्य मित्रयुः, मित्रयोश्चयवनो नाम राजा, च्यवनात् सुदासः, ततः सौदासः सहदेवः, तस्यापि सोमकः, ततो जन्तुः शतपुत्रज्येष्ठोऽभवत् ।
तेषां यवीयान् पृषतः, पृषताद् द्रुपदः, तस्माद् धृष्टद्युम्नः, तस्माद् धृष्टकेतुः ।
अजमीढस्यान्य ऋक्षनामा पुत्रोऽभूत् ।
ऋक्षात् संवरणः, संवरणात् कुरुः, य इदं धर्मक्षेत्रं कुरुक्षेत्रं चकार ॥१८॥
सुधनु-जह्नु-परिक्षित्-प्रमुखाः कुरोः पुत्रा बभूवुः ।
सुधनुषः सुहोत्रः, तस्माच्च्यवनः, च्यवनात् कृतकः, ततश्चोपरिचरो वसुः ।
बृहद्रथ-प्रत्यग्र-कुशाम्ब-मावेल्ल-मत्स्यप्रमुखा वसोः पुत्राः सप्ताजायन्त ।
बृहद्रथात् कुशाग्रः, तस्मादृषभः, ततः पुष्पवान्, तस्मात् सुधन्वा, तस्य च जन्तुः ।

बृहद्रथाच्चान्यः शकलद्वयजन्मा जरया सन्धितो जरासन्धो नाम ।
तस्मात् सत्यधृतः, तस्मात् सहदेवः, ततः सोमापिः, ततः श्रुतश्रवाः ।
इत्येते मागध भूभृतः ॥१९॥

इति श्रीविष्णुपुराणे चतुर्थांशे एकोनविंशोऽध्यायः ॥२१॥

आदितः श्लोकानां समष्टयङ्काः-३,४३५+१९=३,४५४



राजा पुरु (पोरस) र सिकन्दर

## ॥ अथ विंशोऽध्यायः ॥
## (कुरुवंशवर्णनम्)

### पराशर उवाच

परिक्षतो जनमेजय-श्रुतसेन-उग्रसेन-भीमसेनाश्चत्वारः पुत्राः ॥१॥ जह्नोस्तु सुरथो नामात्मजो बभूव ॥२॥ तस्य विदूरथः, विदूरथस्य सार्वभौमः, सार्वभौमाज्जयसेनः, तस्मादारावी, ततश्चायुतायुः, अयुतायोलक्रोधनः, तस्माद् देवातिथिः, ततश्च ऋक्षोऽन्यः ॥३॥ ऋक्षाद् भीमसेनः, ततश्च दिलीपः, दिलीपात् प्रतीपः, तस्यापि देवापि-शान्तनु-बाह्लीकसंज्ञास्त्रयः पुत्रा बभूवुः । देवापिर्बाल्य एवारण्यं विवेश ॥४॥ शान्तनुरवनीपतिरभवत् । अयञ्च तस्य श्लोकः पृथिव्यां गीयते ।
यं य कराभ्यां स्पृशति जीर्णं यौवनमेति सः ।
शान्तिश्चाप्नोति येनाग्र्यां कर्मणा तेन शान्तनुः ॥५॥ तस्य शान्तनो राष्ट्रे द्वादशवर्षाणि देवो न ववर्ष ॥६॥ ततश्चाशेषराष्ट्रविनाशमवेक्ष्यासो राजा ब्राह्मणानपृच्छत्, भोः ! कस्मादस्मिन् राष्ट्रे देवो न वर्षति, को ममापराध इति ।
ते तमूचुः-अग्रजस्य तेऽर्हैयमवतिस्त्वया भुज्यते, परिवेत्ता त्वम्, इत्युक्तः ।
स पुनस्तानपृच्छत्, किं मया विधेयमिति ।
ते ततस्मैः-यावद् देवापिर्न पतनादिभिर्द्दोषैरभिभूयते, तावत्तस्यार्ह राज्यं, तदलमेतेन, तस्मै दीयताम्, इत्युक्ते तस्य मन्त्रिप्रवरेणाश्मसारिणा तत्रारण्ये तपस्विने वेदवादविरोधवक्तारः प्रयोजिताः ॥७॥ तैरप्यत्यृजुमतेर्महीपतिपुत्रस्य बुद्धिर्वेदविरोध मार्गानुसारिण्यक्रियत ॥८॥ राजा च शान्तनुर्द्विजवचनोत्पन्नपरिवेदनशोकस्तान् ब्राह्मणानग्रणीकृत्य अग्रजराज्यप्रदानायारण्य जगाम ।
तदाश्रममुपगताश्च तमवनीपतिपुत्रं देवापिमुपतस्थुम् ।
ते ब्राह्मणा वेदवादानुबद्धानि वचसिं राज्यमग्रजेन कर्तव्यमित्यर्थवन्ति तमूचुः ।
असावपि वेदवादविरोधियुक्तिदूषितमनेकप्रकारं तानाह ।
ततदस्ते ब्राह्मणाः शान्तनुमूचुः, आगच्छ भो राजन् ! अलमत्रातिनिर्बन्धेन, प्रशान्त एवसावनावृष्टिदोषः पतितोऽयनमादिकालमहीतवेदवचनदूषणोच्चारणात् ।
पतिते चाग्रजे नैव परिवेद्य भवति, इत्युक्तः शान्तनुः स्वपुरमागत्य राज्यमकरोत् ।
वेदवादविरोधिवचनोच्चारणदूषिते च ज्येष्ठेऽस्मिन् भ्रातरि देवापावखिलशस्यनिष्पत्तये ववर्ष भगवान् पर्ज्जन्यः ॥९॥ बाह्लीकस्य सोमदत्तः पुत्रोऽभूत् ।
सोमदत्तस्यापिभूरिभूरिश्रवः शल्यसंज्ञास्त्रयः पुत्राः ।
शान्तनो रप्यमरनद्यां गङ्गायामुदारकीर्त्तिरशेषशास्त्रार्थविद् भीष्मः पुत्रोऽभूत् ।

सत्यवत्याञ्च चित्राङ्गदविचित्रवीर्य्यौ पुत्रावजनयत् शान्तनुः ।
चित्राङ्गदस्तु बाल एव चित्राङ्गदेन गन्धर्व्वेणाहवे विनिहतः ।
विचित्रवीर्य्योऽपि काशिसजतनये अम्बिकाम्बालिके उपयेमे ।
तदुपभोगादिखेदाच्च यक्ष्मणा गृहीतः पञ्चत्वमगमत् ।
सत्यवतीनियोगाच्च मत् पुत्रः कृष्णद्वैपायनो मातर्वचनमनतिक्रमणीयमिति
विचित्रवीर्य्यक्षेत्रे धृतराष्ट्र-पाण्डू तत्प्रहितभुजिष्यायाञ्च विदुरमुत्पादयामास ॥१०॥
धृतराष्ट्रोऽपि दुर्योधनदुःशासनादिप्रधानं पुत्रशतं (गान्धार्य्याम्) उत्पादयामास ।
पाण्डोरप्यरण्ये मृगशापोपहतप्रजाजननसामर्थ्यस्य
धर्म्मवायुशक्रैर्युधिष्ठिरभीमसेनार्ज्जुनाः मुन्त्यां नकुलं सहदेवौ च अश्विभ्यां माद्र्यां पञ्च
पुत्रा समुत्पादिताः । तेषां द्रौपद्यां पञ्च पुत्रा बभूवुः ।
युधिष्ठिरात् प्रतिविन्ध्यः, भीमसेनात् सुतसोमः, श्रुतकीर्त्तिररर्ज्जुनात्, शतानीको
नकुलात्, श्रुतकर्म्मा सहदेवात् । अपरे च पाण्डवानामात्मजाः, तद्यथा-यौधेयी
युधिष्ठिराद् देवक पुत्रमवाप । हिडिम्बा घटोत्कचं भीमसेनात् पुत्रमवाप । काशी च
भीमसेनादेव सर्वत्रगं पुत्रमवाप । सहदेवाच्च विजया सुहोत्रं नाम पुत्रं प्राप्तवती ।
करेणुमयाञ्च नकुलोऽपि निरमित्रमजीजनत् । अर्जुनस्याप्युलूप्यां
नागकन्यायामिरावान् नाम पुत्रोऽभूत् । मणिपुरपतिपुत्र्याञ्च पुत्रिकाधर्म्मेण बभ्रुवाहनं
नाम पुत्रमाजीजनत् ॥११॥ सुभद्रायाञ्चार्भकत्वेऽपि
योऽसावतिबलपराक्रमसमस्तारातिरथविजेता सोऽभिमन्युरजायत ।
अभिमन्योरुत्तरायां परिक्षीणेषु कुरुष्वश्वत्थामप्रयुक्तब्रह्मास्त्रेण गर्भ एव भस्मीकृतो
भगवतः सकलसुरासुखन्दितचरणयुगलस्यात्मेच्छाकारणमानुषरूपधारि-
णोऽनुभावात् पुनर्ज्जीवितमवाप्य परिक्षित् जज्ञे ॥१२॥ योऽयं साम्प्रतमेतद्
भूमण्डलमखण्डितायति धर्म्मेण पालयतीति ॥१३॥

इति श्रीविष्णुपुराणे चतुर्थांशे विंशोऽध्यायः ॥२०॥



आदितः श्लोकानां समष्ट्यङ्काः-३,४५४+१३=३,४६७



## ॥ अथैकविंशोऽध्यायः ॥
## (भाविनृपतीनां विवरणम्)

### पराशर उवाच

अतः परं भविष्यानहं भूमिपालान् कीर्त्तयिष्ये । योऽयं साम्प्रतमवनीपतिः, तस्यापि जनमेजयश्रुतसेनोग्रसेनभीमसेनाः पुत्राश्चत्वारो भविष्यन्ति ॥१॥ तस्यापरः शतानीको भविष्यति । योऽसौ याज्ञवल्क्याद् वेदमधीत्य कृपादस्त्राण्यवाप्य विषयविरक्तचित्तवृत्तिश्च शौनकोपदेशादात्मविज्ञानप्रवणः परं निर्वाणमवाप्स्यति ॥२॥ शतानीकादश्वमेधदत्तो भविता, तस्मादप्याधिसीमकृष्णः, अधिसीमकृष्णाद् निचक्षिः, यो गङ्गयापहृते हस्तिनापुरे कौशाम्ब्यां निवत्स्यति ।
तस्याप्युष्णः पुत्रो भविता । उष्णाच्चित्ररथः, ततः शुचिरथः, तस्माद् वृष्णिमान्, ततः सुषेणः, तस्मादपि सुनीथः, सुनीथादृचः, ततो नृचक्षुः, तस्यापि सुखाबलः, तस्मात् परिप्लवः, ततश्च सुनयः, ततो मेधावी, मेधाविनो नृपञ्जयः, ततो मृदुः, तस्मात् तिग्मः, तिग्माद् बृहद्रथः, तस्माद् वसुदानः, ततोऽप्यपरः शतानीकः ॥३॥ तस्माच्च उदयनः, उदयनादहीनरः, ततश्च खण्डपाणिः, ततो निरमित्रः, तस्माच्च क्षेमकः । तत्रायं श्लोकः ।

ब्रह्मक्षत्रस्य यो योनिर्वंशो राजर्षिसत्कृतः ।
क्षेमकं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ ॥४॥

इति श्रीविष्णुपुराणे चतुर्थांशे एकविंशोऽध्यायः ॥२१॥

~✷~

आदितः श्लोकानां समष्टयङ्काः-३,४६७+४=३,४७१

~✷~



## ॥ अथ द्वाविंशोऽध्यायः ॥
## (भावि-कालीनेक्ष्वाकुवंशीय-नृपाणां वर्णनम्)

### पराशर उवाच

अतश्चेक्ष्वाकवो भविष्याः पार्थिवाः कथ्यन्ते ।
बृहद्बलस्य पुत्रो बृहत्क्षणः ॥१॥ तस्माद् गुरुक्षेपः, ततो वत्सः, वत्साद् वत्सव्यूहः,
ततः प्रतिव्योमः, तस्यामः, तस्यापि दिवाकरः, तस्मात् सहदेवः ॥२॥ ततो बृहदश्वः,
तत्सूनुर्भानुरथः, तस्यापि सुप्रतीकः, ततो मरुदेवः, मरुदेवात् सुनक्षत्रः, तस्मात्
किन्नरः, किन्नरादन्तरिक्षः, तस्मात् सुवर्णः, ततश्चामित्रजित्, ततश्च बृहद्राजः, तस्यापि
धर्मो, धर्मिणः कृतञ्जयः, कृत्रञ्जयाद् रणञ्जयः, रणञ्जयात् सञ्जयः, तस्मात् शाक्यः,
शाक्यात् शूद्धोदनः, तस्माद् राहुलः, ततः प्रसेनजित्, ततश्च क्षुद्रकः, ततः कुण्डकः,
तस्मादपि सुरथः, ततश्च सुमित्रोऽन्यः, इत्येते चेक्ष्वाकवो बृहद्बलान्वयाः ।
अत्रानुवंशश्लोकः ।
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ।
यतस्तं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ ॥३॥

इति श्रीविष्णुपुराणे चतुर्थांशे द्वाविंशोऽध्यायः ॥२२॥



आदितः श्लोकानां समष्ट्यङ्काः-३,४७१+३=३,४७४





## ॥ अथ त्रयोविंशोऽध्यायः ॥
## (मगधवंशवर्णनम्)

### पराशर उवाच

मागधानां बार्हद्रथानां भविष्याणामनुक्रमं कथयामि ॥१॥ अत्र हि वंशे महाबला जरासन्धप्रधाना बभूवुः ॥२॥ जरासन्धसुतान् सहदेवात् सोमापिः, तस्मात् श्रुतवान्, तस्याप्युतायुः, ततश्च निरमित्रः, तत्तनयः सुक्षत्रः, तस्मादपि बृहत्कर्मा, ततश्च सेनजित, तस्माच्च श्रुतञ्जयः, ततो विप्रः, तस्य च पुत्रः शुचिनामा भविष्यति । तस्यापि क्षेम्यः, ततश्च सुव्रताद् धर्मः, ततः सुश्रमः, ततो दृढसेनः, ततः सुमतिः, तस्मात् सुबलः, तस्य सुनीतो भविता । ततः सत्यजित्, सत्यजितो विश्वजित्, तस्यापि रिपुञ्जयः पुत्रः इत्येते बार्हद्रथा भूपतयो वर्षसहस्रमेकं भविष्यन्ति ॥३॥

इति श्रीविष्णुपुराणे चतुर्थांशे त्रयोविंशोऽध्यायः ॥२३॥



आदितः श्लोकानां समष्टयङ्काः-३,४७४+३=३,४७७





## ॥ अथ चतुर्विंशोऽध्यायः ॥
## (कलिकालस्थित-नृपाणां कलिधर्म्मस्य च वर्णनम् । राजवंशवर्णनोपसंहारश्च)

### पराशर उवाच

योऽयं रिपुञ्जयो नाम बार्हद्रथोऽन्त्यः, तस्य सुनिको नामामात्यो भविष्यति ॥१॥ स
चैनं स्वामिनं हत्वा स्वपुत्रं प्रद्योतनामानमभिषेक्ष्यति । तस्यापि पालकनामा पुत्रो
भविता । ततश्च विशाखयूपः, तत्पुत्रो, जनकः, तस्य च नन्दिवर्द्धनः, इत्येते
अष्टत्रिंशदुत्तरमब्दशतं पञ्चप्रद्योताः पृथिवीं भोक्ष्यन्ति ॥२॥ ततश्च शिशुनागः,
तत्पुत्रश्च काकवर्णो भविता । तत्पुत्रः क्षेमधर्म्मा, तस्यापि क्षत्रौजाः, तत्पुत्रो
विम्बसारः, ततश्चाजातशत्रुः, तस्माच्च दर्भकः, दर्भकाच्चोदयाश्वः, तस्मादपि
नन्दिवर्द्धनः, ततो महानन्दीस, इत्येते शैशुनागा दश भूमिपालस्त्रीणि वर्षशतानि
द्विषष्ट्यधिकानि भविष्यन्ति ॥३॥ महानन्दिसुतः शुद्रागर्भोद्भवोऽतिलुब्धो
महापद्मानन्दः परशुराम इवापरोऽखिलक्षत्रान्तकारी भविता ॥४॥ ततः प्रभृति शूद्रा
भूमिपाल भविष्यन्ति, स चैकच्छत्रामनुल्लङ्घितशासनो महापद्मः पृथिवीं भोक्ष्यति
॥५॥ तस्याप्यष्टौ सुताः सुमात्वाद्या भवितारः । तस्य च महापद्मस्यानु पृथिवीं
भौक्ष्यन्ति । महापद्म स्तत्पुत्राश्च एकं वर्षशतमवनीपतयो भविष्यन्ति ।
नवैव तान् नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति ॥६॥ तेषामभावे मौर्याश्च पृथिवीं
भोक्ष्यन्ति । कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति ॥७॥ तस्यापि पुत्रो विन्दुसारो
भविष्यति । तस्यापि अशोकवर्द्धनः, ततः सुयशाः, ततो दशरथः, ततः सङ्गतः, ततः
शालिशुकः, तस्मात् सोमशर्मा, तस्मात् शतदधन्वा, तस्याप्यनु बृहद्रथनामा भविता
। एवं मौर्या दश भूपतयो भविष्यन्ति अब्दशतं सप्तत्रिंशदुत्तरम् ।
तेषामन्ते पृथिवीं शुङ्गा भोक्ष्यन्ति ॥८॥ ततः पुष्पमित्रः सेनापतिः स्वामिनं हत्वा
राज्यं करिष्यति ॥९॥ अस्यात्मजोऽग्निमित्रः, तस्मात् युज्येष्ठः, ततो वसुमित्रः,
तस्मादप्यार्द्रकः, ततः पुलिन्दकः, ततो घोषवसुः, तस्मादपि वज्रमित्रः ततो भागवतः
॥१०॥ तस्माद् देवभूतिः, इत्येते दश शुङ्गा द्वादशोत्तरं वर्षशतं पृथिवीं भोक्ष्यन्ति ।
ततः कण्वानेषा भूर्यास्यति ॥११॥ देवभूतिस्तु शुङ्गराजानं व्यसनिनं तस्यैवामात्यः
कण्वो वसुदेवनामा निपात्य स्वयमवनीं भोक्ताः । तत् पुत्रो भूमिमित्रः, तस्यापि
नारायणः, नारायणस्य सुशर्मा, एते काणवायनाश्चत्वारः पञ्चचत्वारिंशद्वर्षाणि
भूपतयो भविष्यन्ति । सुशर्माणां कण्वञ्च भृत्यो बलात् शिप्रकनामा हत्वा
अन्ध्रजातीयो वसुधां भोक्ष्यति । ततश्च कृष्णनामा तद्भ्राता भूपतिर्भावी । तस्य

श्रीकान्तकर्णिः, तस्यापि पुर्णोत्सङ्गः, तत्पुत्रश्च शातकर्णिः, तस्माच्च लम्बोदरः, तस्माद् द्विविलकः, ततो मेघस्वातिः, ततः पटुमान, ततश्च अरिष्टकर्मा, ततो हालः, हालात् पुत्तलकः, ततः प्रविल्लसेनः, ततः सुन्दरः शातकर्णी, तस्माच्चकोरः शातकर्णी ॥१२॥ ततः शिवस्वातिः, ततश्च गोमतीपुत्रः, तत्पुत्रः पुलिमान्, तस्यापि शातकर्णी शिवश्रीः, ततः शिवस्कन्धः ततो यज्ञश्रीः, ततो विजयः ततश्चन्द्रश्रीः, तस्यापि पुलोमाचिः, ऐवमेते त्रिंशाच्चत्वार्यब्दशतानि षट्पञ्चाशदधिकानि पृथिवीं भोक्ष्यन्ति अन्ध्रभृत्याः । सप्ताभीरा दश गर्द्दभिला भूभुजो भविष्यन्ति ॥१३॥ ततः षोडश शका भूभुजो भवितारः । ततश्च अष्टौ यवनाः, चतुर्द्दश तुखाराः, मुण्डाश्च त्रयोदश मौनाः, एते पृथिवीं त्रयोदश वर्षशतानि नवनवत्यधिकानि भोक्ष्यन्ति ॥१४॥ ततश्च पौरा एकादश भूपतयोऽष्टशतानि त्रीणि महीं भोक्ष्यन्ति ॥१५॥ तेषूच्छन्नेषु कैलकिला यवना भूपतयो भविष्यन्ति । मूर्द्धाभिषिक्तस्तेषां विन्ध्यशक्तिः ॥१६॥ ततः पुरञ्जयः, ततो रामचन्द्रः, तस्माद् धर्म्मः, धर्म्माद् वराङ्गः, कृतनन्दनः, सुषिनन्दिः, नन्दियशाः, शिशकप्रवारी च । एते वर्षशतं षड्वर्षाणि च भविष्यन्ति । ततस्तत्पुत्रास्त्रयोदशैव, वाह्लीकाश्च त्रयः ततः पुष्पमित्रपढ मित्रपद्ममित्रास्त्रयः, दश मेकलाश्च, सप्तकोशलायान्तु नवैव भूपतयो भविष्यन्ति । नैषावास्तु तावन्त एव भूपतयो भविष्यन्ति ॥१७॥ मागधायां विश्वस्फटिकसंज्ञोऽन्यान् वर्णान् करिष्यति कैवर्त्त-कटुपुलिन्दब्राह्मण्यान् राज्ये स्थापयिष्यन्नुतसाद्याखिलाक्षात्त्रजातिम् । नव नागाः पद्मावत्यां कान्तिपुर्यां मथुरायामनुगङ्गप्रयागं मागधा गुप्ताश्च भोक्षयन्ति । कोशलोड्र (पुराड्रक) ताम्रलिप्तान् समुद्रतटपुरीश्च देवरक्षितो रक्षिष्यति । कलिङ्गमार्हिषिमाहेन्द्रभीमा गुहां भोक्ष्यन्ति । नैषादनैनीषिककालतोयान् जनपदान् मणिधारवंशा भोक्ष्यन्ति । स्त्रीराज्य(त्रैराज्य) मूषिकजनपदान् कनकाह्वया भोक्ष्यन्ति । सौराष्ट्रवन्तिशूद्रानर्वुदमरुभूमिविषांश्च व्रात्या द्विजाभीरशूद्राद्या भोक्ष्यन्ति । सिन्धुतटदार्वीकोर्वी चन्द्रभाग काश्मीरविषयान् व्रात्या म्लेच्छादयः शूद्राः भोक्ष्यन्ति । एते च तुल्यकालाः सर्वे पृथिव्यां भूभृतो भविष्यन्ति । अल्पप्रसादा बृहत्कोपाः सर्वकालमनृताधर्मरुचयः स्त्रीबालगोवधकर्त्तारः, परस्वादनरुचयोऽल्पसारा उदितास्तमितप्रायाः स्वल्पायुषो महेच्छा अत्यल्पधर्माश्च भविष्यन्ति ॥१८॥ तैश्च विमिश्रा जनपदास्तच्छीलवर्त्तिनो राजा श्रयशुष्मिणो म्लेच्छाश्चार्याश्च विपर्ययेण वर्त्तमानाः प्रजाः क्षपयिष्यन्ति ॥१९॥ ततश्चानुदिनमल्पाल्पह्रासाद् व्यवच्छेदाद् धर्मार्थयोर्जगतः संक्षेपो भविष्यति ॥२०॥ ततश्चार्थ एवाभिजनहेतुः, धनमेवाशेषधर्महेतुः, अभिरुचिरेव दाम्पत्य सम्बन्धहेतुः, अनृतमेव व्यवहारजय हेतुः, स्त्रीत्वमेवोपभोगहेतुः, रत्नताम्रभागितैव पृथिवीहेतुः, ब्रह्मसूत्रमेव विप्रत्वहेतुः, लिङ्गधारणमेवाश्रमहेतुः, अन्याय एव वृत्तिहेतुः ॥२१-२२॥

दौर्बल्यमेव अवृत्तिहेतुः, भयगर्भोच्चारणमेव पाण्डित्यहेतुः ॥२३॥ दानमेव धर्म्महेतुः,
आढ्यतैव साधुत्वहेतुः ॥२४॥ स्नानमेव प्रसाधनहेतुः, स्वीकरणं विवाहहेतुः,
सद्वेशधार्य्यैव पात्रं, दूरायतनोदकमेव तीर्थमित्येव मनेकदोषोत्तरे भूमण्डले
सर्ववर्णेष्वेव यो यो बलवान् स स भूपतिर्भविष्यति ।
एवञ्चातिलुब्धकरभारासहाः शैलानामन्तरा द्रोणीः प्रजाः संश्रयिष्यन्ति ।
मधुशाकमूलफलपत्रपुष्पाहसाराश्च भविष्यन्ति, तरुवल्कलचीरप्रावरणाश्चातिबहुप्रजाः
शीतवातातपवर्षसहा भविष्यन्ति । न स कश्चित् त्रयोविंशति वर्षाणि जीविष्यति ।
अनवरतं चात्र कलियुगे क्षयमायात्यखिलनेवैष जनः क्षयमुपैष्यति ॥२५॥
श्रौतस्मार्त्तधर्मे विप्लवमत्यन्तमुपगते क्षीणप्राये च
कलावशेषजगत्स्रष्टुश्चराचरगुरोरादिमयस्यान्तमयस्य सर्वमयस्य
ब्रह्ममयस्यात्मस्वरूपिणो भगवतो वासुदेवस्यांशः
सम्भलग्रामप्रधानब्राह्मणाविष्णुयशसो गृहे अष्टगुणर्द्धिसमन्वितः कल्किरूपी
जगत्यत्रावतीर्य सकलम्लेच्छदस्युदुष्टाचरणचेतसा-
मशेषाणामपरिच्छिन्नमाहात्म्यशक्तिः क्षयं करिष्यति ॥२६॥ स्वधर्मेषु चाखिलं जगत्
संस्थापयिष्यतीति । अनन्तरञ्चाशेषकलेरवसाने प्रबुद्धानां तेषामेव
जनपदानाममलस्फटिकविशुद्धमतयो भविष्यन्ति ॥२७॥ तेषाञ्च
बीजभूतानामशेषमनुष्याणां परिणतानामपि तत्कालकृतानामपत्यप्रसूतिर्भविष्यति
॥२८॥ तानि च तदपत्यानि कृतयुगधर्म्मानुसारीणि भविष्यन्तीति ॥२९॥

यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति भविष्यति तदा कृतम् ॥३०॥
अतीता वर्त्तमानाश्च तथैवानागताश्च ये ।
एते वंशेषु भूपालाः कथिता मुनिसत्तम ॥३१॥
यावत् परीक्षितो जन्म यावन्नन्दाभिषेचनम् ।
एतद्वर्षसहस्रन्तु ज्ञयं पञ्चदशोत्तरम् ॥३२॥
सप्तर्षीणाञ्च यौ पूर्वौ दृश्येते उदितौ दिवि ।
तयोस्तु मध्यनक्षत्रं दृश्यते यत् समं निशि ॥
तेन सप्तर्षयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ॥३३॥
ते तु पारीक्षिते काले मघास्वासन् द्विजोत्तम ! ।
तदा प्रवृत्तश्च कलिर्द्वादशाब्दाशतात्मकः ॥३४॥
यदैव भगवद्विष्णोरंशो यातो दिव द्विज ! ।
वसुदेवकुलोद्भूतस्तदैव कलिरागतः ॥३५॥
यावत् स पादपद्माभ्यां पस्पर्शेमां वसुन्धराम् ।

तावत् पृथ्वीपरिष्वङ्गे समर्थो नाभवत् कलिः ॥३६॥
गते सनातनस्यांशे विष्णोस्तत्र भुवो दिवम् ।
तत्याज सानुजो राज्यं धर्मपुत्रो युधिष्ठिरः ॥३७॥
विपरीतानि दृष्ट्वा च निमित्तानि स पाण्डवः ।
याते कृष्णे चकाराथ सोऽभिषेकं परीक्षिते ॥३८॥
प्रयास्यन्ति यदा ते च पूर्वाषाढां महर्षयः ।
तदा नन्दात् प्रभृत्येष कलिवृद्धिं गमिष्यति ॥३९॥
यस्मिन कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि ।
प्रतिपन्नं कलियुगं तस्य संख्यां निबोध मे ॥४०॥
त्रीणि लक्षाणि वर्षाणां द्विज ! मानुषसंख्यया ।
षष्टिश्चैव सहस्राणि भविष्यत्येष वै कलिः ॥४१॥
शतानि तानि दिव्यानि सप्त पञ्च च संख्यया ।
निःशेषेण ततस्तस्मिन् भविष्यति पुनः कृतम् ॥४२॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ! ।
युगे युगे महात्मानः समतीताः सहस्रशः ॥४३॥
बहुत्वान्नामधेयानां परिसंख्या कुले कुले ।
पुनरुक्तबहुत्वात्तु न मया परिकीर्तिता ॥४४॥
देवापिः पौरवो राजा मरुश्चेक्ष्वाकुवंशजः ।
महायोगवलोपेतौ कलापग्रामसंश्रयौ ॥४५॥
कृते युग इहागत्य क्षत्रप्रावर्त्तकौ हि तौ ।
भविष्यतो मनोर्वंशे बीजभूतौ व्यवस्थितौ ॥४६॥
एतेन क्रमयोगेन मनुपुत्रैर्वसुन्धरा ।
कृतत्रेतादिसंज्ञानि युगानि त्रीणि भुज्यते ॥४७॥
कलौ तु बीजभूतास्ते केचित् तिष्ठन्ति भूतले ।
यथैव दैवापिमरू साम्प्रतं समावस्थितौ ॥४८॥
एष तूद्देशतो वंशस्तवोक्तो भूभुजां मया ।
निखिला गदितुं शक्यो नैव जन्मशतैरपि ॥४९॥
एते चान्ये च भूपाला यैरत्र क्षितिमण्डले ।
कृतं ममत्वं मोहान्धैर्नित्येऽनित्यकलेवरैः ॥५०॥
कथं ममेयमचला मत्पुत्रस्य कथं मही ।
मद्वंशस्येति चिन्तार्त्ता जग्मुरन्तमिमे नृपाः ॥५१॥
तेभ्यः पूर्वतराश्चान्ये तेभ्यस्तेभ्यस्तथापरे ।

भविष्याश्चैव यास्यन्ति तेषामन्ये च येऽप्यनु ॥५२॥
विलोक्यात्मजयोद्योगयात्राव्यग्रान् नराधिपान् ।
पुष्पप्रहासैः शरदि हसतीव वसुन्धरा ॥५३॥
मैत्रेय ! पृथ्वीगीताः श्लोकाश्चात्र निबोध तान् ।
यानाह धर्मध्वजिने जनकायासितो मुनिः ॥५४॥

पृथिव्युवाच

कथमेष नरेन्द्राणां मोहो बुद्धिमतामपि ।
येन फेनसधर्माणोऽप्यतिविश्वस्तचेतसः ॥५५॥
पूर्वमात्मजयं कृत्वा जेतुमिच्छन्ति मन्त्रिणः ।
ततो भृत्यांश्च पौरांश्च जिगीषन्ते तथा रिपून् ॥५६॥
क्रमेणानेन जेष्यामो वयं पृथ्वीं ससागराम् ।
इत्यासक्तधियो मृत्युं न पश्यन्त्यविदूरगम् ॥५७॥
समुद्रावरणं याति मन्मण्डलमथो वशम् ।
कियदात्मजयादेतन्मुक्तिरात्मजये फलम् ॥५८॥
उत्सृज्य पूर्वजा याता यां नादाय गतः पिताः ।
तां ममेति विमूढत्वाज्जेतुमिच्छन्ति पार्थिवाः ॥५९॥
मत्कृते पितृपुत्राणां भ्रातृणाञ्चापि विग्रहाः ।
जायन्तेऽत्यन्तमोहेन ममताधृतचेतसाम् ॥६०॥
पृथ्वी ममेयं सकला ममैषा ममान्वयस्यापि च शाश्वतेयम् ।
यो यो मृतो ह्यत्र बभूव राजा कुबुद्धिरासीदिति तस्य तस्य ॥६१॥
दृष्ट्वा ममत्वादृतचित्तमेकं विहाय मां मृत्युपथं व्रजन्तम् ।
तस्यान्वयस्थस्य कथं ममत्वं हृद्यास्पदं मत्प्रभवं करोति ॥६२॥
पृथ्वी ममैषाशु परित्यजैनां बदन्ति ये दूतमुखैः स्वशत्रुम् ।
नराधिपास्तेषु ममातिहासः पुनश्च मूढेषु दयाभ्युपैति ॥६३॥

पराशर उवाच

इत्येते धरणीगीता श्लोका मैत्रेय ! यैः श्रुताः ।
ममत्वं विलयं याति तापन्यस्तं यथा हिमम् ॥६४॥
इत्येष कथितः सम्यङ् मनोर्वंशो मया तव ।
यत्र स्थितिप्रवृत्तस्य विष्णोरंशांशका नृपाः ॥६५॥

श्रृणुयाद् य इमं भक्त्या मनुवंशमनुक्रमात् ।
तस्य पापमशेषं वै प्रणश्यत्यमलात्मनः ॥६६॥
दनधान्यर्द्धिमतुला प्राप्नोत्यव्याहतेन्द्रियः ।
श्रुत्वैवमखिलं वंशं प्रशस्तं शशिसूर्ययोः ॥६७॥
इक्ष्वाकुजह्नुमान्धातृसगराविक्षितान् रघून् ।
ययातिनहुषाद्यांश्च ज्ञात्वा निष्ठामुपागतान् ॥
महाबलान् महावीर्य्यानन्तधनसञ्चयान् ॥६८॥
कृतान् कालेन बलिना कथाशेषान् नराधिपान् ।
श्रुत्वा न पुत्रदारादौ गृहक्षेत्रादिके तथा ॥
द्रव्यादौ च कृतप्रज्ञो ममत्वं कुरुते नरः ॥६९॥
तप्त तपो यैः पुरुषप्रवीरैरुद्बाहुभिर्वर्षगणाननेकान् ।
इष्टाश्च यज्ञा बलिनोऽतिवीर्य्याः कृतास्तु कालेन कथावशेषाः ॥७०॥
पृथुः समस्तान् प्रचचार लोकानव्याहतो योऽरिविदारिचक्रः ।
स कालवाताभिहतो विनष्टः क्षिप्तं यथा शाल्मलितूलमग्नौ ॥७१॥
यः कार्त्तवीर्य्यो बुभूजे समस्तान् द्वीपान् समाक्रम्य हतारिचक्रः ।
कथाप्रसङ्गे त्वभिधीयमानः स एव सङ्कल्पविकल्पहेतुः ॥७२॥
दशाननाविक्षितराघवाणामैश्वर्यमुद्भासितदिङ्मुखानाम् ।
भस्मापि जातं न कथं क्षणेन भ्रूभङ्गपातेन धिगन्तकस्य ॥७३॥
कथाशरीरत्वमवाप यद् वै मान्धातृनामा भुवि चक्रवर्ती ।
श्रुत्वापि तं कोऽपि करोति साधुर्ममत्वमात्मन्यपि मन्दचेताः ॥७४॥
भगीरथाद्याः सगरः ककुत्स्थो दशाननो राघवलक्ष्मणौ च ।
युधिष्ठिराद्याश्च बभूवुरेते सत्यं न मिथ्या क्व नु ते न विद्मः ॥७५॥
ये साम्प्रतं ये च नृपा भविष्याः प्रोक्ता मया विप्रवरोग्रवीर्य्याः ।
ये ते तथान्ये च तथाभिधेयाः सर्वे भविष्यन्ति यथैव पूर्वे ॥७६॥
एतद् विदित्वा न नरेण कार्यं ममत्वमात्मन्यपि पण्डितेन ।
तिष्ठन्तु तावत् तनयात्मजाद्याः क्षेत्रादयो ये तु शरीरतोऽन्ये ॥७७॥

इति श्रीविष्णुपुराणे चतुर्थांशे चतुर्विंशोऽध्यायः ॥२४॥

आदितः श्लोकानां समष्ट्यङ्काः-३,४७७+७७=३,५५४

॥ चतुर्थांश सम्पूर्णः ॥

अध्यायानामादितः समष्ट्यङ्काः-५६+२४=८०

# ॥ अथ पञ्चमांशः ॥

## ॥ अथ प्रथमोऽध्यायः ॥

(वसुदेव-देवक्योर्विवाहः, ब्रह्मणः समीपे पृथिव्या गमनम्, विष्णोः स्तोत्रम्, कंसादीन् हन्तुं विष्णोरङ्गीकारश्च)

### मैत्रेय उवाच

नृपाणां कथितः सर्वो भवता वंशविस्तरः ।
वंशानुचरितञ्च वे यथावदनुवर्णितम् ॥१॥
अंशावतारो ब्रह्मर्षे योऽयं यदुकुलोद्भवः ।
विष्णोस्तं विस्तरेणाहं श्रोतुमिच्छाम्यशेषतः ॥२॥
चकार यानि कर्माणि भगवान् पुरुषोत्तमः ।
अंशांशेनावतीर्य्योर्व्यां तत्र तामि मुने ! वद ॥३॥

### पराशर उवाच

मैत्रैय ! श्रूयतामेतद् यत् पृष्टोऽहमिदं त्वया ।
विष्णोरंशांशसम्भूतिचरितं जगतो हितम् ॥४॥
देवकास्य सुता पूर्वं वसुदेवो महामुने ।
उपयेमे महाभागां देवकीं देवतोपमाम् ॥५॥
कंसस्तयोर्वररथं चोदयामास सारथिः ।
वसुदेवस्य देवक्याः संयोगे भोजवर्द्धनः ॥६॥
अथान्तरीक्षे वागुच्चैः कंसमाभाष्य सादरम् ।
मेघगम्भीरनिर्घोषं समाभाष्येदमब्रवीत् ॥७॥
यामेतां वहसे मूढ ! सह भर्त्रा रथे स्थिताम् ।
अस्यास्ते चाष्टमो गर्भः प्राणानपहरिष्यति ॥८॥

### पराशर उवाच

इत्याकर्ण्य समादाय खड्गं कंसो महाबलः ।
देवकीं हन्तुमारब्धो वसुदेवोऽब्रवीदिदम् ॥९॥
न हन्तव्या महाबाहो ! देवकी भवता तव ।

समर्पयिष्ये सकलान् गर्भानस्योदरोद्भवान् ॥१०॥
तथेत्याह च तं कसो वसुदेवं द्विजोत्तम ।
न घातयामास च तां देवकीं तस्य गौरवात् ॥११॥
एतस्मिन्नेव काले तु भूरिभारावपीडिता ।
जगाम धरणी मेरौ समाजे त्रिदिवौकसाम् ॥१२॥
सब्रह्मकान् सुरान् सर्वान् प्रणिपत्याह मेदिनी ।
कथयामास तत्सर्वं खेदात् करुणभाषिणी ॥१३॥

पृथिव्युवाच

अग्निः सुवर्णस्य गुरुर्गवां सूर्यः परो गुरुः ।
ममार्थखिललोकानां गूरुर्नारायणो गुरुः ॥१४॥
प्रजापतिपतिर्ब्रह्मा पूर्वेषामपि पूर्वजः ।
कलाकाष्ठानिमेषात्मा कालश्चाव्यक्तमूर्तिमान् ॥१५॥
तदंशभूतः सर्वेषां समूहो वः सुरोत्तमाः ।
आदित्या मरुतः साध्या रुद्रा वस्वसश्विवह्नयः ॥१६॥
पितरो ये च लोकानां स्रष्टारोऽत्रिपुरोगमाः ।
एतत् तस्याप्रमेयस्य रूपं विष्णोर्महात्मनः ॥१७॥
यक्षराक्षसदैतेयाः पिशाचोरगदानवाः ।
गन्धर्वाप्सरसश्चैव रुपं विष्णोर्महात्मनः ॥१८॥
ग्रहर्क्षतारकाचित्रगगनाग्निजलानिलाः ।
अहञ्च विषयाश्चैतत् सर्वं विष्णुमयं जगत् ॥१९॥
तथाप्यनेकरूपस्य तस्य रूपाण्यहर्निशम् ।
बाध्यबाधकतां यान्ति कल्लोला इव सागरे ॥२०॥
तत् साम्प्रतमिमे दैत्याः कालमनेमिपुरोगमाः ।
मर्त्यलोकं समाक्रम्य बाधन्तेऽहर्निशं प्रजाः ॥२१॥
कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना ।
उग्रसेनसुतः कंसः सम्भूतः स महासुरः ॥२२॥
अरिष्टो धेनुकः केशी प्रलम्बो नरकस्तथा ।
सुन्दोऽसुरस्तथात्युग्रो वाणश्चापि बलेः सुतः ॥२३॥
तथान्ये च महावीर्या नृपाणां भवनेषु ये ।
समुत्पन्ना दुरात्मानस्तान् न संख्यातुमुत्सहे ॥२४॥

अक्षौहिण्योऽत्र बहुला दिव्यमूर्तिधृतां सुराः ।
महाबलानां दृप्तानां दैत्येन्द्राणां ममोपरि ॥२५॥
तद्भूरिभारपीडार्त्ता न शक्नोम्यमरेश्वराः ।
विभर्त्तुमात्मानमहमिति विपयामि वः ॥२६॥
क्रियतां तन्महाभागाः मम भारावतारणम् ।
यथा रसातलं नाहं गन्छेयमिति विह्वला ॥२७॥

पराशर उवाच

इत्याकर्ण्य धरावाक्यमशेषं त्रिदशैस्ततः ।
भुवो भारावतारार्थं ब्रह्मा प्राह प्रचोदितः ॥२८॥

ब्रह्मोवाच

यथाह वसुधा सर्वं सत्यमेतद्दिवौकसः ।
अहं भवो भवन्तश्च सर्वं नारायणात्मकम् ॥२९॥
विभूतयस्तु यास्तस्य तासामेव परस्परम् ।
आधिक्यन्यूनता बाध्यबाधकत्वेन वर्त्तते ॥३०॥
तदागच्छत गच्छामः क्षीराब्धेस्तटमुत्तरम् ।
तत्राराध्य हरिं तस्मै सर्वं विज्ञापयाम वै ॥३१॥
सर्वदैव जगत्यर्थे स सर्वात्मा जगन्मयः ।
स्वल्पांशेनावतीर्योर्व्यां धर्मस्य कुरुते स्थितिम् ॥३२॥

पराशर उवाच

इत्युक्त्वा प्रययौ विप्र ! सह देवैः पितामहः ।
समाहितमतिश्चैवं तुष्टाव गरुडध्वजम् ॥३३॥

ब्रह्मोवाच

द्वे विद्ये त्वमनाम्नाय परा चैवापरा तथा ।
ते एव भवतो रूपे मूर्त्तामूर्त्तात्मके प्रभो ॥३४॥

द्वे ब्रह्मणी त्वणीयोऽतिस्थूलात्मन्! सर्व सर्ववित्।
शब्दब्रह्म परञ्चैव ब्रह्म ब्रह्ममयस्य यत्॥३५॥
ऋग्वेदस्त्वं यजुर्वेदः सामवेदस्त्वथर्व च।
शिक्षा कल्पो निरुक्तञ्च छन्दो ज्योतिषमेव च॥३६॥
इतिहासपुराणे च तथा व्याकरणं प्रभुः।
मीमांसा न्यायकं तत्त्वं धर्मशास्त्राण्यधोक्षज ॥३७॥
आत्मात्मदेहगुणवद् विचाराचारि यद्वचः।
तदप्यादिपते नान्यदध्यात्मात्मस्वरूपवत् ॥३८॥
त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत्।
अपाणिपादरूपञ्च शुद्धं नित्यं परात्परम् ॥३९॥
श्रृणोष्यकर्णाः परिपश्यसि त्वमचुक्षुरेको बहुरूपरूपः।
अपादहस्तो जवनो ग्रहीता त्वं वेत्सि सर्वं न च सर्ववेद्यः॥४०॥
अणोरणीयांसमसत् स्वरूपं त्वां पश्यतोऽज्ञाननिवृत्तिरग्र्या।
श्रीरस्य धीर्यस्य बिभर्ति नान्यद्वरेण्यरूपात् परतः परात्मन्॥४१॥
त्वं विश्वनाभिर्भुवनस्य गोप्ता सर्वाणि भूतानि तवान्तराणि।
यद्भूतभव्यं तदणोरणीयः पुमांस्त्वमेकः प्रकृतेः परस्तात् ॥४२॥
एकश्चतुर्द्धा भगवान् हुताशो वर्चाऐ विभूतिं जगतो ददासि।
त्वं विश्वतश्चक्षुरनन्तमूर्त्ते! त्रेधा पदं संनिदधे विधातः॥४३॥
यथाग्निरेको बहुधा समिध्यते विकारभेदैरविकाररूपः।
तथा भवान् सर्वगतैकरूपो रूपाणयशेषाण्यनुपुष्यतीश ॥४४॥
एकस्त्वमग्र्यं परमं पदं यत् पश्यन्ति त्वां सूरयो ज्ञानदृश्यम्।
त्वत्तो नान्यत् किञ्चिदस्ति त्वयीह यद्वा भूतं यच्च भाव्यं परात्मन्॥४५॥
व्यक्ताव्यक्तस्वरूपस्त्वं समष्टिव्यष्टिरूपवान्।
सर्वः सर्वदृक् सर्वशक्तिज्ञानबलर्द्धिमान् ॥४६॥
अन्यूनश्चाप्यवृद्धिश्च स्वाधीनी नादिमान् वशी।
क्लमतन्द्राभयक्रोधकामादिभिरसंयुतः ॥४७॥
निरवद्यः परप्रीतो निरनिष्टोऽक्षरक्रमः।
सर्वेश्वरः पराधारो धाम्नां धामात्मकोऽक्षयः॥४८॥
सकलावरणातीत! निरालम्बनभावन!।
महाविभूतिसंस्थान! नमस्ते पुरुषोत्तम॥४९॥
नाकारणात् कारणाद् वा कारणाकारणान्न च।
शरीरग्रहणं वापि धर्मत्राणाय ते परम् ॥५०॥

पराशर उवाच

इत्येवं संस्तुतिं श्रुत्वा मनसा भगवानजः ।
ब्रह्माणमाह प्रीतात्मा विश्वरूपधरो हरिः ॥५१॥

श्रीभगवानुवाच

भो भो ब्रह्मन् ! त्वया मत्तः सह देवैर्यदिष्यते ।
तदुच्यतामशेषं वः सिद्धमेवावधार्यताम् ॥५२॥

पराशर उवाच

ततो ब्रह्मा हरेर्दिव्यं विश्वरूपमवेक्ष्य तत् ।
तुष्टाव भूयो देवेषु साध्वसावनतात्मसु ॥५३॥

ब्रह्मोवाच

नमो नमस्तेऽस्तु सहस्रमूर्त्ते ! सहस्रवाहो ! बहुवक्त्रपाद ।
नमे नमस्ते जगतः प्रवृत्तिविनाशसंस्थानकराप्रमेय ॥५४॥
सूक्ष्मातिसूक्ष्मातिबृहत्प्रमाण ! गरीयसामप्यतिगौरवात्मन् ।
प्रधानबुद्धीन्द्रियवत् प्रधानमूलात् परात्मन् ! भगवन् ! प्रसीद ॥५५॥
एषा मही देव ! महीप्रसूतैर्महासुरैः पीडितशैलबन्धा ।
परायणां त्वां जगतामुपैति भारावतारार्थमपारसारम् ॥५६॥
एते वयं वृत्ररिपुस्तथायं नासत्यदस्रौ वरुणो यमश्च ।
इमे च रुद्रा वसवः ससूर्याः समीरणाग्निप्रमुखास्तथान्ये ॥५७॥
सुराः समस्ताः सुरनाथ ! कार्यमेभिर्मया यच्च सदीश सर्वम् ।
आज्ञापयाज्ञां प्रतिपालयन्तस्तथैव तिष्ठाम सदास्तदोषाः ॥५८॥

पराशर उवाच

एव संस्तूयमानस्तु भगवान् परमेश्वरः ।
उज्जहारात्मनः केशौ सितकृष्णौ महामुने ॥५९॥

उवाच च सुरानेतौ मत्केशो वसुधातले ।
अवतीर्य बुवो भारक्लेशहानिं करिष्यतः ॥६०॥
सुराश्च सकलाः स्वांशैरवतीर्य महीतले ।
कुर्वन्तु युद्धमुन्मत्तैः पुर्वोत्पन्नैर्महासुरैः ॥६१॥
ततः क्षयमशेषास्ते दैतेया धरणीतले ।
प्रयास्यन्ति न सन्देहो मद्दृकपातविचूर्णिताः ॥६२॥
वसुदेवस्य या पत्नी देवकी देवतोपमा ।
तस्यायमष्टमो गर्भो मत्केशो भविता सुराः ॥६३॥
अवतीर्य च तत्रायं कंसं घातयिता भुवि ।
कालनेमिं समुद्भूतमित्युत्तवान्तर्दधे हरिः ॥६४॥
अदृश्याय ततस्तेऽपि प्रणिपत्य महात्मने ।
मेरुपृष्ठं सुरा जग्मुरवतेरुश्च भूतले ॥६५॥
कंसाय चाष्टमो गर्भो देवक्यां धरणीधरः ।
भविष्यतीत्याचचक्षे भगवान् नारदो मुनिः ॥६६॥
कंसोऽपि तदुपश्रुत्य नारदात् कुपितस्ततः ।
देवकीं वसुदेवश्च गृहे गुप्तावधारयत् ॥६७॥
जातं जातञ्च कंसाय तेनैवोक्तं यथा पुरा ।
तथैव वसुदेवोऽपि पुत्रमर्पितवान् द्विजः ॥६८॥
हिरण्यकशिपोः पुत्राः षड्गर्भा इति विश्रुताः ।
विष्णुप्रयुक्ता तान् निद्रा क्रमाद् गर्भे न्ययोजयत् ॥६९॥
योगनिद्रा महामाया वैष्णवी मोहितं यया ।
अविद्यया जगत् सर्वं तामाह भगवान् हरिः ॥७०॥

श्रीभगवानुवाच

निद्रे ! गच्छ ममादेशात् पातालतलसंश्रयान् ।
एकैकत्वेन षड्गर्भान् देवकीजठरं नय ॥७१॥
हतेषु तेषु कंसेन शेषाख्योऽशस्ततो मम ।
अंशांशेनोदरे तस्याः सप्तमः सम्भविष्यति ॥७२॥
गोकुले वसुदेवस्य भार्यान्या रोहिणीं स्थिता ।
तस्याः स सम्भूतिसमं देवि ! नेयस्त्वयोदरम् ॥७३॥
सप्तमो भोजराजस्य भयाद् रोधोपरोधतः ।

देवक्याः पतितो गर्भ इति लोको वदिष्यति ॥७४॥
गर्भसङ्कर्षणात् सोऽथ लोके सङ्कर्षणेति वै ।
संज्ञामवाप्स्यते वीरः श्वेताद्रिशिखरोपमः ॥७५॥
ततोऽहं सम्भविष्यामि देवकीजठरे शुभे ।
गर्भे त्वया यशोदाया गन्तव्यमविलम्बितम् ॥७६॥
प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि ।
उत्पत्स्यामि नवम्याञ्च प्रसूतिं त्वमवाप्स्यसि ॥७७॥
यशोदाशयने मान्तु देवक्यास्त्वामनिन्दिते ।
मच्छक्तिप्रेरितमतिर्वसुदेवो नयिष्यति ॥७८॥
कंसश्च त्वामुपादाय देवि ! शैलशिलातले ।
प्रक्षेप्स्यत्यन्तरीक्षे च त्वं स्थानं समवापस्यसि ॥७९॥
ततस्त्वां शतदृक् शक्रः प्रणम्य मम गौरवात् ।
प्रणिपातानतशिरा भगिनीत्वे ग्रहीष्यति ॥८०॥
ततः शुम्भनिशुम्भादीन् हत्वा दैत्यान् सहस्रशः ।
स्थानैरनेकैः पृथिवीमशेषां मण्डयिष्यसि ॥८१॥
त्वं भूतिः सन्नतिः कीर्त्तिः क्षान्तिर्द्यौः पृथिवी धृतिः ।
लज्जा पुष्टिरुषा या च काचिदन्या त्वमेव सा ॥८२॥
ये त्वामार्येति दुर्गेति वेदगर्भेऽम्बिकेति च ।
भद्रेति भद्रकालीति क्षेम्या क्षेमङ्करीति च ॥८३॥
प्रातश्चैवापराह्ने च स्तोष्यन्त्यानम्रमूर्त्तयः ।
तेषां हि प्रार्थितं सर्वं मत्प्रसादाद्भविष्यति ॥८४॥
सुरामांसोपहारैस्तु भक्ष्यभोज्यैश्च पूजिता ।
नृणामशेषकामांस्त्वं प्रसन्ना सम्प्रदास्यसि ॥८५॥
ते सर्वे सर्वदा भद्रे ! मत्प्रसादादसंशयम् ।
असन्दिग्धा भविष्यन्ति गच्छ देवि ! यथोदितम् ॥८६॥

इति श्रीविष्णुपुराणे पञ्चमांशे प्रथमोऽध्यायः ॥१॥



आदितः श्लोकानां समष्ट्यङ्काः-३,५५४+८६=३,६४०



## ॥ अथ द्वितीयोऽध्यायः ॥
## (यशोदगर्भे योगमाया देवकीगर्भे भगवतश्च प्रवेशः । देवानां देवकीस्तुतिः)

### पराशर उवाच

यथोक्तं सा जगद्धात्री देवदेवेन वै तदा ।
षड्गर्भगर्भविन्यासं चक्रे चान्यस्य कर्षणम् ॥१॥
सप्तमे रोहिणी प्राप्ते गर्भे गर्भं ततो हरिः ।
लोकत्रयोपकाराय देवक्याः प्रविवेश वै ॥२॥
योगनिद्रा यशोदायास्तस्मिन्नेव ततो दिने ।
सम्भूता जठरे तद्वद् यथोक्तं परमेष्ठिना ॥३॥
ततो ग्रहगणः सम्यक् प्रचचार दिवि द्विज ।
विष्णोरंशे भुवं याते ऋतवश्चाभवन् शुभाः ॥४॥
न सेहे देवकी द्रष्टुं कश्चिदप्यतितेजसा ।
जाज्वल्यमानां तां दृष्ट्वा मनांसि क्षोभमाययुः ॥५॥
अदृष्टां पुरुषैः स्त्रीभिर्देवकीं देवतागणाः ।
बिभ्राणां वपुषा विष्णुं तुष्टुवुस्तामहर्निशम् ॥६॥

### देवता ऊचुः

प्रकृतिस्त्वं परा सूक्ष्मा ब्रह्मगर्भाभवः पुरा ।
ततो वाणी जगद्धातुर्वेदगर्भासि शोभने ॥७॥
सूर्यस्वरूपगर्भासि सृष्टिभूता सनातनि ।
बीजभूता तु सर्वस्य यभूताभवस्त्रयी ॥८॥
फलगर्भा त्वमेवेज्या वह्निगर्भा तथारणिः ।
अदितिर्देवगर्भा त्वं दैत्यगर्भा तथा दितिः ॥९॥
ज्योत्स्ना वासरगर्भा त्वं ज्ञानगर्भासि सन्नतिः ।
नयगर्भा परा नीतिर्लज्जा त्वं प्रश्रयोद्वहा ॥१०॥
कामगर्भा तथेच्छा त्वं तुष्टिः सन्तोषगर्भिणी ।
मेधा च भोधगर्भासि धैर्यगर्भोद्वहा धृतिः ॥११॥
ग्रहर्क्षतारकागर्भा द्यौरस्य खिलहैतुकी ।

एता विभूतयो देवि ! तथान्याश्च सहस्रशः ॥१२॥
तथासङ्ख्या जगद्धात्रि ! साम्प्रतं जठरे तव ।
समुद्रादि नदी द्वीप वन पत्तनभूषणा ॥१३॥
ग्राम खर्वट खेटाढ्या समस्ता पृथिवी शुभे ।
समस्तवह्नयोऽम्भांसि सकलाश्च समीरणाः ॥१४॥
ग्रहर्क्षतारकाचित्रं विमानशतसङ्कुलम् ।
अवकाशमशेषस्य यद्ददातिनभःस्थलम् ॥१५॥
भूर्लोकश्च भुवर्लोकः स्वर्लोकोऽथ महर्जनः ।
तपश्च ब्रह्मलोकश्च ब्रह्माण्डमखिलं शुभे ॥१६॥
तदन्तरे स्थिता देवा दैत्यगन्धर्वचारणाः ।
महोरगास्तथ यक्षा राक्षसाः प्रेतगुह्यकाः ॥१७॥
मनुष्याः पशवश्चान्ये ये ज जीवा यशस्विनि ।
तैरन्तः स्थैरनन्तोऽसौ सर्वेशः सर्वभावनः ॥१८॥
रूपकर्मस्वरूपाणि न परिच्छेदगोचरे ।
यस्याखिलप्रमाणानि स विष्णुगर्भगस्तव ॥१९॥
त्वं स्वाहा त्वं स्वधा विद्या सुधा त्वं ज्योतिरम्बरे ।
त्वं सर्वलोकरक्षार्थमवतीर्णा महीतले ॥२०॥
प्रसीद देवि ! सर्वस्य जगतश्शं शुभे ! कुरु ।
प्रीत्या त्वं धारयेशानं धृतं येनाखिलं जगत् ॥२१॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वितीयोऽध्यायः ॥२॥

आदितः श्लोकानां समष्ट्यङ्काः-३,६४०+२१=३,६६१



## ॥ अथ तृतीयोऽध्यायः ॥
## (भगवत आविर्भावः, योगमायाद्वारा कंसस्य वञ्चना च)

### पराशर उवाच

एवं संस्तूयमाना सा देवैर्देवमधारयत् ।
गर्भेण पुण्डरीकाक्षं जगतस्त्राणकारणम् ॥१॥
ततोऽखिलजगत्पद्मबोधायाच्युतभानुना ।
देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना ॥२॥
तज्जन्मदिनमत्यर्थमाह्लाद्यमलदिङ्मुखम् ।
बभूव सर्वलोकस्य कौमुदी शशिनो यथा ॥३॥
सन्तस्सन्तोषमधिकं प्रशमं चण्डमारुतः ।
प्रसादं निम्नगा याता जायमाने जनार्दने ॥४॥
सिन्धवो निजशब्देन वाद्य चक्रुर्मनोहरम् ।
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥५॥
ससृजुः पुष्पवर्षाणि देवा भुव्यन्तरीक्षगाः ।
जज्वलुश्चाग्नयश्शान्ता जायमाने जनार्दने ॥६॥
मध्यरात्रेऽखिलाधारे जायमाने जनार्दने ।
मन्दं जगर्ज्जुर्जलदाः पुष्पवृष्टिमुचो द्विज ॥७॥
फुल्लेन्दीवरपत्राभं चतुर्बाहुमुदीक्ष्य तम् ।
श्रीवत्सवक्षसं जातं तुष्टावानकदुन्दुभिः ॥८॥
अभिष्टूय च तं वाग्भिः प्रसन्नाभिर्महामतिः ।
विपयामास तदा कंसाद्भीतो द्विजोत्तमः ॥९॥

### वसुदेव उवाच

ज्ञातोऽसि देवदेवेश ! शङ्खचक्रगदाधर ।
दिव्यरूपमिदं देव प्रसादेनोपसंहर ॥१०॥
अद्यवै देव ! कंसोऽयं कुरुते मम घातनम् ।
अवतीर्ण इति ात्वा त्वमस्मिन मम मन्दिरे ॥११॥

### देवक्युवाच

योऽनन्तरूपोऽखिलविश्वरूपौ गर्भेषु लोकान् वपुषा बिभर्ति ।
प्रसीदतामेष स देवदेवः स्वमाययाविष्कृतबालरूपः ॥१२॥
उपसंहर सर्वात्मन् ! रूपमेतच्चतुर्भुजम् ।
जानातुं मावतारं ते कंसोऽयं दितिजाधमः ॥१३॥

श्रीभगवानुवाच

ततोऽहं यत् त्वया पूर्वं पुत्रार्थिन्या तदद्य ते ।
सफलं देवि ! सञ्जातं जातोऽहं यत् तवोदरात् ॥१४॥

पराशर उवाच

इत्युक्त्वा भगवांस्तूष्णीं बभूव मुनिसत्तम ।
वसुदेवोऽपि तं रात्रावादाय प्रययौ बहिः ॥१५॥
मोहिताश्चाभवंस्तत्र रक्षिणो योगनिद्रया ।
मथुराद्वारपालाश्च ब्रजत्यानकदुन्दुभौ ॥१६॥
वर्षतां जलदानाञ्च तोयमत्युल्वणं निशि ।
संछाद्यानुययौ शेषः फणेनानकदुन्दुभिम् ॥१७॥
यमुनां चातिगम्भीरा नानावर्त्तसमाकुलाम् ।
वसुदेवो वहन् विष्णु जानुमात्रवहां ययौ ॥१८॥
कंसस्य करमादाय तत्रेवाभ्यागतांस्तटे ।
नन्दादीन् गोपवृन्दांश्च यमुनाया ददर्श सः ॥१९॥
तस्मिन् काले यशोदापि मोहिता योगनिद्रया ।
तामेव कन्यां मैत्रेय ! प्रसूता मोहिते जने ॥२०॥
वसुदेवोऽपि विन्यस्य बालमादाय दारिकाम् ।
यशोदाशयने तुर्णमाजगामामितद्युतिः ॥२१॥
ददृशे च प्रबुद्धा सा यशोदा जातमात्मजम् ।
नीलोत्पलदलश्यामं ततोऽत्यर्थं मुदं ययौ ॥२२॥
आदाय वसुदेवोऽपि दारिकां निजमन्दिरम् ।
देवकीशयने न्यस्य यथापूर्वमतिष्ठत ॥२३॥
ततो बालध्वनिं श्रुत्वा रक्षिणः सहसोत्थिताः ।

कंसायावेदयामासुर्देवकीप्रसवं द्विज ॥२४॥
कंसास्तूर्णमुपेत्यैनां ततो जग्राह बालिकाम् ।
मुञ्च मुञ्चेति देवक्या सन्नकण्ठ्या निवारितः ॥२५॥
(सन्नकण्ठया गद्गदकण्ठया निवारितोऽपि तां कन्यां जग्राह)
चिक्षेप च शिलापृष्ठे सा क्षिप्ता वियति स्थितिम् ।
अवाप रूपञ्च महत् सायुधाष्टमहाभुजम् ॥२६॥
प्रजहास तथैवोच्चैः कंसञ्च रुषिताब्रवीत् ।
किं मया क्षिप्तया मूढ ! जातो यस्त्वां वधिष्यति ॥२७॥
सर्वस्वभूतो देवानामासीन्मृत्युः पुरा स ते ।
तदेतत् सम्प्रधार्य्याशु क्रियतां हितमात्मनः ॥२८॥
इत्युक्त्वा प्रययौ देवी दिव्यस्त्रग्-गन्ध-भूषणा ।
पश्यतो भोजराजस्य स्तुता सिद्धैर्विहायसि ॥२९॥

इति श्रीविष्णुपुराणे पञ्चमांशे तृतीयोऽध्यायः ॥३॥



आदितः श्लोकानां समष्ट्यङ्काः-३,६६१+२९=३,६९०





## ॥ अथ चतुर्थोऽध्यायः ॥
## (कारागाराद् वसुदेव-देवक्योर्मुक्तिलाभः)

### पराशर उवाच

कंसस्ततोद्विग्नमनाः प्राह सर्वान् महासुरान् ।
प्रलम्बकेशिप्रमुखानाहूयासुरपुङ्गवान् ॥१॥

### कंस उवाच

हे प्रलम्ब ! महाबाहो ! केशिन् ! धेनुक ! पूतने ! ।
अरिष्टाद्यैस्तथा चान्यैः श्रूयतां वचनं मम ॥२॥
मां हन्तुममरैर्यत्नः कृतः किल दुरात्मभिः ।
मद्वीर्य्यतापितैर्वीरो न त्वेतान् गणयाम्यहम् ॥३॥
किमिन्द्रेणाल्पवीर्येण किं हरेणैकचारिणा ।
हरिणा वापि किं साध्यं छिद्रष्वसुरघातिना ॥४॥
किमादित्यैः किं वसुभिरल्पवीर्य्यैः किमग्निभिः ।
किञ्चान्यैरमरैः सर्वैर्मद्बाहुबलनिर्ज्जितैः ॥५॥
किं न दृष्टोऽमरपतिर्मया संयुगमेत्य सः ।
पृष्ठेनैव वहन् वाणानपागच्छन्न वक्षसा ॥६॥
मद्राष्ट्रे वारिता वृष्टिर्यदा शक्रेणा किं तदा ।
मद्बाणभिन्नैर्जलदैरापोऽमुक्ता यथेप्सिताः ॥७॥
किमर्व्यामवनीपाला मद्बाहुबलभीरवः ।
न सर्वे सन्नतिं याता जरासन्धमृते गुरुम् ॥८॥
अमरेषु च मेऽवज्ञा जायते दैत्यपुङ्गवाः ।
हास्यं मे जायते वीरास्तेषु यत्नपरेष्वपि ॥९॥
तथापि खलु दुष्टानां तेषामभ्यधिकं मया ।
अपकाराय दैत्येन्द्रा यतनीयं दुरात्मनाम् ॥१०॥
तद् ये यशस्विनः केचित् पृथिव्यां ये च यज्विनः ।
कार्यो देवापकाराय तेषां सर्वात्मना वधः ॥११॥
उत्पन्नश्चापि मृत्युर्मे भूतपर्वेः स वै किल ।
इत्येद् बालिका प्राह देवकीगर्भसम्भवा ॥१२॥

तस्माद् बालेषु परमो यत्नः कार्य्यो महीतले ।
यत्रोद्रिक्तं बलं बाले स हन्तव्यः प्रयत्नतः ॥१३॥

पराशर उवाच

इत्याज्ञाप्यासुरान् कंसः प्रविश्यात्मगृहं ततः ।
मुमोच वसुदेवञ्च देवकीञ्च निरोधतः ॥१४॥

कंस उवाच

युवयोर्घातिता गर्भा वृथैवैते मयाधुना ।
कोऽप्यन्य एव नाशाय बालो मम समुद्गतः ॥१५॥
तदलं परितापेन नूनं तद्भाविनो हि ते ।
अर्भका युवयोर्दोषाच्चायुषो यद्वियोजिताः ॥१६॥
इत्याश्वास्य विमुक्त्वा च कंसस्तौ परिशङ्कितः ।
अन्तर्गृहं द्विजश्रेष्ठ प्रविवेश पुनः स्वकम् ॥१७॥

इति श्रीविष्णुपुराणे पञ्चमांशे चतुर्थोऽध्यायः ॥४॥

आदितः श्लोकानां समष्टयङ्काः-३,६९०+१७=३,७०७



## ॥ अथ पञ्चमोऽध्यायः ॥
## (पूतनावधः)

### पराशर उवाच

विमुक्तो वसुदेवोऽस्य नन्दस्य शकटं गतः ।
प्रहृष्टं दृष्टवान् नन्दं पूत्रो जातो ममेति वै ॥१॥
वसुदेवोऽपि तं प्राह दिष्टया दिष्ट्येति सादरम् ।
वार्द्धकेऽपि समुत्पन्नस्तनयोऽयं तवाधुना ॥२॥
दत्तो हि वार्षिकः सर्वो भवद्भिर्नृपतेः करः ।
यदर्थमागतास्तस्मान्नावस्थेयं महाधनाः ॥३॥
यदर्थमागताः कार्यं तन्निष्पन्नं किमास्यते ।
भतद्भिर्गम्यतां नन्द ! तच्छीघ्रं निजगोकुलम् ॥४॥
ममापि बालकस्तत्र रोहिणीप्रसवी हि यः ।
स रक्षणीयो भवता यथायं तनयो निजः ॥५॥

### पराशर उवाच

इत्युक्ताः प्रययुर्गोपा नन्दगोपपुरोगमाः ।
शकटारोपितैर्भाण्डैः करं दत्त्वा महाबलाः ॥६॥
वसतां गोकुले तेषां पूतना बालघातिनी ।
सुप्तं कृष्णमुपादाय रात्रौ तस्मै ददौ स्तनम् ॥७॥
यस्मै यस्मै स्तनं पूतना सम्प्रयच्छति ।
तस्य तस्य क्षणोनाङ्गं बालकस्योपहन्यते ॥८॥
कृष्णस्तस्याः स्तनं गाढं कराभ्यामवपीडितम् ।
गृहीत्वा प्राणसहितं पपौ कोपसमन्वितः ॥९॥
सा विमुक्तमहारावा विच्छिन्नस्नायुबन्धना ।
पपात पूतना भूमौ म्रियमाणतिभीषणा ॥१०॥
तन्नादश्रुतिसन्त्रासात् प्रबुद्धास्ते व्रजौकसः ।
ददृशुः पूतनोत्सङ्गे कृष्णं ताञ्च निपातिताम् ॥११॥
आदाय कृष्णं सन्त्रस्ता यशोदापि द्विजोत्तमः ! ।
गोपुच्छं भ्राम्य हस्तेन बालदोषमपाकरोत् ॥१२॥

गोः करीषमुपादाय नन्दगोपोऽपि मस्तके ।
कृष्णस्य प्रददौ रक्षां कुर्वंश्चैतदुदोरयन् ॥१३॥

नन्दगोप उवाच

रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः ।
यस्य नाभिसमुद्भूतपङ्कजादभवञ्जगत् ॥१४॥
येन दंष्ट्राग्रविधृता धारयत्यवनी जगत् ।
वराहरूपधृग् देवः स त्वां रक्षतु केशवः ॥१५॥
नखाङ्कुरविनिर्भिन्नवैरिवक्षःस्थलो विभुः ।
नृसिंहरूपी सर्वत्र स त्वां रक्षतु केशवः ॥१६॥
वामनो रक्षतु सदा भवन्तं यः क्षणादभूत् ।
त्रिविक्रमः क्रमाक्रान्त त्रैलोक्यः स्फुरदायुधः ॥१७॥
शिरस्ते पातु गोविन्दः कण्ठं रक्षतु केशवः ।
गुह्यञ्च जठरं विष्णुर्जङ्घापादौ जनार्द्दनः ॥१८॥
मुखं बाहू प्रबाहू च मनः सर्वेन्द्रियाणि च ।
रक्षात्वव्याहतैश्वर्य्यस्तव नारयणोऽव्ययः ॥१९॥
शार्ङ्गचक्रगदाखङ्ग शङ्खनादहताः क्षयम् ।
गच्छन्तु प्रतेकुष्माण्डराक्षसा ये तवाहिताः ॥२०॥
त्वां पातु दिक्षु वैकुण्ठो विदिक्षु मधुसूदनः ।
हृषीकेशोऽम्बरे भूमौ रक्षतु त्वां महीधरः ॥२१॥
एवं कृतस्वस्त्ययनो नन्दगोपेन बालकः ।
शायितः शकटस्याधो बालपर्य्यङ्किकातले ॥२२॥
ते च गोपा महद् दृष्ट्वा पूतनायाः कलेवरम् ।
मृतायाः परमं त्रासं विस्मयं परमं ययुः ॥२३॥

इति श्रीविष्णुपुराणे पञ्चमांशे पञ्चमोऽध्यायः ॥५॥



आदितः श्लोकानां समष्ट्यङ्काः-३,७०७+२३=३,७३०



## ॥ अथ षष्ठोऽध्यायः ॥
## (शकटभञ्जनम्, बलदेव-कृष्णयोर्नामकरणञ्च)

### पराशर उवाच

कदाचिच्छकटाधस्ताच्छयानो मधुसूदनः ।
चिक्षेप चरणावूद्ध्वं स्तन्यार्थी प्ररुरोद च ॥१॥
तस्य पादप्रहारेणा शकटं परिवर्त्तितम् ।
विध्वस्तकुम्भभाण्डं वै विपरीतं पपात च ॥२॥
ततो हाहाकृतं सर्वो गोपगोपीजनो द्विज ! ।
आजगामाथ ददृशे बालमुत्तानशायिनम् ॥३॥
गोपाः केनित केनेदं शकटं परिवर्त्तितम् ।
तत्रैवं बालकांश्चोचुर्बालेनानेन पातितम् ॥४॥
रुदता दृष्टमस्माभिः पादविक्षेपताडितम् ।
शकटं परिवृत्तं वै नैतदन्यस्य चेष्टितम् ॥५॥
ततः पुनरतीवासन् गोपा विस्मितचेतसः ।
नन्दगोपोऽपि जग्राह बालमत्यन्तविस्मितः ॥६॥
यशोदा शकटारूढभग्नभाण्डकपालिकाः ।
शकटं चार्च्चयामास दधिपुष्पफलाक्षतैः ॥७॥
गर्गश्च गोकुले तत्र वसुदेवप्रणोदितः ।
प्रच्छन्न एव गोपानां संस्कारानकरोत् तयोः ॥८॥
ज्येष्ठञ्च राममित्याह कृष्णञ्चैव तथापरम् ।
गर्गो मतिमतां श्रेष्ठो नाम कुर्वन् महामतिः ॥९॥
स्वल्पेनैव हि कालेन रिङ्गिणौ तौ तदा ब्रजे ।
घृष्टजानुकरौ तौ हि बभूवतुरुभावपि ॥१०॥
करीषभस्मदिग्धाङ्गौ भ्रममाणावितस्ततः ।
न निवारयितु शेके यशोदा न च रोहिणी ॥११॥
गोवाटमध्ये क्रीडन्तो वत्सवाटगतौ पुनः ।
तदहर्जातगोवत्सपुच्छाकर्षणतत्परौ ॥१२॥
यदा यशोदा तौ बालावेकस्थानचरावुभौ ।
शशाक नो वारयितुं क्रीडन्तावतिचञ्चलौ ॥१३॥
यशोदा यष्टिमादाय कोपेनानुगता च तम् ।

कृष्णां कमलपत्राक्षं तर्ज्जयन्ती रुषा तदा ॥१४॥
दाम्ना बद्धा तदा मध्ये निबध्याथ उदूखले ।
कृष्णमक्लिष्टकर्माणमाह चेदममर्षिता ॥१५॥
यदि शक्नोषि गच्छ त्वमतिचञ्चलचेष्टित ।
इत्युक्त्वा च निजं कर्म सा चकार कुटुम्बिनी ॥१६॥
व्यग्रायामथ तस्यां स कर्षमाण उदूखलम् ।
यमलार्ज्जुनमध्येन जगाम कमलेक्षणः ॥१७॥
कर्षता वृक्षयोर्मध्ये तिर्यगागतमुदूखलम् ।
भग्नावुत्तूङ्गशाखाग्रौ तेन तौ यमलार्ज्जुनौ ॥१८॥
ततः कटकटाशब्दं समाकर्ण्य च कातरः ।
आजगाम ब्रजजनो ददृशे च महाद्रुमौ ॥१९॥
भग्नस्कन्धौ निपतितौ भग्नशाखौ महीतले ।
नवोद्गताल्पदन्तांशुसितहासञ्च बालकम् ॥२०॥
तयोर्मध्यगतं बद्धं दाम्ना गाढं तथोदरे ।
ततश्च दामोदरतां स ययौ दामबन्धनात् ॥२१॥
गोपवृद्धास्ततः सर्वे नन्दगोपपुरोगमाः ।
मन्त्रयामासुरुद्विग्ना महोत्पातातिभीरवः ॥२२॥
स्थानेनेह न नः कार्यं गच्छामोऽन्यन्महावनम् ।
उत्पाता बहवो ह्यत्र दृश्यन्ते नाशहेतवः ॥२३॥
पूतनाया विनाशश्च शकटस्य विपर्ययः ।
विना वातादिदोषेण द्रुमयोः पतनं तथा ॥२४॥
वृन्दावनमितः स्थानात् तस्माद् गच्छाम मा चिरम् ।
यावद्भौममहोत्पातदोषो नाभिभवेद् व्रजम् ॥२५॥
इति कृत्वा मतिं सर्वे गमने ते व्रजौकसः ।
ऊचुः स्वं स्वं कुलं शीघ्रं गम्यतां मा विलम्ब्यताम् ॥२६॥
ततः क्षणेनः प्रययु शकटैर्गोधनैस्तथा ।
यूथशो वत्सबालांश्च कालयन्तो व्रजौकसः ॥२७॥
द्रव्यावयवनिर्धूतं क्षणमात्रेण तत् तथा ।
काककाकीसमाकीर्णं व्रजस्थानमभूद् द्विज ॥२८॥
वृन्दावनं भगवता कृष्णोनाक्लिष्टकर्म्मणा ।
शुभेन मनसा ध्यातं गवां वृद्धिमभीप्सता ॥२९॥
ततस्तत्रातिरूक्षेऽपि धर्म्मकाले द्विजोत्तम ! ।

प्रावृट्काल इवोद्भूतं नवं शस्यं समन्ततः ॥३०॥
स समावासितः सर्वो व्रजो वृन्दावने ततः ।
शकटीवाटपर्य्यन्तश्चन्द्रार्द्धाकारसंस्थितिः ॥३१॥
वत्सपालौ च संवृत्तौ रामदामोदरौ ततः ।
एकस्थानस्थितौ गोष्ठे चेरतुर्बाललीलया ॥३२॥
बर्हिपत्रकृतापीडौ वन्यपुष्पावतंसकौ ।
गोपवेणुकृतातोद्यपत्रवाद्यकृतस्वनौ ॥३३॥
काकपक्षधरौ बालौ कुमाराविव पावकी ।
हसन्तौ च रमन्तौ च चेरतुस्तौ महाबलौ ॥३४॥
क्वचिद्धसन्तावन्योन्यं क्रीडमानौ तथापरैः ।
गोपपुत्रैः समं वत्सांश्चारयन्तौ विचेरतुः ॥३५॥
कालेन गच्छता तौ तु सप्तवर्षौ महाव्रजे ।
सर्वस्य जगतः पालौ वत्सपालौ बभूवतुः ॥३६॥
प्रावृट्कालस्ततोऽतीव मेघौघस्थगिताम्बरः ।
बभूव वारिधाराभिरैक्यं कुर्वन् दिशामिव ॥३७॥
प्ररूढनवशस्याढ्या शक्रगोपाचिता मही ।
तदा मारकतीवासीत् पद्मरागविभूषिता ॥३८॥
जग्मुरुन्मार्गवाहानि निम्नगाम्भांसि सर्वतः ।
मनांसि दुर्विनीतानां प्राप्य लक्ष्मीं नवामिव ॥३९॥
न रेजेऽन्तरितश्चन्द्रो निर्म्मलो मलिनैर्घनैः ।
सद्वाक्यवादो मूर्खाणां प्रगल्भाभिरिवोक्तिभिः ॥४०॥
निगुणेनापि चापेन शक्रस्य गगने पदम् ।
अवाप्यताविवेकस्य नृपस्येव परिग्रहे ॥४१॥
मेघपृष्ठे बलाकानां रराज विमला ततिः ।
दुर्वृत्ते वृत्तचेष्टेव कुलीनस्यातिशोभना ॥४२॥
न बबन्धाम्बरे स्थैर्य्यं विद्युदत्यन्तचञ्चला ।
मैत्रीव प्रवरे पुंसि दुर्ज्जनेन प्रयोजिता ॥४३॥
मार्गा बभूवुरस्पष्टा नवशस्यचयावृताः ।
अर्थान्तरमनुप्राप्ताः प्रजडानामिवोक्तयः ॥४४॥
उन्मत्तशिखिसारङ्गे तस्मिन् काले महावने ।
कृष्णरामौ मुदा युक्तौ गोपालैश्चेरतुः सह ॥४५॥

क्वचिद् गोपैः समं रम्यं गेयनृत्यरतावुभौ ।
चेरतुः क्वचिदत्यर्थं शीतवृक्षतलाश्रयौ ॥४६॥
क्वचित् कदम्बस्रक् चित्रौ मयूरस्रग्धरौ क्वचित् ।
विचित्रौ क्वचिदास्येतां विविधैर्गिरिधातुभिः ॥४७॥
पर्णशय्यासु संसुप्तौ क्वचिन्निद्रान्तरैषिणौ ।
क्वचिद् गर्जति जीमूते हाहाकाररवादृतौ ॥४८॥
जायतामन्यगोपानां प्रशंसापरमौ क्वचित् ।
मयूरकेकानुगतौ गोपवेणुप्रवादकौ ॥४९॥
इति नानाविधैर्भावैरुत्तमप्रीतिसंयुतौ ।
क्रीडासक्तौ वने तस्मिन् चेरतुः प्रीतमानसौ ॥५०॥
विकाले तु समं गोभिर्गोपवृन्दसमन्वितौ ।
आजग्मतुः कृष्णबलौ गोपवेशधरावुभौ ॥५१॥
विकाले च यथाजोषं व्रजमत्य महाबलौ ।
गोपैः समानैः सहितौ चिक्रीडातेऽमराविव ॥५२॥

इति श्रीविष्णुपुराणे पञ्चमांशे षष्ठोऽध्यायः ॥६॥



आदितः श्लोकानां समष्टयङ्काः-३,७३०+५२=३,७८२





## ॥ अथ सप्तमोऽध्यायः ॥
## (कालियदमनम्)

### पराशर उवाच

एकदा तु विना रामं कृष्णो वृन्दावनं ययौ ।
विचचार वृतो गोपैर्वन्यपुष्पस्रगुज्ज्वलः ॥१॥
स जगामाथ कालिन्दीं लोलकल्लोलशालिनीम् ।
तीरसंलग्नफेनौघैर्हसन्तीमिव सर्वतः ॥२॥
तस्याञ्चातिमहाभीमं विषाग्निश्रृतवारिकम् ।
ह्रदं कालियनागस्य ददर्शातिविभीषणाम् ॥३॥
विषाग्निना प्रसरता दग्धतीरमहीरुहम् ।
वाताहताम्बुविक्षेपस्पर्शदग्धविहङ्गमम् ॥४॥
तमतीव महारौद्रं मृत्युवक्त्रमिवापरम् ।
विलोक्य चिन्तयामास भगवान्मधुसूदनः ॥५॥
अस्मिन्वसति दुष्टात्मा कालियोऽसौ विषायुधः ।
यो मया निर्जितस्त्यक्त्वा दुष्टो नष्टः पयोनिधिम् ॥६॥
तेनेयं दूषिता सर्वा यमुना सागरङ्गमा ।
न नरैर्गोधनैश्चापि तृषार्तैरुपभुज्यते ॥७॥
तदस्य नागराजस्य कर्तव्यो निग्रहो मया ।
निस्त्रासास्तु सुखं येन चरेयुर्व्रजवासिनः ॥८॥
एतदर्थं नृलोकेऽस्मिन्नवतारः कृतो मया ।
यदेषामुत्पथस्थानां कार्या शान्तिर्दुरात्मनाम् ॥९॥
तदेतं नातिदूरस्थं कदम्बमुरुशाखिनम् ।
अधिरुह्य पतिष्यामि ह्रदेऽस्मिन्ननिलाशिनः ॥१०॥

### पराशर उवाच

इत्थं विचिन्त्य बद्ध्वा च गाढं परिकरं ततः ।
निपपात ह्रदे तत्र नागराजस्य वेगतः ॥११॥
तेनापिपतता तत्र क्षोभितस्स महाह्रदः ।
अत्यर्थं दूरजातांस्तु समसिञ्चन्महीरुहान् ॥१२॥

तेऽहिदुष्टविषज्वालातप्ताम्बुपवनोक्षिताः ।
जज्वलुः पादपास्सद्यो ज्वालाव्याप्तदिगन्तराः ॥१३॥
आस्फोटयामास तदा कृष्णो नागह्रदे भुजम् ।
तच्छब्दश्रवणाच्चाशु नागाराजोऽभ्युपागमत् ॥१४॥
आताम्रनयनः कोपाद्विषज्वालकुलैर्मुखैः ।
वृतो महाविषैश्चान्यैरुरगैरनिलाशनैः ॥१५॥
नागपत्न्यश्च शतशो हारिहारोपशोभिताः ।
प्रकम्पिततनुक्षेपचलत्कुण्डलकान्तयः ॥१६॥
ततः प्रवेष्टितस्सर्पैस्स कृष्णो भोगबन्धनैः ।
ददंशुस्तेऽपि तं कृष्णां विषज्वालाकुलैर्मुखैः ॥१७॥
तं तत्र पतितं दृष्ट्वा सर्पभोगनिपीडितम् ।
गोपा व्रजमुपागम्य चुक्रुशुः शोकलालसाः ॥१८॥

गोपा ऊचुः

एष मोहं गतः कृष्णो मग्नो वै कालियह्रदे ।
भक्ष्यते नागराजेन तदागच्छत पश्यत ॥१९॥
तच्छ्रुत्वा तत्र ते गोपा वज्रपातोपमं वचः ।
गोप्यश्च त्वरिता जग्मुर्यशोदाप्रमुखा ह्रदम् ॥२०॥
हा हा क्वासाविति जनो गोपीनामतिविह्वलः ।
यशोदया समं भ्रान्तो द्रुतप्रस्खलितं ययौ ॥२१॥
नन्दगोपश्च गोपाश्च रामश्चाद्भुतविक्रमः ।
त्वरितं यमुनां जग्मुः कृष्णदर्शनलालसाः ॥२२॥
ददृशुश्चापि ते तत्र सर्पराजवशङ्गतम् ।
निष्प्रयत्नीकृतं कृष्णां सर्पभोगविवेष्टितम् ॥२३॥
नन्दगोपोऽपि निश्चेष्टो न्यस्य पुत्रमुखे दृशम् ।
यशोदा च महाभागा बभूव मुनिसत्तम ॥२४॥
गोप्यस्त्वन्या रुदन्त्यश्च ददृशुः शोककातराः ।
प्रोचुश्च केशवं प्रीत्या भयकातर्यगद्गदम् ॥२५॥

गोप्य ऊचुः

सर्वा यशोदया सार्द्धं विशामोऽत्र महाह्रदम् ।
सर्पराजस्य नो गन्तुमस्माभिर्युज्यते ब्रजम् ॥२६॥
दिवसः को विना सूर्यं विना चन्द्रेण का निशा ।
विना वृषेण का गावो विना कृष्णेन को व्रजः ॥२७॥
विनाकृता न यास्यामः कृष्णेनानेन गोकुलम् ।
अरम्यं नातिसेव्यं च वारिहीनं यथा सरः ॥२८॥
यत्र नेन्दीवरदलश्यामकान्तिरयं हरिः ।
तेनापि मातुर्वासेन रतिरस्तीति विस्मयः ॥२९॥
उत्फुल्लपङ्कजदलस्पष्टकान्तिविलोचनम् ।
अपश्यन्तो हरिं दीनाः कथं गोष्ठे भविष्यथ ॥३०॥
अत्यन्तमधुरालापहृताशेषमनोरथम् ।
न विना पुण्डरीकाक्षं यास्यामो नन्दगोकुलम् ॥३१॥
भोगेनावेष्टितस्यापि सर्पराजस्य पश्यत ।
स्मितशोभि मुखं गोप्यः कृष्णस्यास्मद्विलोकने ॥३२॥

## पराशर उवाच

इति गोपीवचः श्रुत्वा रौहिणोयो महाबलः ।
गोपांश्च त्रासविधुरान्विलोक्य स्तिमितेक्षणान् ॥३३॥
नन्दं च दीनमत्यर्थं न्यस्तदृष्टिं सुतानने ।
मूर्च्छाकुलां यशोदां च कृष्णमाहात्मसंज्ञया ॥३४॥
किमिदं देवदेवेश ! भावोऽयं मानुषस्त्वया ।
व्यज्यतेऽत्यन्तमात्मानं किमनन्तं न वेत्सि यत् ॥३५॥
त्वमेव जगतो नाभिरराणामिव संश्रयः ।
कर्त्तापहर्त्ता पाता च त्रैलोक्यं त्वं त्रयीमयः ॥३६॥
सेन्द्रै रुद्राग्निवसुभिरादित्यैर्मरुदश्विभिः ।
चिन्त्यसे त्वमचिन्त्यात्मन् ! समस्तैश्चैव योगिभिः ॥३७॥
जगत्यर्थ जगन्नाथ ! भारावतरणेच्छया ।
अवतीर्णोऽत्र मर्त्येषु तवांशश्चाहमग्रजः ॥३८॥
मनुष्यलीलां भगवन् ! भजता भवता सुराः ।
विडम्बयन्तस्त्वल्लीलां सर्व्व एव समासते ॥३९॥

अवतार्य भवान्पूर्वं गोकुले तु सुराङ्गनाः ।
क्रीडार्थमात्मनः पश्चादवतीर्णोऽसि शाश्वत ॥४०॥
अत्रावतीर्णयोः कृष्ण ! गोपा एव हि बान्धवाः ।
गोप्यश्च सीदतः कस्मादेतान्बन्धूनुपेक्षसे ॥४१॥
दर्शितो मानुषो भावो दर्शितं बालचापलम् ।
तदयं दम्यतां कृष्ण दुष्टात्मा दशनायुधः ॥४२॥

पराशर उवाच

इति संस्मारितः कृष्णः स्मितभिन्नोष्ठसम्पुटः ।
आस्फोट्य मोचयामास स्वदेहं भोगिबन्धनात् ॥४३॥
आनम्य चापि हस्ताभ्यामुभाभ्यां मध्यमं शिरः ।
आरुह्याभुग्रशिरसः प्रणनर्त्तोरुविक्रमः ॥४४॥
प्राणाः फणेऽभवंश्चास्य कृष्णस्याङ्घ्रिनिकुट्टनैः ।
यत्रोन्नतिं च कुरुते ननामास्य ततश्शिरः ॥४५॥
मूर्च्छामुपाययौ भ्रान्त्या नागः कृष्णस्य रेचकैः ।
दण्डपातनिपातेन ववाम रुधिरं बहु ॥४६॥
तं विभुग्नशिरोग्रीवमास्येभ्यस्स्रुतशोणितम् ।
विलोक्य करुणं जग्मुस्तत्पत्न्यो मधुसूदनम् ॥४७॥

नागपत्न्य ऊचुः

ज्ञातोऽसि देवदेवेश ! सर्वज्ञस्त्वमनुत्तम ! ।
परं ज्योतिरचिन्त्यं यत्तदंशः परमेश्वरः ॥४८॥
न समर्थाः सुरास्स्तोतु यमनन्यभवं विभुम् ।
स्वरूपवर्णनं तस्य कथं योषित्करिष्यति ॥४९॥
यस्याखिलमहीव्योमजलाग्निपवनात्मकम् ।
ब्रह्माण्डमल्पकाल्पांशः स्तोष्यामस्तं कथं वयम् ॥५०॥
यतन्तो न विदुर्नित्यं यत्स्वरूपं हि योगिनः ।
परमार्थमणोरल्पं स्थूलात्स्थूलं नताः स्मतम् ॥५१॥
न यस्य जन्मने धाता यस्य चान्ताय नान्तकः ।
स्थितिकर्त्ता न चान्योऽस्ति यस्य तस्मै नमस्सदा ॥५२॥

कोपः स्वल्पोऽपि ते नास्ति क्षितिपालनमेव ते ।
कारणां कालियस्यास्य दमने श्रूयतां वचः ॥५३॥
स्त्रियोऽनुकम्प्यास्साधूनां मूढा दीनाश्च जन्तवः ।
यतस्ततोऽस्य दीनस्य क्षम्यतां क्षमतां वर ॥५४॥
समस्तजगदाधारो भवानल्पबलः फणी ।
त्वत्पादपीडितो जह्यान्मुहूर्त्तार्द्धेन जीवितम् ॥५५॥
क्व पन्नगोऽल्पवीर्योऽयं क्व भवान्भुवनाश्रयः ।
प्रीतिद्वेषौ समोत्कृष्टगोचरौ भवतोऽव्यय ॥५६॥
ततः कुरु जगत्शामिन्प्रसादमवसीदतः ।
प्राणांस्त्यजंति नागोऽयं भर्तृभिक्षा प्रदीयताम् ॥५७॥
भुवनेश जगन्नाथ महापुरुष पुर्वज ।
प्राणांस्त्यजति नागोऽयं भर्तृभिक्षां प्रयच्छ नः ॥५८॥
वेदान्तवेद्य देवेश दुष्ठदैत्यनिबर्हण ।
प्राणांस्त्यजति नागोऽयं भर्तृभिक्षा प्रदीयताम् ॥५९॥

पराशर उवाच

इत्युक्ते ताभिराश्वस्य क्लान्तदेहोऽपि पन्नगः ।
प्रसीद देवदेवेति प्राह वाक्यं शनैः शनैः ॥६०॥

कालिय उवाच

तवाष्टगुणमैश्वर्यं नाथ! स्वाभाविकं बलम् ।
निरस्तातिशय यस्य तस्य स्तोष्यामि किन्वहम् ॥६१॥
त्वं परस्त्वं परस्याद्यः परं त्वत्तः परात्मक ।
परस्मात्परमो यस्त्वं ततः स्तोष्यामि किन्वहम् ॥६२॥
यस्माद् ब्रह्मा च रुद्रश्च चन्द्रेन्द्रमरुदश्विनः ।
वसवश्च सहादित्यैस्तस्य स्तोष्यामि किन्वहम् ॥६२॥
एकावयवसूक्ष्मांशो यस्यैतदखिलं जगत् ।
कल्पनावयवस्यांशस्तस्य स्तोष्यामि किन्वहम् ॥६४॥
सदसद्रूपिणो यस्य ब्रह्माद्यास्त्रिदशेश्वराः ।
परमार्थं न जानन्ति तस्य स्तोष्यामि किन्वहम् ॥६५॥

ब्रह्माद्यैरर्च्चितो यस्तु गन्धपुष्पानुलेपनैः ।
नन्दनादिसमुद्भूतैस्सोऽर्च्यते वा कथं मया ॥६६॥
यस्यावताररूपाणि देवराजः सदार्चति ।
न वेत्ति परमं रूपं सोऽर्च्यते वा कथं मया ॥६८॥
विषयेभ्यस्समावृत्य सर्वाक्षाणि च योगिनः ।
यमर्चयन्ति ध्यानेन सोऽर्च्यते वा कथं मया ॥६८॥
हृदि सङ्कल्प्य यद्रूपं धानेनार्चन्ति योगिनः ।
भावपुष्पादिना नाथः सोऽर्च्यते वा कथं मया ॥६९॥
सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च ।
सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥७०॥
सर्पजातिरियं क्रूरा यस्यां जातोऽस्मि केशव ।
तत्स्वभावोऽयमत्रास्ति नापराधो ममाच्युत ॥७१॥
सृज्यते भवता सर्वं तथा संह्रियते जगत् ।
जातिरूपस्वभावाश्च सृज्यन्ते सृजता त्वया ॥७२॥
यथाहं भवता सृष्टो जात्या रूपेण चेश्वर ।
स्वभावेन च संयुक्तस्तथेदं चेष्टितं मया ॥७३॥
यदन्यथा प्रवर्तेयं देवदेव ततो मयि ।
न्याय्यो दण्डनिपातो वै तवैव वचनं यथा ॥७४॥
तथाप्यज्ञे जगत्स्वामिन्दण्डं पातितवान मयि ।
स श्लाघ्योऽयं परो दण्डस्त्वत्तो मे नान्यतो वरः ॥७५॥
हतवीर्यो हतविषो दमितोऽहं त्वयाच्युत ।
जीवितं दीयतामेकमाज्ञापय करोमि किम् ॥७६॥

श्रीभगवानुवाच

नात्र स्थेयं त्वया सर्प कदाचिद्यमुनाजले ।
सभृत्यपरिवारस्त्वं समुद्रसलिलं व्रज ॥७७॥
मत्पदानि च ते सर्प दृष्ट्वा मूर्द्धनि सागरे ।
गरुडः पन्नगरिपूस्त्वयि न प्रहरिष्यति ॥७८॥

पराशर उवाच

इत्युक्त्वा सर्पराजं तं मुमोच भगवान्हरिः ।
प्रणम्य सोऽपि कृष्णाय जगाम पयसां निधिम् ॥७९॥
पश्यतां सर्वभूतानां सभृत्यसुतबान्धवः ।
समस्तभार्यासहितः परित्यज्य स्वकं ह्रदम् ॥८०॥
गते सर्पे परिष्वज्य मृतं पुनरिवागतम् ।
गोपा मूर्द्धनि हार्देन सिषिचुर्नेत्रजैर्जलैः ॥८१॥
कृष्णमक्लिष्टकर्माणमन्ये विस्मितचेतसः ।
तुष्टुवुर्मुदिता गोपा दृष्ट्वा शिवजलां नदीम् ॥८२॥
गीयमानः स गोपीभिश्चरितैस्साधुचेष्टितैः ।
संस्तूयमानो गोपैश्च कृष्णो व्रजमुपागमत् ॥८३॥

इति श्रीविष्णुपुराणे पञ्चमेंऽशे सप्तमोऽध्यायः ॥७॥

आदितः श्लोकानां समष्ट्यङ्काः-३,७८२+८३=३,८६५



## ॥ अथाष्टमोऽध्यायः ॥
## (धेनुकासुरवधः)

### पराशर उवाच

गाः पालयन्तौ च पुनः सहितौ बल-केशवौ ।
भ्रममाणौ वने तस्मिन् रम्यं तालवनं गतौ ॥१॥
तत्तु तालवनं दिव्यं धेनुको नाम दानवः ।
मृगमांसकृताहारः सदाध्यास्ते खराकृतिः ॥२॥
तत्तु तालवनं पक्व-फलसम्पत् समन्वितम् ।
दृष्ट्वा स्पृहान्विता गोपाः फलादानेऽब्रु वन् वचः ॥३॥
हे राम ! हे कृष्ण ! सदा धेनुकेनैष रक्ष्यते ।
भूप्रदेशो यतस्तस्मात् पक्कानीमानि सन्ति वै ॥४॥
फलानि पश्य तालानां गन्धामोदितदींशि च ।
वयमत्तुमभीप्सामः पात्यन्तां यदि रोचसे ॥५॥
इति गोपकुमाराणां श्रुत्वा सङ्कर्षणो वचः ।
कृष्णश्च पातयामास भुवि तालफलानि वै ॥६॥
फलानां पततां शब्दमाकर्ण्य स दुरासदः ।
आजगाम सुदुष्टात्मा कोपाद् दैतेयगर्द्दभः ॥७॥
पद्भ्यामुभाभ्यां स तदा पश्चिमाभ्यां बली बलम् ।
जघानोरसि ताभ्याञ्च स च तेनाप्यगृह्यत ॥८॥
गृहीत्वा भ्रामणेनैव सोऽम्बरे गतजीवितम् ।
तस्मिन्नेव च चिक्षेप वेगेन तृणराजनि ॥९॥
ततः फलान्यनेकानि तालाग्रान्निपतन् खरः ।
पृथिव्यां पातयामास महाव्रातोऽम्बुदानिव ॥१०॥
अन्यानप्यस्य वै ज्ञातीनागतान् दैत्यगर्द्दभान् ।
कृष्णाश्चिक्षेप तालाग्रे बलभद्रश्च लीलया ॥११॥
क्षणेनालङ्कृता पृथ्वी पक्कस्तालफलैस्तथा ।
दैत्यगर्द्दभदेहैश्च मैत्रेय ! शुशुभेऽधिकम् ॥१२॥
ततो गावो निराबाधास्तस्मिंस्तालवने द्विज ! ।
नवशस्य सुख चेरुर्यन्न भुक्तमभूत् पुरा ॥१३॥

**इति श्रीविष्णुपुराणे पञ्चमांशे अष्टमोऽध्यायः ॥८॥**

**आदितः श्लोकानां समष्ट्यङ्काः-३,८६५+१३=३,८७८**



# ॥ अथ नवमोऽध्यायः ॥
## (प्रलम्बासुरवधः)

### पराशर उवाच

तस्मिन्रासभदैतेये सानुगे विनिपातिते ।
सौम्यं गो-गोप-गोपीनां रम्यं तालवनं बभौ ॥१॥
ततस्तौ जातहर्षौ तु वसुदेवसुतावुभौ ।
हत्वा धेनुकदैतेयं भाण्डीर-वटमागतौ ॥२॥
क्ष्वडमानौ प्रगायन्तौ विचिन्वन्तौ च पादपान् ।
चारयन्तौ च गा दूरे व्याहरन्तौ च नामभिः ॥३॥
निर्योगपाशस्कन्धौ तौ वनमालाविभूषितौ ।
शुशुभाते महात्मानौ बालशृङ्गाविवर्षभौ ॥४॥
सुवर्णाञ्जनचूर्णाभ्यां तौ तदा रूषिताम्बरौ ।
महेन्द्रायुधसंयुक्तौ श्वेतकृष्णाविवाम्बुदौ ॥५॥
चेरतुर्लोकसिद्धाभिः क्रीडाभिरितरेतरम् ।
समस्तलोकनाथानां नाथभूतौ भुवं गतौ ॥६॥
मनुष्यधर्माभिरतौ मानयन्तौ मनुष्यताम् ।
तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ॥७॥
ततः स्यन्दोलिकाभिश्च निर्युद्धश्च महाबलौ ।
व्यायामं चक्रतुस्तत्र क्षेपणीयैस्तथाश्मभिः ॥८॥
तल्लिप्सुरसुरस्तत्र ह्युभयो रममाणयोः ।
आजगाम प्रलम्बाख्यो गोपवेशतिरोहितः ॥९॥
सोऽवगाहत् निःशङ्कस्तेषां मध्यममानुषः ।
मानुषं वपुरास्थाय प्रलम्बो दानवोत्तमः ॥१०॥
तयोश्छिद्रान्तरं प्रेप्सुरविषह्यममन्यत ।
कृष्णं ततो रौहिणेयं हन्तुं चक्रे मनोरथम् ॥११॥
हरिणाक्रीडनं नाम बालक्रीडनकं ततः ।
प्रकुर्वन्तो हि ते सर्वे द्वौ द्वौ युगपदुत्पतन् ॥१२॥
श्रीदाम्नां सह गोविन्दः प्रलम्बेन तथा बलः ।
गोपालैरपरैश्चान्ये गोपालाः पुप्लुवुस्ततः ॥१३॥
श्रीदामानं ततः कृष्णः प्रलम्बं रोहिणीसुतः ।

जितवान्कृष्णपक्षीयैर्गोपैरन्ये पराजिताः ॥१४॥
ते वाहयन्तस्त्वन्योन्यं भाण्डीरस्कन्धमेत्य वै ।
पुनर्निववृतुः सर्वे ये यैश्चात्र पराजिताः ॥१५॥
सङ्कर्षणन्तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः ।
न तस्थौ स जगामैव सचन्द्र इव वारिदः ॥१६॥
असहन्रौहिणेयस्य स भारं दानवोत्तमः ।
ववृधे स महाकायः प्रावृषीव बलाहकः ॥१७॥
सङ्कर्षणस्तु तं दृष्ट्वा दग्धशैलोपमाकृतिम् ।
स्रग्दामलम्बाभरणं मुकुटाटोपमस्तकम् ॥१८॥
रौद्रं शकटचक्राक्षं पादन्यास चलत्क्षितिम् ।
(अभीतमनसा तेन रक्षसा रोहिणीसुतः ।)
ह्रियमाणस्ततः कृष्णमिदं वचनमब्रवीत् ॥१९॥
कृष्ण ! कृष्ण ! ह्रियाम्येष पर्वतोदग्रमूर्त्तिना ।
केनापि पश्य दैत्येन गोपालच्छद्मरूपिणा ॥२०॥
यदत्र साम्प्रतं कार्यं मया मधुनिषूदन ।
तत्कथ्यतां प्रयात्येष दुरात्मा दानवाधमः ॥२१॥

पराशर उवाच

तमाह रामं गोविन्दः स्मितभिन्नौष्ठसम्पुटः ।
महात्मा रौहिणेयस्य बलवीर्यप्रमाणवित् ॥२२॥

श्रीकृष्ण उवाच

किमयं मानुषो भावो व्यक्तमेवावलम्ब्यते ।
सर्वात्मन् सर्वगुह्यानां गुह्यगुह्यात्मना त्वया ॥२३॥
स्मराशेषजगद्बीजकारणं कारणाग्रजम् ।
आत्मानमेकं तद्वच्च जगत्येकार्णवे च यत् ॥२४॥
किन्न वेत्सि यथाहञ्च त्वञ्चैकं कारणं भुवः ।
भारावतारणार्थाय मर्त्यलोकमुपागतौ ॥२५॥
नमः शिरस्तेऽम्बुमयी च मूर्तिः पादौ क्षितिर्वक्त्रमनन्तवह्नि ।
सोमो मनस्ते श्वसितं समीरो दिशश्चतस्रोऽव्ययः ! बाहवस्ते ॥२६॥

सहस्रवक्त्रो भगवान्महात्मा सहस्रहस्ताङ्घ्रि शरीरभेदः ।
सहस्रपद्मोद्भवयोनिराद्यः सहस्रशस्त्वां मुनयो गृणन्ति ॥२७॥
दिव्यं हि रूपं तव वेत्ति नान्यो देवैरशेषैरवताररूपम् ।
तवार्च्यते वेत्सि न किं यदन्ते त्वय्येव विश्वं लयमभ्युपैति ॥२८॥
त्वया धृतेयं धरणी बिभर्ति चराचरं विश्वमनन्तमूर्त्ते ।
कृतादिभेदैरज ! कालरूपो निमेषपूर्वो जगदेतदत्सि ॥२९॥
अत्तं यथा बाडववह्निनाम्बु हिमस्वरूपं परिगृह्य कास्तम् ।
हिमाचले भानुमतोंऽशुसङ्गाज्जलत्वमभ्येति पुनस्तदेव ॥३०॥
एवं त्वया संहरणेऽत्तमेतज्जगत्समस्तं पुनरप्यवश्यम् ।
तवैव सर्गाय समुद्यतस्य जगत्त्वमभ्येत्यनुकल्पमीश ॥३१॥
भवानहञ्च विश्वात्मन्नेकमेव च कारणम् ।
जगतोऽस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥३२॥
तत् स्मर्य्यताममेयात्मन् ! त्वयात्मा जहि दानवम् ।
मानुष्यमेवावलम्ब्य बन्धूनां क्रियतां हितम् ॥३३॥

## पराशर उवाच

इति संस्मारितो विप्र ! कृष्णेन सुमहात्मना ।
विहस्य पीडयामास प्रलम्बं बलवान्बलः ॥३४॥
मुष्टिना चाहननमूर्ध्नि कोपसंरक्तलोचनः ।
तेन चास्य प्रहारेण बहिर्याते विलोचने ॥३५॥
स निष्कासितमस्तिष्को मुखाच्छोणितमुद्वमन् ।
निपपात महीपृष्ठे दैत्यवर्यो ममार च ॥३६॥
प्रलम्बं निहतं दृष्ट्वा बलेनाद्भुतकर्म्मणा ।
प्रहृष्टास्तुष्टुवुर्गोपाःसाधुसाध्विति चाब्रुवन् ॥३७॥
संस्तूयमानो गोपैस्तु रामो दैत्ये निपातिते ।
प्रलम्बे सह कृष्णेन पुनर्गोकुलमाययौ ॥३८॥

इति श्रीविष्णुमहापुराणे पञ्चमांशे नवमोऽध्यायः ॥९॥



आदितः श्लोकानां समष्ट्यङ्काः-३,८७८+३८=३,९१६



## ॥ अथ दशमोऽध्यायः ॥
## (शरद्वर्णनम् गोवर्द्धनपूजा च)

### पराशर उवाच

तयोर्विहरतोस्तत्र रामकेशवयोर्व्रजे ।
प्रावृट् व्यतीता विकसत्सरोजा चाभवच्छरत् ॥१॥
अवापुस्तापमत्यर्थं शफर्य्यः पल्वलोदके ।
पुत्रक्षेत्रादिसक्तेन ममत्वेन यथा गृही ॥२॥
मयूरा मौनिस्तस्थुः परित्यक्तमदा वने ।
असारतां परिज्ञाय संसारस्येव योगिनः ॥३॥
उत्सृज्य जलसर्वस्य निर्मलाः सितमूर्त्तयः ।
तत्यजुश्चाम्बरं मेघा गृहं विज्ञानिनो यथा ॥४॥
शरत्सूर्यांशुतप्तानि ययुः शोष सरांसि च ।
बह्वालम्बि ममत्वेन हृदयानीव देहिनाम् ॥५॥
कुमुदैः शरदम्भांसि योग्यतालक्षणं ययुः।
अवबोधैर्मनांसीव सम्बन्धममलात्मनाम् ॥६॥
तारका विमले व्योम्नि रराजाखण्डमण्डलः ।
चन्द्रश्चरमदेहात्मा योगी साधुकुले यथा ॥७॥
शनकैः शनकैस्तीरं तत्यजुश्च जलाशयाः ।
ममत्वं क्षेत्रपुत्रादिरूढमुच्चैर्यथा बुधाः ॥८॥
पूर्वत्यक्तैः सरोऽम्भोर्हंसा योगं पुनर्ययुः ।
क्लेशैः कुयोगिनोऽशेषैरन्तरायहता इव ॥९॥
निभृतोऽभवदत्यर्थं समुद्रः स्तिमितोदकः ।
क्रमावाप्तमहायोगी निश्चलात्मा यथा यति ॥१०॥
सर्वत्रातिप्रसन्नानि सलिलानि तदाभवन् ।
ज्ञाते सर्वगते विष्णौ मनांसीव सुमेधसाम् ॥११॥
बभूव निर्मलं व्योम शरदा ध्वस्ततोयदम् ।
योगाग्निदग्धक्लेशौघं योगिनामिव मानसम् ॥१२॥
सूर्यांशुजनितं तापं निन्ये तारापतिः शमम् ।
अहङ्कारोद्भवं दुःखं विवेकः सुमहानिव ॥१३॥
नभसोऽभ्रान् भुवः पङ्कान् कालुष्यं चाम्भसः शरत् ।

इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहार इवाहरत् ॥१४॥
प्राणायाम इवाम्भोभिः सरसां कृतपूरकैः ।
अभ्यस्यतेऽनुदिवसं रेचकाकुम्भकादिभिः ॥१५॥
विमलाम्बरनक्षत्रे काले चाभ्यागतो व्रजम् ।
ददर्शेन्द्रमहारम्भायोद्यतांस्तान् व्रजौकसः ॥१६॥
कृष्णस्तानुत्सुकान् दृष्ट्वा गोपानुत्सवलालसान् ।
कौतूहलादिदं वाक्यं प्राह वृद्धान् महामतिः ॥१७॥
कोऽयं शक्रमहो नाम येन वो हर्ष आगतः ।
प्राह तं नन्दगोपश्च पृच्छन्तमतिसादरम् ॥१८॥
मेघानां पयसां चेशो देवराजः शतक्रतुः ।
तेन सञ्चोदिता मेघा वर्षन्त्यम्बुमयं रसम् ॥१९॥
तद्वृष्टिजनितं शस्यं वयमन्ये च देहिनः ।
वर्तयामोपयुञ्जानास्तर्पयामश्च देवताः ॥२०॥
क्षीरवत्य इमा गावो वत्सवत्यश्च निर्वृताः ।
तेन संवर्द्धितैः शस्यैः पुष्टास्तुष्टा भवन्ति वै ॥२१॥
नाशस्या नातृणा भूमिर्न बुभुक्षार्द्दितो जनः ।
दृश्यते यत्र दृश्यन्ते वृष्टिमन्तो बलाहकाः ॥२२॥
भौममेतत् पयो दुग्धं गोभिः सूर्य्यस्य वारिदः ।
पर्ज्जन्यः सर्वलोकस्य भवाय भुवि वर्षति ॥२३॥
तस्मात् प्रावृषि राजानः सर्वे शक्रं मुदा युताः ।
महैः सुरेशमर्च्चन्ति वयमन्ये च मानवाः ॥२४॥

पराशर उवाच

नन्दगोपस्य वचनं श्रुत्वेत्थं शक्रपूजने ।
कोपाय त्रिदशेन्द्रस्य प्राह दामोदरस्तदा ॥२५॥
न वयं कृषिकर्त्तारो वाणिज्यजीवनो न च ।
गावोऽस्मद्दैवतं तात ! वयं वनचरा यतः ॥२६॥
आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथापरा ।
विद्याचतुष्टयं त्वेतत् वार्त्तामत्र श्रृणुष्व मे ॥२७॥
कृषिर्वणिज्या तद्वत्तु तृतीयं पशुपालनम् ।
विद्या ह्येता महाभाग ! वार्त्ता वृत्तित्रयाश्रयः ॥२८॥

कर्षकाणां कृषिर्वृत्तिः पणयं विपाणिजीविनाम् ।
अस्माकं गाः परा वृत्तिर्वार्त्ताभेदैरियं त्रिभिः ॥२९॥
विद्यया यो यया युक्तस्तस्य स दैवतं महत् ।
सैव पूज्यार्च्चनीया च सैव तस्योपकारिका ॥३०॥
योऽन्यस्य फलमश्नन् वै पूजयत्यपरं नरः ।
इह च प्रत्यचैवासौ तात ! नाप्नोति शोभनम् ॥३१॥
कृष्यन्ता प्रथिता सीमा सीमान्तश्च पुनर्वनम् ।
वनान्ता गिरयः सर्वे ते चास्माकं परा गतिः ॥३२॥
न द्वारबन्धावरणा न गृहक्षेत्रिणस्तथा ।
सुखिनः सकले लोके यथा वै चक्रचारिणः ॥३३॥
श्रूयन्ते गिरयश्चामी वनेऽस्मिन् कामरूपिणः ।
तत्तद्रूपं समास्थाय रमन्ते स्वेषु सानुषु ॥३४॥
यदा चैतेऽपराध्यन्ते तेषां ये काननौकसः ।
तदा सिहादिरूपैस्तान् घातयन्ति महीधराः ॥३५॥
गिरियज्ञस्त्वयं तस्माद्गोयज्ञश्च प्रवर्त्त्यताम् ।
किमस्माकं महेन्द्रेण गावः शैलाश्च देवताः ॥३६॥
मन्त्रयज्ञपरा विप्राः सीतायज्ञाश्च कर्षकाः ।
गिरि-गोयज्ञशीलाश्च वयमद्रिवनाश्रयाः ॥३७॥
तस्माद्गोवर्द्धनः शैलो भवद्भिर्विविधार्हणैः ।
अर्च्यतां पूज्यतां मेध्य पशुं हत्वा विधानतः ॥३८॥
सर्वघोषस्य सन्दोहो गृह्यतां मा विचार्य्यताम् ।
भोज्यन्तां तेन वै विप्रास्तथा ये चाभिवाञ्छकाः ॥३९॥
समर्च्चिते कृते होमे भोजितेषु द्विजातिषु ।
शरत्पुष्पकृतापीडाः परिगच्छन्तु गोगणाः ॥४०॥
एतन्मम मतं गोपाः सम्प्रत्याद्रियते यदि ।
ततः कृता भवेत् प्रीतिर्गवामद्रेस्तथा मम ॥४१॥
इति तस्य वचः श्रुत्वा नन्दाद्यास्ते व्रजौकसः ।
प्रीत्युत्फुल्लमुखा विप्र ! साधु साध्वित्यथाब्रुवन् ॥४२॥
शोभनं ते मतं वत्स ! यदेतद्भतोदितम् ।
तत् करिष्यामहे सर्वं गिरियज्ञः प्रवर्त्त्यताम् ॥४३॥

### पराशर उवाच

तथा च कृतवन्तस्ते गिरियं व्रजौकसः ।
दधिपायसमांसाद्यैर्ददुः शैलबलि ततः ॥४४॥
द्विजांश्च भोजयामासुः शतशोऽथ सहस्रशः ।
अन्यानप्यागतानित्थं कृष्णेनोक्तं यथा पुरा ॥४५॥
गावः शैलं ततश्चक्रुश्चार्च्चितास्याः प्रदक्षिणम् ।
ऋषभाश्चापि नर्द्दन्तः सतोया जलदा इव ॥४६॥
गिरिमूर्द्धनि कृष्णोऽपि शैलोऽहमिति मूर्त्तिमान् ।
बुभुजेऽन्नं बहु तदा गोपवर्याहितं द्विज ॥४७॥
अन्येन कृष्णो रूपेण गोपैः सहं गिरेः शिरः ।
अधिरुह्यार्च्चयामास द्वितीयामात्मनस्तनुम् ॥४८॥
अन्तर्द्धानं गते तस्मिन् गोपा लव्ध्बा ततो वरान् ।
कृत्वा गिरिमहं गोष्ठ निजमभ्याययुः पुनः ॥४९॥

इति श्रीविष्णुपुराणे पञ्चमांशे दशमोऽध्यायः ॥१०॥



आदितः श्लोकानां समष्टयङ्काः-३,९१६+४९=३,९६५





## ॥ अथैकादशोऽध्यायः ॥
## (इन्द्रस्य क्रोधः, श्रीकृष्णस्य गोवर्द्धनपर्वतधारणञ्च)

### पराशर उवाच

महे प्रतिहते शक्रो मैत्रेयातिरुषान्वितः ।
संवर्त्तकं नाम गणं तोयदानामथाब्रवीत् ॥१॥
भो भो मेघा ! निशम्यैतद् वचनं वदतो मम ।
आज्ञानन्तरमेवाशु क्रियतामविचारितम् ॥२॥
नन्दगोपः सुदुर्बुद्धिर्गोपैरन्यैः सहायवान् ।
कृष्णाश्रयबराध्मातो महभङ्गमचीकरत् ॥३॥
आजीवो यः परस्तेषां याश्च गोपत्वकारणम् ।
ता गावो वृष्टिवातेन पीड्यन्तां वचनान्मम ॥४॥
अहमप्यद्रिगाभं तुङ्गमारुह्य वारणम् ।
साहाय्यं वः करिष्यामि वार्यम्बूत्सर्गयोजितम् ॥५॥

### पराशर उवाच

इत्याज्ञप्ताः सुरेन्द्रेण मुमुचुस्ते बलाहकाः ।
वातवर्षं महाभीममभावाय गवां द्विज ॥६॥
ततः क्षणेन धरणी ककुभोऽम्बरमेव च ।
एकं धारामहासारपूरणेनाभवन्मुने ॥७॥
विद्युल्लताकशाघातत्रस्तैरिव घनैर्घनम् ।
नादापूरितदिक्चक्रैर्धारासारमपात्यत ॥८॥
अन्धकारीकृते लोके वर्षद्भिरनिशं घनैः ।
अधश्चोद्र्ध्वञ्च तिर्य्यक् च जगदाप्यमिवाभवत् ॥९॥
गावस्तु तेन पतता वर्षवातेन वेगिना ।
धूताः प्राणान् जहुः सन्नत्रिकसक्थिशिरोधराः ॥१०॥
क्रोडेन वत्सानाक्रम्य तस्थुरन्या महामुने ।
गावो विवत्साश्च कृता वारिपूरेण चापराः ॥११॥
वत्साश्च दीनवदनाः पवनाकम्पिकन्धराः ।
त्राहि त्राहीत्यल्पशब्दाः कृष्णमूचुरिवार्त्तकाः ॥१२॥

ततस्तद्गोकुलं सर्वं गोगोपीगोपसङ्कुलम् ।
अतीवार्त्तं हरिर्दृष्ट्वा मैत्रेयाचिन्तयत् तदा ॥१३॥
एतत् कृतं महेन्द्रेण मोहभंगविरोधिना ।
तदेतदखिलं गोष्ठं त्रातव्यमधुना मया ॥१४॥
इममद्रिमहं धैर्य्यादुत्पाटयोरुशिलाघनम् ।
धारयिष्यामि गोष्ठस्य पृथुच्छत्रमिवोपरि ॥१५॥

पराशर उवाच

इति कृत्वा मतिं कृष्णो गोवर्द्धनमहीधरम् ।
उत्पाटर्चककरेणैव धारयामास लीलया ॥१६॥
गोपांश्चाह जगन्नाथः समुत्पाटितभूघरः ।
विशध्वमत्र त्वरिताः कृतं वर्षनिवारणाम् ॥१७॥
सुनिर्वातिषु देशेषु यथाजोषमिहास्यताम् ।
प्रविश्यता न भेतव्य गिरिपातस्य निर्भयैः ॥१८॥
इत्युक्तास्ते ततो गोपा विविशुर्गोधनैः सह ।
शकटारोपितैर्भाण्डैर्गोप्यश्चासारपीडिताः ॥१९॥
कृष्णोऽपि तं दधारैव शैलमत्यन्तनिश्चलम् ।
ब्रजैकवासिभिर्हर्षविस्मिताक्षैर्निरीक्षितः ॥२०॥
गोपगोपीजनैर्हृष्टैः प्रीतिविस्तारितेक्षणैः ।
संस्तूयमानचरितः कृष्णः शैलमधारयत् ॥२१॥
स्प्तरात्रं महामेघा ववर्षुर्नन्दगोकुले ।
इन्द्रेण चोदिता विप्र ! गोपानां नाशकारिणः ॥२२॥
ततो धृते महाशैले परित्राते च गोकुले ।
मिथ्याप्रतिज्ञो वलभिद् वारयामास तान् घनान् ॥२३॥
व्यभ्र नभसि देवेन्द्रे वितथात्मवचस्यथ ।
निष्क्रम्य गोकुलं सर्वं स्वस्थाने पुनरागमत् ॥२४॥
मुमोच कृष्णोऽपि तदा गोवर्द्धनमहाचलम् ।
स्वस्थाने विस्मितमुखैर्दृष्टस्तैस्तु व्रजौकसैः ॥२५॥

**इति विष्णुपुराणे पञ्चमांशे एकादशोऽध्यायः ॥११॥**

**आदितः श्लोकानां समष्ट्यङ्काः-३,९६५+२५=३,९९०**



## ॥ अथ द्वादशोऽध्यायः ॥
## (इन्द्रस्यागमनम्, इन्द्रेण श्रीकृष्णस्य अभिषेकश्च)

### पराशर उवाच

धृते गोवर्द्धने शैले परित्राते च गोकुले ।
रोचयामास कृष्णस्य दर्शनं पाकशासनः ॥१॥
सोऽधिरुह्य महानागमैरावतममित्रजित् ।
गोवर्द्धनगिरौ कृष्णां ददर्श त्रिदशेश्वरः ॥२॥
चारयन्तं महवीर्य्यं गावो गोपवपुर्धरम् ।
कृष्णञ्च जगतो गोपंवृतं गोपकुमारकैः ॥३॥
गरुडञ्च ददर्शोच्चैरन्तर्द्धानगतं द्विज ! ।
कृतच्छायं हरेर्मूर्ध्नि पक्षाभ्यां पक्षिपुङ्गवम् ॥४॥
अवरुह्य स नागेन्द्रादेकान्ते मधुसूदनम् ।
शक्रः सस्मितमाहेदं प्रीतिविस्फारितेक्षणः ॥५॥
कृष्ण ! कृष्ण ! श्रृणुष्वेदं यदर्थमहमागतः ।
त्वत्समीपं महाभाग ! नैतच्चिन्त्यं त्वयान्यथा ॥६॥
भारावतारणार्थाय पृथिव्याः पृथिवीतलम् ।
अवतीर्णोऽखिलाधारस्त्वमेव परमेश्वर ॥७॥
महभङ्गविरुद्धेन मया गोकुलनाशकाः ।
समादिष्ट महामेघास्तैश्चेदं कदनं कृतम् ॥८॥
त्रातास्तात ! त्वया गावः समुत्पाट्य महागिरिम् ।
तेनाहं तोषितो वीर ! कर्मणात्यद्भुतेन ते ॥९॥
साधितं कृष्ण देवानामहं मन्ये प्रयोजनम् ।
त्वयायामद्रिप्रवरः करेणैकेन यद्धृतः ॥१०॥
गोभिश्च चोदितः कृष्ण ! त्वत्सकाशमिहागतः ।
त्वया त्राताभिरत्यर्थं युष्मत्सत्कारकारणात् ॥११॥
स त्वां कृष्णाभिषेक्ष्यामि गवां वाक्यप्रचोदितः ।
उपेन्द्रत्वे गवामिन्द्रो गोविन्दस्त्वं भविष्यसि ॥१२॥
अथोपबाह्यादादाय घण्टामैरावताद्गजात् ।
अभिषेकं तया चक्रे पवित्रजलपूर्णया ॥१३॥
क्रियमाणेऽभिषेके तु गावः कृष्णस्य तत्क्षणात् ।

प्रस्रवोद्भूतदुग्धार्द्रा सद्यश्चक्रुर्वसुन्धराम् ॥१४॥
अभिषिच्य गवां वाक्याद्देवेन्द्रो वै जनार्द्दनम् ।
प्रीत्या सप्रश्रयं कृष्णं पुनराह शचीपतिः ॥१५॥
गवामेतत् कृतं वाक्यं तथान्यदपि मे श्रृणु ।
यद् ब्रवीमि महाभाग ! भारावतरणेच्छया ॥१६॥
ममांशः पुरुषव्याघ्र पृथायां पृथिवीतले ।
अवतीर्णोऽर्ज्जुनो नाम स रक्ष्यो भवता सदा ॥१७॥
भरावतारणे साह्यं स ते वीरः करिष्यति ।
स रक्षणीयो भवता यथात्मा मघूसूदन ॥१८॥

श्रीभगवानुवाच

जानामि भारते वंशे जातं पार्थं तवात्मजम् ।
तमहं पालयिष्यामि यावदस्मि महीतले ॥१९॥
यावन्महीतले शक्र ! स्थास्याम्महमरिन्दम ।
न तावदर्ज्जुनं कश्चिद्देवेन्द्र ! युधि जेष्यति ॥२०॥
कंसो नाम महाबाहुर्दैत्योऽरिष्टस्तथापरः ।
केशी कुवलयापीडश्च नरकाद्यास्तथापरे ॥२१॥
हतेष्वेतेषु देवेन्द्र ! भविष्यति महाहवः ।
तत्र विद्धि सहस्राक्ष भारावतरणं कृतम् ॥२२॥
स त्वं गच्छ न पुत्रार्थे सन्तापं कर्त्तुमर्हसि ।
नार्ज्जुनस्य रिपुः कश्चिन्ममाग्रे प्रभविष्यति ॥२३॥
अर्जुनार्थे त्वहं सर्वान् युधिष्ठिरपुरोगमान् ।
निवृत्ते भारते युद्धे कुन्त्या दास्याम्यविक्षतान् ॥२४॥
इत्युक्तः सम्परिष्वज्य देवराजो जनार्द्दनम् ।
आरुह्यैरावतं नागं पुनरेव दिवं ययौ ॥२५॥
कृष्णोऽपि सहितो गोभिर्गोपालैश्च पुनर्व्रजम् ।
आजगामाथ गोपीनां दृष्टिपूतेन वर्त्मना ॥२६॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वादशोऽध्यायः ॥१२॥



आदितः श्लोकानां समष्टयङ्काः-३,९९०+२६=४,०१६



## ॥ अथ त्रयोदशोऽध्यायः ॥
## (गोपानां श्रीकृष्णप्रभाववर्णनम्, गोपिभिः सह तस्य रासक्रीडा च)

### पराशर उवाच

गते शक्रे तु गोपालाः कृष्णमक्लिष्टकारिणम् ।
ऊचुः प्रीत्या धृतं दृष्ट्वा तेन गोवर्द्धनाचलम् ॥१॥
वयमस्मान्महाबाहो ! भवता महतो भयात् ।
गावश्च भवता त्राता गिरिधारणकर्म्मणा ॥२॥
बालीक्रीडेयमतुला गोपालत्वं जुगुप्सितम् ।
दिव्यञ्च कर्म भवतः किमेतत् तात ! कथ्यताम् ॥३॥
कालियो दमितस्तोये प्रलम्बो विनिपातितः ।
धृतो गोवर्द्धनश्चायं शङ्कितानि मनांसि नः ॥४॥
सत्यं सत्यं हरेः पादौ शापामोऽमितविक्रम ।
यथा त्वद्वीर्य्यमालोक्य न त्वां मन्यामहे नरम् ॥५॥
प्रीतिः सस्त्रीकुमारस्य व्रजस्य तव केशव ! ।
कर्म्म चेदमशक्यं यत् समस्तैस्त्रिदशैरपि ॥६॥
बालत्वं चातिवीर्य्यञ्च जन्म चास्मास्वशोभनम् ।
चिन्त्यमानममेयात्मन् ! शङ्कां कृष्ण प्रयच्छति ॥७॥
देवो वा दानवो वा त्वं यक्षो गन्धर्व एव वा ।
किं वास्माकं विचारेण बान्धवोऽसि नमोऽस्तु ते ॥८॥

### पराशर उवाच

क्षणं भूत्वा त्वसौ तूष्णीं किञ्चित् प्रणयकोपवान् ।
इत्येवमुक्तस्तैर्गोपैः कृष्णोऽप्याह महामुने ॥९॥

### श्रीभगवानुवाच

मत्सम्बन्धेन भो गोपा ! यदि लज्जा न जायते ।
श्लोध्यो वाहं ततः किं वो विचारेण प्रयोजनम् ॥१०॥
यदि वोऽस्मि मयि प्रीतिः श्लाघ्योऽहं भवतां यदि ।

तदात्मबन्धुसदृशी बुद्धिर्वः क्रियतां मयि ॥११॥
नाहं देवो न गन्धर्वो न यक्षो न च दानवः ।
अहं वो बान्धवो जातो नास्ति चिन्त्यमतोऽन्यथा ॥१२॥

पराशर उवाच

इति श्रुत्वा हरेर्वाक्यं बद्धमौनास्ततो वनम् ।
ययूर्गोपा महाभाग ! तस्मिन् प्रणयकोपिन ॥१३॥
कृष्णस्तु विमलं व्योम शरच्चन्द्रस्य चन्दिरकाम् ।
तथा कुमुदिनीं फुल्लामामोदितदिगन्तराम् ॥१४॥
वनराजिं तथा कूजद्भृङ्गमालां मनोरमाम् ।
विलोक्य सह गोपीभिर्मनश्चक्रे रतिं प्रति ॥१५॥
सह रामेणा मधुरमतीव वनिताप्रियम् ।
जगौ कलपदं शौरिर्नानातन्त्रीकृतव्रतम् ॥१६॥
रम्यं गीतध्वनि श्रुत्वा सन्त्यज्यावसथांस्तदा ।
आजग्मुस्त्वरिता गोप्यो यत्रास्ते मधुसूदनः ॥१७॥
शनैः शनैर्जगौ गोपी काचित् तस्य लयानुगम् ।
दत्तावधाना काचित्तु तमेव मनसास्मरत् ॥१८॥
काचित् कृष्णेति कृष्णेति प्रेक्त्वा लज्जामुपागता ।
ययौ च काचित् प्रेमान्धा ततपार्श्वमविलज्जिता ॥१९॥
काचिदावसशस्यान्तः स्थिता दृष्ट्वा बहिर्गुरून् ।
तन्मयत्वेन गोविन्दं दध्यौ मीलितलोचना ॥२०॥
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ।
तदप्राप्तिमहादुःखविलीनाशेषपातका ॥२१॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥२२॥
गोपीपरिवृतो रात्रिं शरच्चन्द्रमनोरमाम् ।
मानयामास गोविन्दो रासारम्भरसोत्सुकः ॥२३॥
गोप्यश्च वृन्दशः कृष्णचेष्टास्वायत्तमूर्त्तयः ।
अन्यदेशं गते कृष्णो चेरुर्वृन्दावनान्तरम् ॥२४॥
कृष्णे निरुद्धहृदयां इदमूचुः परस्परम् ।
कृष्णोऽहमेतल्ललितं व्रजाम्यालोक्यतां गतिः ॥

अन्या ब्रवीति कृष्णस्य मम गीतिर्निशम्यताम् ॥२५॥
दुष्टकालिय ! तिष्ठात्र कृष्णोऽहमिति चापरा ।
बाहुमास्फोट्य कृष्णस्य लीलासर्वस्वमाददे ॥२६॥
अन्यां ब्रवीति भो गोपा ! निःशङ्कैः स्थीयतामिह ।
अलं वृष्टिभयेनात्र धृतो गोवर्द्धनो मया ॥२७॥
धेनुकोऽयं मया क्षिप्तो विचरन्तु यथेच्छया ।
गोपी ब्रवीति वै चान्या कृष्मालीलानुकारिणी ॥२८॥
एवं नानाप्रकारासु कृष्णचेष्टासु तास्तदा ।
गोप्यो व्यग्राः समं चेरू रम्य वृन्दावनान्तरम् ॥२९॥
विलोक्यैका भुवं प्राह गोपी गोपवराङ्गना ।
पुलकाञ्चितसर्वाङ्गी विकाशिनयनोत्पला ॥३०॥
ध्वजवज्राङ्कशाब्जाङ्क रेखावन्त्यालि पश्यत ।
पदान्येतानि कृष्णस्य लीलालङ्कृतगामिनः ॥३१॥
कापि तेम समं याता कृतपुण्या मदालसा ।
पदानि तस्याश्चैतानि घनान्यल्पतनूनि च ॥३२॥
पुष्पावचयमत्रोच्चैश्चक्रे दामोदरो ध्रुवम् ।
येनाग्राक्रान्तिमात्राणि पदान्यत्र महात्मनः ॥३३॥
अत्रोपविश्य सा तेन कापि पुष्पैरलङ्कृता ।
अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्च्चितो यया ॥३४॥
पुष्पबन्धनसम्मानकृतमानामपास्य ताम् ।
नन्दगोपसुतो यातो मार्गेणानेन पश्यत ॥३५॥
अनुयागऽसमर्थान्या नितम्बभरमन्थरा ।
या गन्तव्ये द्रुतं याति निम्नपादाग्रसंस्थितिः ॥३६॥
हस्तन्यस्ताग्रहस्तेयं तेन याति तथा सखि ।
अनायत्तपदन्यासा लक्ष्यते पदपद्धतिः ॥३७॥
हस्तसंस्पर्शमात्रेण धूर्त्तेनैषा विमानिता ।
नैराश्यमन्दगामिन्या निवृत्तं लक्ष्यते पदम् ॥३८॥
नूनमुक्ता त्वरामीति पुनरेष्यामि तेऽन्तिकम् ।
तेन कृष्णेन येनैषा त्वरिता पदपद्धतिः ॥३९॥
प्रविष्टो गहनं कृष्णः पदमत्र न लक्ष्यते ।
निवर्त्तध्वं शशाङ्कस्य नैतद्दीधितिगोचरे ॥४०॥
निवृत्तास्तास्ततो गोप्यो निराशाः कृष्णदर्शने ।

यमुनातीरमागत्य जगुस्तच्चरितं तदा ॥४१॥
ततो ददृशुरायान्तं विकाशिमुखपङ्कजम् ।
गोप्यस्त्रैलोक्यगोप्तारं कृष्णमक्लिष्टचेष्टितम् ॥४२॥
काचिदालोक्य गोविन्दमायान्तमतिहर्षिता ।
कृष्ण कृष्णेति कृष्णेति प्राह नान्यवुदैरयत् ॥४३॥
काचिद् भ्रूभङ्गुरं कृत्वा ललाटफलकं हरिम् ।
विलोक्य नेत्रभृङ्गाभ्यां पपौ यन्मुखपङ्कजम् ॥४४॥
काचिदालोक्य गोविन्दं निमीलितविलोचना ।
तस्यैव रूपं ध्यायन्ती योगारूढेव चाबभौ ॥४५॥
ततः काश्चित् प्रियालापैः काश्चिद् भ्रूभङ्गवीक्षणैः ।
निन्येऽनुनयमन्याश्च करस्पर्शेन माधवः ॥४६॥
ताभिः प्रसन्नचित्ताममभिर्गोपीभिः सह सादरम् ।
रराम रासगोष्ठीभिरुदारचरितो हरिः ॥४७॥
रासमण्डलबन्धोऽपि कृष्णपार्श्वमनुज्झता ।
गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना ॥४८॥
हस्ते प्रगृह्य चैकैकां गोपिकां रासमण्डलीम् ।
चकार तत्करस्पर्श-निमीलितदृशं हरिः ॥४९॥
ततः स ववृते रासश्चलद्वलयानिःस्वनः ।
अनुयातशरत्काव्यगेयगीतिरनुक्रमात् ॥५०॥
कृष्णः शरच्चन्द्रमसं कौमुदी कुमुदाकरम् ।
जगौ गोपीजनस्त्वेकं कृष्णनाम पुनः पुनः ॥५१॥
परिवर्त्तश्रमेणैका चलद्वलयलापिनीम् ।
ददौ बाहुलतां स्कन्धे गोपी मधुनिघातिनः ॥५२॥
काचित् प्रविलसद्बाहुः परिरभ्य चुचुम्ब तम् ।
गोपी गीतस्तुतिव्याजनिपुणा मधुसूदनम् ॥५३॥
गोपीकपोलसंश्लेषमभिपत्य हरेर्भुजौ ।
पुलकोद्गमशस्याय स्वेदाम्बुधनतां गतौ ॥५४॥
रासगेयं जगौ कृष्णेति यावत् तारतरध्वनिः ।
साधु कृष्णेति कृष्णेति तावत् ता द्विगुणं जगुः ॥५५॥
गते तु गमनं चक्रुर्वलने सम्मुखं ययुः ।
प्रतिलोमानुलोमाभ्यां भेजुर्गोपाङ्गना हरिम् ॥५६॥
स तथा सह गोपीभी रराम मधुसूदनः ।

यथाब्दकोटिप्रमितः क्षणस्तेन विनाभवत् ॥५७॥
ता वार्य्यमाणाः पतिभिः पितृभिर्भ्रातृभिस्तथा ।
कृष्णां गोपाङ्गना रात्रौ रमयन्ति रतिप्रियाः ॥५८॥
सोऽपि कैशोरकवयो मानयन् मधुसूदनः ।
रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः ॥५९॥
तद्भर्त्तृषु तथा तासु सर्वभूतेषु चेश्वरः ।
आत्मस्वरूपरूपोऽसौ व्याप्य सर्वमवस्थितः ॥६०॥
यथा समस्तभूतेषु नभोऽग्निः पृथिवी जलम् ।
वायुश्चात्मा तथैवासौ व्याप्य सर्वमवस्थितः ॥६१॥

इति श्रीविष्णुपुराणे पञ्चमांशे त्रयोदशोऽध्यायः ॥१३॥



आदितः श्लोकानां समष्ट्यङ्काः-४,०१६+६१=४,०७७





## ॥ अथ चतुर्दशोऽध्यायः ॥
## (वृषभासुरवधः)

### पराशर उवाच

प्रदोषार्द्धे कदाचित्तु रासासक्ते जनार्द्दने ।
त्रासयन् समदो गोष्ठमरिष्टः समुपागतः ॥१॥
सतोय-तोयदच्छायस्तीक्ष्णश्रृङ्गोऽर्कलोचनः ।
खुराग्रपातरत्यर्थं दारयन् वसुधातलम् ॥२॥
लेलिहानः सनिष्पेषं जिह्वयोष्ठौ पुनः पुनः ।
संरम्भाविद्धलाङ्गूलः कठिनस्कन्धबन्धनः ॥३॥
उदग्रककुदाभोगः प्रमाणाद् दुरतिक्रमः ।
विण्मूत्रलिप्तपृष्ठाङ्गो गवामुद्वेगकारकः ॥४॥
प्रलम्बकण्ठोऽतिमुखस्तरुघाताङ्किताननः ।
पातयन् स गवां गर्भान् दैत्यो वृषभरूपधृक् ॥
सूदयंस्तापसानुग्रो वनान्यटति यः सदा ॥५॥
ततस्तमतिघोराक्षमवेक्ष्यातिभयातुराः ।
गोपा गोपस्त्रियश्चैव कृष्ण कृष्णेति चुक्रुशुः ॥६॥
सिंहनादं ततश्चक्रे तलशब्दञ्च केशवः ।
तच्छब्दश्रवणाच्चासौ गोविन्दाभिमुखं ययौ ॥७॥
अग्रन्यस्तविषाणाग्रः कृष्णकुक्षि-कृतेक्षणः ।
अभ्यधावत दुष्टात्मा कृष्णां वृषभदानवः ॥८॥
आयान्तं दैत्यवृषभं दृष्ट्वा कृष्णो महाबलः ।
न चचाल ततः स्थानादवज्ञास्मितलीलया ॥९॥
आसन्नं चैव जग्राह ग्राहवन्मधुसूदनः ।
जघान जानुना कुक्षौ विषाणग्रहणाचलम् ॥१०॥
तस्य दर्पबलं भङ्क्त्वा गृहीतस्य विषाणयोः ।
अपीडयदरिष्टस्य कण्ठं क्लिन्नमिवाम्बरम् ॥११॥
उत्पाट्य श्रृङ्गमेकन्तु तेनैवाताडयत् ततः ।
ममार स महादैत्यो मुखाच्छोणितमुद्वमन् ॥१२॥
तुष्टुवुर्निहते तस्मिन् दैत्ये गोपा जनार्द्दनम् ।
जम्भे हते सहस्राक्षं पुरा देवगणा यथा ॥१३॥

**इति श्रीविष्णुपुराणे पञ्चमांशे चतुर्दशोऽध्यायः ॥१४॥**



**आदितः श्लोकानां समष्ट्यङ्काः-४,०७७+१३=४,०९०**





## ॥ अथ पञ्चदशोऽध्यायः ॥
## (श्रीकृष्णमानेतुं कंसेनाक्रूरस्य प्रेषणम्)

### पराशर उवाच

ककुद्मिनि हतेऽरिष्टे धेनुके विनिपातिते ।
प्रलम्बो निहिते वीरे धृते गोवर्द्धनाचले ॥१॥
दमिते कालिये नागे भग्ने तुङ्गतरुद्वये ।
हतायां पूतनायाञ्च शकटे परिवर्त्तिते ॥२॥
कंसाय नारदः प्राह यथावृत्तमनुक्रमात् ।
यशोदादेवकीगर्भपरिवर्त्ताद्यशेषतः ॥३॥
श्रुत्वा तत् सकलं कंसो नारदाद् देवदर्शनात् ।
वसुदेवं प्रति तदा कोपं चक्रे सुदुर्म्मतिः ॥४॥
सोऽतिकोपादुपालभ्य सर्वयादवसंसदि ।
जगर्ह यादवांश्चैव कार्य्यञ्चैतदचिन्तयत् ॥५॥
यावन्त बलमारूढौ रामकृष्णौ सुबालकौ ।
तावदेव मया वध्यावसाध्यौ रूढयौवनौ ॥६॥
चाणूरोऽत्र महावीर्य्यो मुष्टिकश्च महाबलः ।
एताभ्यां मल्लयुद्धेन घातयिष्यामि दुर्मदौ ॥७॥
धनुर्म्महमहायागव्याजेनानीय तौ व्रजात् ।
तथा तथा यतिष्यामि यास्येते सङ्क्षयं यथा ॥८॥
श्वफल्कतनयं सोऽहमक्रूरं यदुपुङ्गवम् ।
तयोरानयनार्थाय प्रेषयिष्यामि गोकुलम् ॥९॥
वृन्दावनचरं घोरमादेक्ष्यामि च केशिनम् ।
तत्रैवासावतिबलस्तावुभौ घातयिष्यति ॥१०॥
गजः कुवलयापीडो मत्समीपमुपागतौ ।
घातयिष्यति वा गोपौ वसुदेवसुतावुभौ ॥११॥

### पराशर उवाच

इत्यालोच्य स दुष्टात्मा कंसो रामजनार्द्दनौ ।
हन्तुं कृतमतिर्वीरमक्रूरं वाक्यमब्रवीत् ॥१२॥

## कंस उवाच

भो भो दानपते ! वाक्य क्रियतां प्रीतये मम ।
इतः स्यन्दनमारुह्य गम्यतां नन्दगोकुलम् ॥१३॥
वसुदेवसुतौ तत्र विष्णोरंशसमुद्भवौ ।
नाशाय किल सम्भूतौ मम दुष्टौ प्रवर्द्धतः ॥१४॥
धनुर्महो ममाप्यत्र चतुर्द्दश्यां भविष्यति ।
आनेयौ भवता गत्वा मल्लयुद्धाय तावुभौ ॥१५॥
चाणूरमुष्टिकौ मल्लौ नियुद्धकुशलौ मम ।
ताभ्यां सहानयोर्युद्धं सर्वलोकोऽत्र पश्यतु ॥१६॥
नागः कुवलयापीडो महामात्रप्रचोदितः ।
स वा निहंस्यते पापौ वसुदेवात्मजौ शिशू ॥१७॥
तौ हत्वा वसुदेवञ्च नन्दगोपञ्च दुर्म्मतिम् ।
हनिष्ये पितरं चैनमुग्रसेनं सुदुर्म्मतिम् ॥१८॥
ततः समस्तगोपानां गोधनान्यखिलान्यहम् ।
वित्तं चापि हरिष्यामि दुष्टानां मद्वधैषिणाम् ॥१९॥
त्वामृते यादवाश्चैते दुष्टा दानपते ! मयि ।
एतेषाञ्च वधायाहं प्रयतिष्याम्यनुक्रमात् ॥२०॥
ततो निष्कण्टकं सर्वं राज्यमेतदयादवम् ।
प्रशासिष्ये त्वया तस्मान्मत्प्रीत्या वीर ! गम्यताम् ॥२१॥
यथा च माहिषं सर्पिर्दधि वाप्युपहार्य वै ।
गोपाः समानयन्त्याशु त्वया वाच्यास्तथा तथा ॥२२॥

## पराशर उवाच

इत्याज्ञप्तस्तदाक्रूरो महाभागवतो द्विज ।
प्रीतिमानभवत् कृष्णं श्वो द्रक्ष्यामीति सत्वरः ॥२३॥
तथेत्युक्त्वा च राजानं रथमारुह्य शोभनम् ।
निश्चक्राम ततः पुर्य्या मथुराया मधुप्रियः ॥२४॥

## ॥ अथ षोडशोऽध्यायः ॥
## (केशिवधः)

### पराशर उवाच

केशी चापि बलोदग्रः कंसदूत-प्रणोदितः ।
कृष्णस्य निधनाकाङ्क्षी वृन्दावनमुपागमत् ॥१॥
स खुरक्षतभूपृष्ठः सटाक्षेपधूताम्बूदः ।
प्लुतविक्रान्तचन्द्रार्कमार्गे गोपानुपाद्रवत् ॥२॥
तस्य ह्रेषितशब्देन गोपाला दैत्यवाजिनः ।
गोप्यश्च भयसंविघ्ना गोविन्दं शरणं ययुः ॥३॥
त्राहि त्राहीति गोविन्दः श्रुत्वा तेषां तदा वचः ।
सतोयजलदध्वानगम्भीरमिदमुक्तवान् ॥४॥

### श्रीकृष्ण उवाच

अलं त्रासेन गोपालाः केशिनः किं भयातुरैः ।
भवद्भिर्गोपजातीयैर्वीरवीर्य्यं विलोप्यते ॥५॥
किमनेनाल्पसारेण ह्रेषिताटोपकारिणा ।
दैतेयबलावहेन वल्गता दुष्टवाजिना ॥६॥
एह्ये हि दुष्ट कृष्णोऽहं पूष्णस्त्विव पिनाकधृक् ।
पातयिष्यामि दशनान् वदनादखिलांस्तव ॥७॥
इत्युक्त्वास्फोटच गोविन्दः केशिनः सम्मुखं ययौ ।
विवृतास्यस्तु सोऽप्येनं दैतेश्चाप्युपाद्रवत् ॥८॥
बाहुमाभोगिनं कृत्वा मुखे तस्य जनार्द्दनः ।
प्रवेशयामास तदा केशिनो दुष्टवाजिनः ॥९॥
केशिनो वदनं तेन विशता कृष्णबाहुना ।
शातिता दशनाः पेतुः सिताभ्रावयवा इव ॥१०॥
कृष्णस्य ववृधे बाहुः केशिदेहगतो द्विज ।
विनाशाय यथा व्याधिरासम्भूतेरुपेक्षितः ॥११॥
विपाटितोष्ठो बहुलं सफेनं रुधिरं वमन् ।
सोऽक्षिणी विवृते चक्रे निःसृते मुक्तबन्धने ॥१२॥

जघान धरणीं पादैः शकृन्मूत्रं समुत्सृजन् ।
स्वेदार्द्रगात्रः श्रान्तश्च निर्यन्तः सोऽभवत् ततः ॥१३॥
व्यादितास्यो महारौद्रः सोऽसुरः कृष्णबाहुना ।
निपपात द्विधाभूतो वैद्युतेन द्रुमो यथा ॥१४॥
द्विपादपृष्ठपुच्छार्द्धे श्रवणैकाक्षिनासिके ।
केशिनस्ते द्विधाभूते शकले द्वे विरेजतुः ॥१५॥
हत्वा तु केशिनं कृष्णो गोपालैर्मुदितैर्वृतः ।
अनायस्ततनुः स्वस्थो हसंस्तत्रैव तस्थिवान् ॥१६॥
ततो गोप्यश्च गोपाश्च हतो केशिनि विस्मिताः ।
तुष्टुवुः पुण्डरीकाक्षमनुरागमनोरमम् ॥१७॥
अथाहान्तरितो विप्रो नारदो जलदे स्थितः ।
केशिनं निहतं दृष्ट्वा हर्षनिर्भरमानसः ॥१८॥
साधु साधु जगन्नाथ लीलयैव यदच्युत ।
निहतोऽयं त्वया केशी क्लेशदस्त्रिदिवौकसाम् ॥१९॥
युद्धोत्सुकोऽहमत्यर्थं नरवाजि-महाहवम् ।
अभूतपूर्वमन्यत्र द्रष्टुं स्वर्गादुपागतः ॥२०॥
कर्माण्यत्रावतारे ते कृतानि मधूसूदन ।
यानि तैर्विस्मितं चेतस्तोषमेतेन मे गतम् ॥२१॥
तुरङ्गस्यास्य शक्रोऽपि कृष्ण ! देवाश्च विभ्यति ।
धुतकेशजालस्य ह्रेषतोऽभ्रावलोकिनः ॥२२॥
यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्द्दन ।
तस्मात् केशवनाम्ना त्वं लोके गेयो भविष्यसि ॥२३॥
स्वस्त्यस्तु ते गमिष्यामि कंसयुद्धेऽधुना पुनः ।
परश्वोऽहं समेष्यामि त्वया केशिनिसूदन ॥२४॥
उग्रसेनसुते कंसे सानगे विनिपातिते ।
भारावतारकर्त्ता त्वं पृथिव्याः पृथिवीधर ॥२५॥
तत्रानेकप्रकाराणि युद्धानि पृथिवीक्षिताम् ।
द्रष्टव्यानि मया युस्मत्प्रणीतानि जनार्द्दन ॥२६॥
सोऽहं यास्यामि गोविन्द ! देवकार्यं महत् कृतम् ।
त्वया सभाजितश्चायं स्वस्ति तेऽस्तु व्रजाम्यहम् ॥२७॥

## पराशर उवाच

**नारदे तु गते कृष्णः सह गोपैरविस्मितः ।
विवेश गोकुलं गोपीनेत्रपानैकभाजनम् ॥२८॥**

**इति श्रीविष्णुपुराणे पञ्चमांशे षोडशोऽध्यायः ॥१६॥**

**आदितः श्लोकानां समष्ट्यङ्काः-४,११४+२८=४,१४२**



## ॥ अथ सप्तदशोऽध्यायः ॥
## (अक्रूरस्य गोकुलयात्रा)

### पराशर उवाच

अक्रूरोऽपि विनिष्क्रम्य स्यन्दनेनाशुगामिना ।
कृष्णसन्दर्शनायैकः प्रययौ नन्दगोकुलम् ॥१॥
चिन्तयामास चाक्रूरो नास्ति धन्यतरो मया ।
योऽहमंशावतीर्णस्य मुखं द्रक्ष्यामि चक्रिणः ॥२॥
अद्य मे सफलं जन्म सुप्रभाता च मे निशा ।
यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम् ॥३॥
अद्य मे सफले नेत्रे अद्य मे सफला गिरः ।
यन्मे परस्परालापो दृष्ट्वां विष्णुं भविष्यति ॥४॥
पापं हरति यत् पुंसां स्मृतं सङ्कल्पनामयम् ।
तत् पुण्डरीकनयनं विष्णोर्द्रक्ष्याम्यहं मुखम् ॥५॥
निर्जग्मुश्च यतो वेदा वेदाङ्गान्यखिलानि च ।
द्रक्ष्यामि तत् परं धाम धाम्नां भगवतो मुखम् ॥६॥
यज्ञेषु यज्ञपुरुषः पुरुषैः पुरुषोत्तमः ।
इज्यते योऽखिलाधारस्तं द्रक्ष्यामि जगत्पतिम् ॥७॥
इष्ट्वा यमिन्द्रो यज्ञानां शतेनामरराजताम् ।
अवाप तमनन्तादिमहं द्रक्ष्यामि केशवम् ॥८॥
न ब्रह्मा नेन्द्र-रुद्रा-श्वि-वस्वादित्यमरुद्गणाः ।
यस्य स्वरूपं जानन्ति स्प्रक्ष्यत्यङ्गं स मे हरिः ॥९॥
सर्वात्मा सर्ववित् सर्वः सर्वभूतेष्ववस्थितः ।
यो वितत्यात्ययो व्यापी स वक्ष्यति मया सह ॥१०॥
मत्स्यकूर्मवराहाश्वसिंहरूपादिभिः स्थितिम् ।
चकार जगतो योऽजः सोऽद्य मामालपिष्यति ॥११॥
साम्प्रतञ्च जगत्स्वामी कार्यमात्महृदि स्थितम् ।
कर्त्तु मनुष्यतां प्राप्तः स्वेच्छादेहधृगव्ययः ॥१२॥
योऽनन्तः पृथिवीं धत्ते शेखरस्थितिसंस्थिताम् ।
सोऽवतीर्णो जगत्यर्थे मामक्रूरेति वक्ष्यति ॥१३॥
पितृ-पुत्र-सुहृद्-भ्रातृ-मातृ-बन्धुमयीमिमाम् ।

यन्मायां नालमुत्तर्तु जगत् तस्मै नमो नमः ॥१४॥
तरस्यविद्यां विततां हृदि यस्मिन् निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥१५॥
यज्विभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः ।
वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्मि तम् ॥१६॥
यथा तत्र जगद्धाम्नि धातर्य्येतत् प्रतिष्ठितम् ।
सदसत् तेन सत्येन मय्यसौ यातु सौम्यताम् ॥१७॥
स्मृते सकलकल्याण-भाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥१८॥

पराशर उवाच

इत्थं सञ्चिन्तयन् विष्णु भक्तिनम्रात्ममानसः ।
अक्रूरो गोकुल प्राप्तः किञ्चित् सूर्ये विराजति ॥१९॥
स ददर्श तदा तत्र कृष्णामादोहने गवाम् ।
वत्समध्यगतं फुल्लनीलोत्पलदलच्छविम् ॥२०॥
अस्पष्टपद्मपत्राक्षं श्रीवत्साङ्कितवक्षसम् ।
प्रलम्बबाहुमायामितुङ्गोरःस्थलमुन्नसम् ॥२१॥
सविलासस्मिताधारं ब्रिभ्राणं मुखपङ्कजम् ।
तुङ्गरक्तनखं पद्भ्यां धरण्या सुप्रतिष्ठितम् ॥२२॥
विभ्राणं वाससी पीते वन्यपुष्पावभूषितम् ।
सार्द्रनीललताहस्तं सिताम्भोजावतंसकम् ॥२३॥
हंसकुन्देन्दुधवलं नीलाम्बरधरं द्विज ।
तस्यानु बलभद्रञ्च ददर्श यदुनन्दनम् ॥२४॥
प्रांशुमुन्नतबाह्वंसं विकाशिमुखपङ्कजम् ।
मेघमालापरिवृतं कैलासाद्रिमिवापरम् ॥२५॥
तौ दृष्ट्वा विकसद्वक्त्रसरोजः स महामतिः ।
पुलकाञ्चितसर्वाङ्गस्तदाक्रूरोऽभवन्मुने ॥२६॥
एतत् तत् परमं धाम तदेतत् परमं पदम् ।
भगवद्वासुदेवांशो द्विधा योऽयमवस्थितः ॥२७॥
साफल्यमक्ष्णोर्युगमेतदत्र दृष्टे जगद्धातरि यातमुच्चैः ।
अप्यङ्गमेतद् भगवत्प्रसादाद् दत्तेऽङ्गसङ्गे फलवन्मम स्यात् ॥२८॥

अप्येष पृष्ठे मम हस्तपद्मं करिष्यति श्रीमदनन्तमूर्त्तिः ।
यस्याङ्गुलिस्पर्शहताखिलाघैरवाप्यते सिद्धिरनाशदोषा ॥२९॥
येनाग्निविद्युद्रविरश्मिमाला करालमत्युग्रमपास्य चक्रम् ।
चक्रं घ्नता दैत्यपतेर्हृतानि दैत्याङ्गनानां नयनाञ्जनानि ॥३०॥
यत्राम्बु विन्यस्य बलिर्म्मनोज्ञानवाप भोगान् वसुधातलस्थः ।
तथामरत्वं त्रिदशाधिपत्यं मन्वन्तरं पूर्णमपेतशत्रुः ॥३१॥
अप्येष मां कंसपरिग्रहेण दोषास्पदीभूतमदोषदुष्टम् ।
कर्त्तावमानोपहतं धिगस्तु तज्जन्मनः साधुबहिष्कृतं यत् ॥३२॥
ज्ञानात्मकस्यामलसत्त्वराशेरपेतदोषस्य सदा स्फुटस्य ।
किं वा जगत्यत्र समस्तपुंसामज्ञातमस्यास्ति हृदि स्थितस्य ॥३३॥
तस्मादहं भक्तिविनम्रचेता व्रजामि सर्वेश्वरमीश्वराणाम् ।
अंशावतारं पुरुषोत्तमस्य अनादिमध्यान्तमयस्य विष्णोः ॥३४॥

इति श्रीविष्णुपुराणे पञ्चमांशे सप्तदशोऽध्यायः ॥१७॥



आदितः श्लोकानां समष्ट्यङ्काः-४,१४२+३४=४,१७६





## ॥ अथाष्टादशोऽध्यायः ॥
## (भगवतः श्रीकृष्णस्य मथुरागमनम्, गोपीनां विरहवर्णनम्, अक्रूरस्य मोहश्च)

### पराशर उवाच

चिन्तयन्निति गोविन्दमुपागम्य स यादवः ।
अक्रूरोऽस्मीति चरणौ ननाम शिरसा हरेः ॥१॥
सोऽप्येनहं ध्वजवज्राब्ज कृतचिह्नेन पाणिना ।
संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे ॥२॥
कृतसंवादनौ तेन यथावद् बलकेशवौ ।
ततः प्रविष्टौ संहृष्टौ तमादायात्ममन्दिरम् ॥३॥
सह ताभ्यां तदाक्रूरः कृतसंवादनादिकः ।
भुक्तभोज्यो यथान्यायमाचचक्षे ततस्तयोः ॥४॥
यथा निर्भर्त्स्यते तेन कसेनानकदुन्दुभिः ।
यथा च देवकी देवी दानवेन दुरात्मना ॥५॥
उग्रसेने यथा कंसः सुदुरात्मा च वर्त्तते।
यं चैवार्थं समुद्दिश्य स कंसेन विसर्ज्जितः ॥६॥
तत् सर्वं विस्तराच्छ्रुत्वा भगवान् केशिसूदनः ।
उवाच खिलमप्येतज्ज्ञातं दानपते ! मया ॥७॥
करिष्ये च महाभाग ! यदत्रौपयिकं मतम् ।
विचिन्त्यं नान्यथैतत् ते विद्धि कंसं हतं मया ॥८॥
अहं रामश्च मथुरां श्वो यास्यावः समं त्वया ।
गोपवृद्धाश्च यास्यन्ति आदायोपायनं बहु ॥९॥
निशेयं नीयतां वीर ! न चिन्तां कर्त्तुमर्हसि ।
त्रिरात्राभ्यन्तरे कंसं हनिष्यामि सहानुगम् ॥१०॥

### पराशर उवाच

समादिश्य ततो गोपानक्रूरोऽपि सकेशवः ।
सुष्वाप बलभद्रश्च नन्दगोपगृहे सुखम् ॥११॥
ततः प्रभाते विमले कृष्णरामौ महामती ।
अक्रूरेण समं गन्तुमुद्यतौ मथुरां प्रति ॥१२॥

दृष्ट्वा गोपीजनः सास्रः श्लथद्वलयबाहुकः ।
निःश्वस्य चातिदुःखार्त्तः प्राह चेदं परस्परम् ॥१३॥
मथुरां प्राप्य गोविन्दः कथं गोकुलमेष्यति ।
नागरस्त्रीकलालापमधु श्रोत्रेण पास्यति ॥१४॥
विलासिवाक्यपानेषु नागरीणां कृतास्पदम् ।
चित्तमस्य कथं भूयो ग्राम्यगोपीषु यास्यति ॥१५॥
सारं समस्तगोष्ठस्य विधिना हरता हरिम् ।
प्रहृतं गोपयोषित्सु निर्गुणेन दुरात्मना ॥१६॥
भावगर्भस्मितं वाक्यं विलासललिता गतिः ।
नागरीणामतीवैतत् कटाक्षेक्षितमेव च ॥१७॥
ग्राम्यो हरिरयं तासां विलासनिगडैर्युतः ।
भवतीनां पुनः पार्श्वं कया युक्त्या समेष्यति ॥१८॥
एषैष रथमारुह्य मथुरां याति केशवः ।
क्रूरेणाक्रूरकेणात्र निराशेन प्रतारितः ॥१९॥
किं न वेत्ति नृशंसोऽत्र अनुरागपरं जनम् ।
येनेममक्ष्णोराह्लादं नयत्यन्यत्र नो हरिम् ॥२०॥
एश रामेण सहितः प्रयात्यत्यन्तनिर्घृणः ।
रथमारुह्य गोविन्दस्त्वर्य्यतामस्य वारणे ॥२१॥
गुरूणामग्रतो वक्तुं किं ब्रवीषि न नः क्षमम् ।
गुरवः किं करिष्यन्ति दग्धानां विरहाग्निना ॥२२॥
नन्दगोपमुखा गोपा गन्तुमेते समुद्यताः ।
नोद्यमं कुरुते कश्चिद् गोविन्दविनिवर्त्तने ॥२३॥
सुप्रभाताद्य रजनी मथुरावासियोषिताम् ।
पास्यन्त्युतवक्ताब्जं यासां नेत्रालिपङ्क्तयः ॥२४॥
धन्यास्ते पथि ये कृष्णामतो यान्त्यनिवारिताः ।
उद्वहिष्यन्ति पश्यन्तः स्वदेहं पुलकाञ्चितम् ॥२५॥
मथुरानगरीपौरनयनानां महोत्सवः ।
गोविन्दावयवैर्दृष्टैरतीवाद्य भविष्यति ॥२६॥
को नु स्वपनः सुभाग्याभिर्दृष्टस्ताभिरधोक्षजम् ।
विस्तारिकान्तिनयना या द्रक्ष्यन्त्यनिवारितम् ॥२७॥
अहो गोपीजनस्यास्य दर्शयित्वा महानिधिम् ।
उद्धृतान्यत्र नेत्राणि विधात्राकरुणात्मना ॥२८॥

अनुरागेण शैथिल्यमस्मासु व्रजता हरेः ।
शैथिल्यमुपयान्त्याशु करेषु वलयान्यपि ॥२९॥
अक्रूरः क्रूरहृदयः शीघ्रं प्रेरयते हयान् ।
एवमार्त्तासु योषित्सु घृणा कस्य न जायते ॥३०॥
हा हा कृष्णरथस्योच्चैश्चक्ररेणुर्निरीक्ष्यताम् ।
दूरीकृतो हरिर्येन सोऽपि रेणुर्न लक्ष्यते ॥३१॥
इत्येवमतिहार्द्देन गोपीजननिरीक्षितः ।
तत्याज व्रजभूभागं सह रामेण केशवः ॥३२॥
गच्छन्तो जविताश्वेन रथेन यमुनातटम् ।
प्राप्ता मध्याह्नसमये रामाक्रूरजनार्द्दनाः ॥३३॥
अथाह कृष्णमक्रूरो भवद्भ्यां तावदास्यताम् ।
यावत् करोमि कालिन्द्यामाह्निकार्हणमम्भसि ॥३४॥
तथेत्युक्ते ततः स्नातः स्वाचान्तः स महामतिः ।
दध्यौ ब्रह्म परं विप्र ! प्रविश्य यमुनाजले ॥३५॥
फणासहस्रमलाढ्यं बलभद्रं ददर्श सः ।
कुन्दमालाङ्गमुन्निद्र-पद्मपत्रारुणेक्षणम् ॥३६॥
वृतं वासुकिरम्भाद्यैर्महद्भिः पवनाशिभिः ।
संस्तूयमानं गन्धर्वैर्वनमालाविभूषितम् ॥३७॥
दधानमसिते वस्त्रे चारुपद्मावतंसकम् ।
चारुकुण्डलिनं भान्तमन्तर्जलतले स्थितम् ॥३८॥
तस्योत्सङ्गे घनश्याममाताम्रायतलोचनम् ।
चतुर्बाहुमुदाराङ्गं चक्राद्यायुधभूषणम् ॥३९॥
पीते वसानं वसने चित्रमाल्यविभूषणाम् ।
शक्रचापतडिन्मालाविचित्रमिव तोयदम् ॥४०॥
श्रीवत्सवक्षसञ्चारुकेयूरमुकुटोज्ज्वलम् ।
ददर्श कृष्णमक्लिष्टपुण्डरीकावतंसकम् ॥४१॥
सनन्दनाद्यैर्मुनिभिः सिद्धयोगैरकल्मषैः ।
विचिन्त्यात्मानं तत्रस्थैर्नासाग्रन्यस्तलोचनैः ॥४२॥
बलकृष्णौ तथाक्रूरः प्रत्यभिज्ञाय विस्मितः ।
सोऽचिन्तयद् रथाच्छीघ्रं कथमत्रागताविति ॥४३॥
विवक्षोः स्तम्भयामास वाचं तस्य जनार्द्दनः ।
ततो निष्क्रम्य सलिलाद् रथमभ्यागतः पुनः ॥४४॥

दद‌र्श तत्र चैवोभौ रथस्योपर्य्यधिष्ठितौ ।
रामकृष्णौ यथापूर्वं मनुष्यवपुषान्वितौ ॥४५॥
निमग्नश्च ततस्तोये स ददर्श तथैव तौ ।
संस्तूयमानौ गन्धर्वमुनिसिद्धमहोरगैः ॥४६॥
ततो विज्ञातसद्भावः स तु दानपतिस्तथा ।
तुष्टाव सर्वविज्ञानमयमच्युतमीश्वरम् ॥४७॥
सन्मात्ररूपिणेऽचिन्त्यमहिम्ने परमात्मने ।
व्यापिने नैकरूपैकस्वरूपाय नमो नमः ॥४८॥
सत्त्वरूपाय तेऽचिन्त्य ! हविर्भूताय ते नमः ।
नमोऽविज्ञातपाराय पराय प्रकृतेः प्रभो ॥४९॥
भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥५०॥
प्रसीद सर्वं सर्वात्मन् क्षराक्षरमयेश्वर ।
ब्रह्मविष्णुशिवाद्याभिः कल्पनाभिरुदीरितः ॥५१॥
अनाख्येयस्वरूपात्मन् ! अनाख्येयप्रयोजन ।
अनाख्येयाभिधानं त्वां नतोऽस्मि परमेश्वर ॥५२॥
न यत्र नाथ ! विद्यन्ते नामजात्यादिकल्पनाः ।
तद् ब्रह्मा परमं नित्यमविकारि भवानजः ॥५३॥
न कल्पनामृतेऽर्थस्य सर्वस्याधिगमो यतः ।
ततः कृष्णाच्युतानन्तविष्णुसंज्ञाभिरीड्यसे ॥५४॥
सर्वार्थस्त्वमज ! विकल्पनाभिरेतद् देवाद्य जगदखिलं त्वमेव विश्वम् ।
विश्वात्मंस्त्वमिति विकारभावहीनः सर्वस्मिन् न हि भवतोऽस्ति किञ्चिदन्यत् ॥५५॥
त्वं ब्रह्मा पशुपतिरर्य्यमा विधाता धाता त्वं त्रिदशपतिः समीरणोऽग्निः ।
तोयेशो धनपतिरन्तकस्त्वमेको भिन्नार्थैर्जगदपि पासि शक्तिभेदैः ॥५६॥
विश्वं भवान् सृजति सूर्य्यगभस्तिरूपो विश्वञ्च ते गुणमयोऽयमज ! प्रपञ्चः ।
रूपं परं सदितिवाचकमक्षरं यज्ज्ञानात्मने सदसते प्रणतोऽस्मि तस्मै ॥५७॥
ॐ नमो वासुदेवाय नमः सङ्कर्षणाय ते ।
प्रद्युम्नाय नमस्तुभ्यमनिरुद्धाय ते नमः ॥५८॥

इति श्रीविष्णुपुराणे पञ्चमांशे अष्टादशोऽध्यायः ॥१८॥



आदितः श्लोकानां समष्ट्यङ्काः-४,१७६+५८=४,२३४



## ॥ अथैकोनविंशोऽध्यायः ॥
## (श्रीकृष्णस्य रजकवधः, मालाकारगृहे प्रवेशश्च)

### पराशर उवाच

एवमन्तर्जले विष्णुमभिष्टूय स यादवः ।
अर्च्चयामास सर्वेशं पुष्पैर्धूपैर्मनोरमैः ॥१॥
परित्यक्तान्यविषयो मनस्तत्र निवेश्य सः ।
ब्रह्मभूते चिरं स्थित्वा विरराम समाधितः ॥२॥
कृतकृत्यमिवात्मानं मन्यमानो महामतिः ।
आजगाम रथं भूयो निर्गम्य यमुनाम्भसः ॥३॥
रामकृष्णौ च ददृशे यथापूर्वं रथे स्थितौ ।
विस्मिताक्षस्तदाक्रूरस्तञ्च कृष्णोऽभ्यभाषत ॥४॥
नूनं ते दृष्टमाश्चर्य्यमक्रूर ! यमुनाजले ।
विस्मयोत्फुल्लनयनो भवान् संलक्ष्यते यतः ॥५॥

### अक्रूर उवाच

अन्तर्जले यदाश्चर्यं दृष्टं तत्र मयाच्युत ।
तदत्रापि हि पश्यामि मूर्त्तिमत् पुरतः स्थितम् ॥६॥
जगदेतन्महाश्चर्य्यं रूपं यस्य महात्मनः ।
तेनाश्चर्य्यवरेणाहं भवता कृष्ण ! सङ्गतः ॥७॥
तत् किमेतेन मथुरां व्रजामो मधुसूदन ।
बिभेमि कंसाद्धिग् जन्म परपिण्डोपजीविनाम् ॥८॥
इत्युक्त्वा चोदयामास तान् हयान् वातरंहसः ।
सम्प्राप्तश्चातिसायाह्ने सोऽक्रूरो मथुरां पुरीम् ॥९॥
विलोक्य मथुरां कृष्णं रामञ्चाह स यादवः ।
पद्भ्यां यातं महावीर्य्यौ रथेनैको विशाम्यहम् ॥१०॥
गन्तव्यं वसुदेवस्य भवद्भ्यां न तथा गृहम् ।
युवयोर्हि कृते वृद्धः स कंसेन निरस्यते ॥११॥

### पराशर उवाच

इत्युक्त्वा प्रविवेशाथ सोऽक्रूरो मथुरां पुरीम् ।
प्रविष्टौ रामकृष्णौ च राजमार्गमुपागतौ ॥१२॥
स्त्रीभिर्नरैश्च सानन्दं लोचनैरभिवीक्षितौ ।
जग्मतुर्लीलया वीरौ दृप्तौ बालगजाविव ॥१३॥
भ्रममाणौ तु तौ दृष्ट्वा रजकं रङ्गकारकम् ।
अयाचेतां सुरूपाणि वासांसि रुचिराननौ ॥१४॥
कंसस्य रजकः सोऽथ प्रसादारूढविस्मयः ।
बहून्याक्षेपवाक्यानि प्राहोच्चै रामकेशवौ ॥१५॥
ततस्तलप्रहारेण कृष्णस्तस्य दुरात्मनः ।
पातयामास कोपेन रजकस्य शिरो भुवि ॥१६॥
हत्वादाय च वस्त्राणि पीतनीलाम्बरौ ततः ।
कृष्णरामौ मुदा युक्तौ मालाकारगृहं गतौ ॥१७॥
विकाशिनेत्रयुगलौ मालाकारोऽतिविस्मितः ।
एतौ कस्य कुतो वैतो मैत्रेयाचिन्तयत् तदा ॥१८॥
पीतनीलाम्बरधरौ तौ दृष्ट्वातिमनोहरौ ।
स तर्कयामास तदा भुवं देवावुपागतौ ॥१९॥
विकाशिमुखपद्माभ्यां ताभ्यां पुष्पाणि याचितः ।
भुवं विष्टभ्य हस्ताभ्यां पस्पर्श शिरसा महीम् ॥२०॥
प्रसादपरमौ नाथौ मम गेहमुपागतौ ।
धन्योऽहमर्च्चयिष्यामीत्याह तौ माल्यजीवकः ॥२१॥
ततः प्रहृष्टवदनस्तयोः पुष्पाणि कामतः ।
चारूण्येतान्यथैतानि प्रददौ स विलोभयन् ॥२२॥
पुनः पुनः प्रणम्यासौ मालाकारौ नरोत्तमौ ।
ददौ पुष्पाणि चारूणि गन्धवन्त्यमलानि च ॥२३॥
मालाकाराय कृष्णोऽपि प्रसन्नः प्रददौ वरान् ।
श्रीस्त्वां मत्संश्रया भद्र ! न कदाचित् प्रहास्यति ॥२४॥
बलहानिर्न ते सौम्य ! धनहानिस्तथैव च ।
यावद्दिनानि तावच्च न नशिष्यति सन्ततिः ॥२५॥
भुक्त्वा च विपुलान् भोगांस्तमन्ते मत्प्रसादजम् ।
ममानुस्मरणां प्राप्य दिव्यं लोकमवाप्स्यसि ॥२६॥
धर्म्मे मनश्च ते भद्र ! सर्वकालं भविष्यति ।
युष्मत्सन्ततिजातानां दीर्घमायुर्भविष्यति ॥२७॥

नोपसर्गादिकं दोषं युष्मत्सन्ततिसम्भवः ।
सम्प्राप्स्यति महाभाग ! यावत् सूर्यो धरिष्यति ॥२८॥

पराशर उवाच
इतुक्त्वा तद्गृहात् कृष्णो बलदेवसहायवान् ।
निर्जगाम मुनिश्रेष्ठ ! मालाकारेण पूजितः ॥२९॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकाविंशोऽध्यायः ॥१९॥



आदितः श्लोकानां समष्टयङ्काः-४,२३४+२९=४,२६३





## ॥ अथ विंशोऽध्यायः ॥
## (श्रीकृष्णस्य कुब्जानुग्रहः धनुःशालाप्रवेशः, कंसवधश्च)

### पराशर उवाच

राजमार्गे ततः कृष्णाः सानुलेपनभाजनाम् ।
ददर्श कुब्जामायान्तीं नवयौवनगोचराम् ॥१॥
तामाह ललितं कृष्णः कस्येदमनुलेपनम् ।
भवत्या नीयते सत्यं वदेन्दीवरलोचने ॥२॥
सकामेनेव सा प्रोक्ता सानुरागा हरिं प्रति ।
प्राह सा ललितं कुब्जा तद्दर्शनबलात्कृता ॥३॥
कान्त ! कस्मान्न जानासि कंसेमाभिनियोजिताम् ।
नैकवक्रेति विख्यातामनुलेपनकर्म्मणि ॥४॥
नान्यपिष्टं हि कंसस्य ह्यनुलेपनम् ।
भवाम्यहमतीवास्य प्रसादधनभाजनम् ॥५॥

### श्रीकृष्ण उवाच

सुगन्धमेतद् राजार्हं रुचिरं रुचिरानने ! ।
आवयोर्गात्रसदृशं दीयतामनुलेपनम् ॥६॥

### पराशर उवाच

श्रुत्वैतदाह सा कुब्जा गृह्यतामिति सादरम् ।
अनुलेपञ्च प्रददौ गात्रयोग्यमथोभयोः ॥७॥
भक्तिच्छेदानुलिप्ताङ्गौ ततस्तौ पुरुषर्षभौ ।
सेन्द्रचापौ विराजेतां सितकृष्णाविवाम्बुदौ ॥८॥
ततस्तां चिबुके शौरिरुल्लापनविधानवित् ।
उत्पाट्य तोलयामास द्व्यङ्गुलेनाग्रपाणिना ॥९॥
चकर्ष पद्भ्याञ्च तदा ऋजुत्वं केशवोऽनयत् ।
ततः सा ऋजुतां प्राप्ता योषितामभवद् वरा ॥१०॥
विलासललितं प्राह प्रमगर्भभरालसम् ।

वस्त्रे प्रगृह्य गोविन्दं व्रज गेहं ममेति वै ॥११॥
आयास्ये भवतीगेहमिति तां प्रहसन् हरिः ।
विससर्ज जहासोच्चै रामस्यालोक्य चाननम् ॥१२॥
भक्तिच्छेदानुलिप्ताङ्गौ नीलपीताम्बरौ च तौ ।
धनुःशालां ततो यातौ चित्रमाल्योपशोभितौ ॥१३॥
आयोगञ्च धनूरत्नं ताभ्यां पृष्टैश्च रक्षिभिः ।
आख्याते सहसा कृष्णो गृहीत्वापूरयद्धनुः ॥१४॥
ततः पूरयता तेन भज्यमानं बलाद्धनुः ।
चकार सुमहाशब्दं मथुरा येन पूरिता ॥१५॥
अनुयुक्तौ ततस्तौ तु भग्ने धनुषि रक्षिभिः ।
रक्षिसैन्यं निहत्योभौ निष्क्रान्तौ कार्मुकालयात् ॥१६॥
अक्रूरागमवृत्तान्तमुपलभ्य तथा धनुः ।
भग्नं श्रुत्वाथ कंसोऽपि प्राह चाणूरमुष्टिकौ ॥१७॥

कंस उवाच

गोपालदारकौ प्राप्तौ भवद्भ्यां तौ ममाग्रतः ।
मल्लयुद्धेन हन्तव्यौ मम प्राणहरौ हि तौ ॥१८॥
नियुद्धे तद्विनाशेन भवद्भ्यां तोषितो ह्यहम् ।
दास्याम्यभिमतान् कामान् नान्यथैतन्महाबलौ ॥१९॥
न्यायतोऽन्यायतो वापि भवद्भ्यां तौ ममाहितौ ।
हन्तव्यौ तद्वधाद्राज्यं सामान्यं नो भविष्यति ॥२०॥
इत्याज्ञाप्य स तौ मल्लौ तत आहूय हस्तिपम् ।
प्रोवाचोच्चैस्त्वया मेऽद्य समाजद्वारि कुञ्जरः ॥२१॥
स्थाप्यः कुवलयापीडस्तेन तौ गोपदारकौ ।
घातनीयौ नियुद्धाय रङ्गद्वामुपागतौ ॥२२॥
तमथाज्ञाप्य दृष्ट्वा च मञ्चान् सर्वानुपाकृतान् ।
आसन्नमरणः कंसः सूर्योदयमुदैक्षत ॥२३॥
ततः समस्तमञ्चेषु नागरः स तदा जनः ।
राजमञ्चेषु चारूढाः सहामात्यैर्म्महीभृतः ॥२४॥
मल्लप्राश्निकवर्गश्च रङ्गमध्यसमीपतः ।
कृतः कंसेन कंसोऽपि तुङ्गमञ्चे व्यवस्थितः ॥२५॥

अन्तःपुराणां मञ्चाश्च तथान्ये परिकल्पिताः ।
अन्ये च वारमुख्यानामन्ये नागरयोषिताम् ॥२६॥
नन्दगोपादयो गोपा मञ्चेष्वन्येष्ववस्थिताः ।
अक्रूरवसुदेवौ च मञ्चप्रान्ते व्यवस्थितौ ॥२७॥
नागरीयोषितां मध्ये देवकी पुत्रगृद्धिनी ।
अन्तकालेऽपि पुत्रस्य द्रक्ष्यामि रुचिरं मुखम् ॥२८॥
वाद्यमानेषु तूर्येषु चानूरे चापि वल्गति ।
हाहाकारपरे लोके ह्यास्फोटयति मुष्टिके ॥२९॥
हत्वा कुकलयापीडं हस्त्यारोहप्रणोदितम् ।
मदासृगनुलिप्ताङ्गौ गजदन्तवरायुधौ ॥३०॥
मृगमध्ये यथा सिंहौ गर्वलीलाविलोकितौ ।
प्रविष्टौ सुमहारङ्गं बलभद्रजनार्द्दनौ ॥३१॥
हाहाकारौ महान् जज्ञे सर्वमञ्चेष्वनन्तरम् ।
कृष्णोऽयं बलभद्रोऽयमिति लोकस्य विस्मयः ॥३२॥
सोऽयं येन हता घोरा पूतनां सा निशाचरी ।
क्षिप्तञ्च शकटं येन भग्नौ च यमलार्ज्जुनौ ॥३३॥
सोऽयं यः कालियं नागं ननर्त्तारुह्य बालकः ।
धृतो गोवर्द्धनो येन सप्तरात्रं महागिरिः ॥३४॥
अरिष्टो धेनुकः केशी लीलयैव महात्मना ।
निहता येन दुर्वृत्ता दृश्यतां सोऽयमच्युतः ॥३५॥
अयञ्चास्य महाबाहुर्बलभद्रोऽग्रजोऽग्रतः ।
प्रयाति लीलया योषिन्मनोनयननन्दनः ॥३६॥
अयं स कथ्यते प्राज्ञैः पुराणार्थावलोकिभिः ।
गोपालो यादवं वंशं मग्नमभ्युद्धरिष्यति ॥३७॥
अयं स सर्वभूतस्य विष्णोरखिलजन्मनः ।
अवतीर्णो महीमंशो नूनं भारहरो भुवः ॥३८॥
इत्येवं वर्णिते पौरे रामे कृष्णे च तत्क्षणात् ।
उरस्तताप देवक्याः स्नेहस्नुतपयोधरम् ॥३९॥
महोत्सवमिवासाद्य पुत्राननविलोकनम् ।
युवेव वसुदेवोऽभूद् विहायाभ्यागतां जराम् ॥४०॥
विस्तारिताक्षियुगलो राजान्तः पुरयोषिताम् ।
नागरस्त्रीसमूहश्च द्रष्टुं न विरराम तम् ॥४१॥

सख्यः पश्यत कृष्णस्य मुखमत्यरुणेक्षणम् ।
गजयुद्धकृतायास-स्वेदाम्बुकणिकाचितम् ॥४२॥
विकाशिशरदम्भोजमवश्यायजलोक्षितम् ।
परिभूय स्थितं जन्म सफलं क्रियतां दृशोः ॥४३॥
श्रीवत्साङ्कं महद्धाम बालस्यैतद् विलोक्यताम् ।
विपक्षक्षपणां वक्षो भुजयुग्मञ्च भामिनि ॥४४॥
किन्न पश्यसि दुग्धेन्दुमृणालधवलाननम् ।
बलभद्रमिमं नीलंपरिधानमुपागतम् ॥४५॥
वल्गता मुष्टिकैनैतच्चाणूरेण तथा सखि ।
क्रियते बलभद्रस्य हास्यमीषद्विलोक्यताम् ॥४६॥
सख्यः ! पश्यत चाणूरो नियुद्धार्थमयं हरिम् ।
समुपैति न सन्त्यत्र किं वृद्धा युक्तकारिणः ॥४७॥
क्व यौवनोन्मुखीभूतसुकुमारतनुर्हरिः ।
क्व वज्रकठिनाभोगिशरीरोऽयं महासुरः ॥४८॥
इमौ सुललितौ रङ्गे वर्त्तेते नवयौवनौ ।
दैतेयमल्लाश्चाणूरप्रमुखास्त्वतिदारुणाः ॥४९॥
नियुद्धप्रश्निकानान्तु महानेष व्यतिक्रमः ।
यद् बालबलिनोर्युद्धं मध्यस्थैः समुपेक्ष्यते ॥५०॥

पराशर उवाच

इत्थं पुरस्त्रीलोकस्य वदतश्चालयन् भुवम् ।
ववल्ग बद्धकक्षोऽन्तर्जनस्य भगवान् हरिः ॥५१॥
बलभद्रोऽपि चास्फोट्य ववल्ग ललितं यदा ।
पदे पदे तदा भूमिर्यन्न शीर्णा तदद्भुतम् ॥५२॥
चाणूरेण तदा कृष्णो युयुधेऽमितविक्रमः ।
नियुद्धकुशलो दैत्यो बलभद्रेण मुष्टिकः ॥५३॥
सन्निपातावधूतैस्तु चाणूरेण समं हरिः ।
क्षेपणैर्मुष्टिभिश्चैव कीलवज्रनिपातनैः ॥५४॥
जानुभिश्चाश्मनिर्घातैस्तथा बाहुविघट्टितैः ।
पादोद्धूतैः प्रसृष्टैश्च तयोर्युद्धमभून्महत् ॥५५॥
अशस्त्रमतिघोरं तत् तयोर्युद्धं सुदारुणम् ।

बलप्राणविनिष्पाद्यं समाजोत्सवसन्निधौ ॥५६॥
यावद् यावच्च चाणूरो युयुधे हरिणा सह ।
प्राणाहानिमवापाग्र्यां तावत्तावल्लवाल्लवम् ॥५७॥
कृष्णोऽपि युयुधे तेन लीलयैव जगन्मयः ।
खेदाच्चालयता कोपान्निजशेखरकेशरम् ॥५८॥
बलक्षयं विवृद्धिञ्च दृष्ट्वा चाणूरकृष्णयोः ।
वारयामास तूर्याषु कंसः कोपपरायणः ॥५९॥
मृदङ्गातिषु तूर्येषु प्रतिषिद्धेषु तत्क्षणात् ।
खे सङ्गतान्यवाद्यन्त देवतूर्याण्यनेकशः ॥
जय गोविन्द ! चाणुर जहि केशव ! दानवम् ।
इत्यन्तर्द्धानगा देवास्तदोचुरतिहर्षिताः ॥६०॥
चाणूरेण चिरं कालं क्रीडित्वा मधुसूदनः ।
उत्पाट्य भ्रामयामास तद्वधाय कृतोद्यमः ॥६१॥
भ्रामयित्वा शतगुणं दैत्यमल्लममित्रजित् ।
भूस्वास्फोटयामास गगने गतजीवितम् ॥६२॥
भूमावास्फोटितस्तेन चाणूरः शतधाव्रजत् ।
रक्तस्त्रावमहापङ्कां चकार स तदा भुवम् ॥६३॥
बलदेवोऽपि तत्कालं मुष्टिकेन महाबलः ।
युयुधे दैत्यमल्लेन चाणूरेण यथा हरिः ॥६४॥
सोऽप्येनं मुष्टिना मूर्ध्नि वक्षस्याहत्य जानुना ।
पातयित्वा धरापृष्ठे निष्पिपेष गतायुषम् ॥६५॥
कृष्णस्तोमलकं भूयो मल्लराजं महाबलम् ।
वाममुष्टिप्रहारेण पातयामास भूतले ॥६६॥
चाणूरे निहते मल्ले मुष्टिके विनिपातिते ।
नीते क्षयं तामलके सर्वे मल्लाः प्रदुद्रुवुः ॥६७॥
ववल्गतुस्तदा रङ्गे कृष्णसङ्कर्षणावुभौ ।
समानवयसो गोपान् बलादाकृष्य हर्षितौ ॥६८॥
कंसोऽपि कोपरक्ताक्षः प्राहोच्चैर्व्यापृतान् नरान् ।
गोपावेतौ समाजौघान्निष्काश्येतां बलादितः ॥६९॥
नन्दोऽपि गृह्यतां पापो निगडैरायसैरिह ।
अवृद्धार्हेण दण्डेन वसुदेवोऽपि वध्यताम् ॥७०॥
वल्गन्ति गोपाः कृष्णेन ये चेमे सहिताः पुरः ।

गावो ह्रियन्तामेतेषां यच्चास्ति वसु किञ्चन ॥७१॥
एवमन्ज्ञापयानञ्च प्रहस्य मधुसूदनः ।
उत्पत्यारुह्य तं मञ्चं कंसं जग्राह वेगतः ॥७२॥
केशेष्वाकृष्य विगलत्किरीटमवनीतले ।
कंसं स पातयामास तस्योपरि पपात च ॥७३॥
निःशेष जगदाधार गुरुणा पततोपरि ।
कृष्णेन त्याजितः प्राणानुग्रसेनात्मजो नृपः ॥७४॥
मृतस्य केशेषु तदागृहीत्वा मधुसूदनः ।
चकर्ष देहं कंसस्य रङ्गमध्ये महाबलः ॥७५॥
गौरवेणातिमहता परिखा तेन कृष्यता ।
कृता कंसस्य देहेन वेगेनेव महाम्भसः ॥७६॥
कंसे गृहीते कृष्णेन तद्भ्राताभ्यागतो रुषा ।
सुमाली बलभद्रेण लीलयैव निपातितः ॥७७॥
ततो हाहाकृतं सर्वमासीत् तद्रङ्गमण्डलम् ।
अवज्ञया हतं दृष्ट्वा कृष्णेन मथुरेश्वरम् ॥७८॥
कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः ।
देवक्याश्च महाबाहुर्बलभद्रसहायवान् ॥७९॥
उत्थाप्य वसुदेवस्तं देवकी च जनार्दनम् ।
स्मृतजन्मोक्तवचनौ तावेव प्रणतौ स्थितौ ॥८०॥

वसुदेव उवाच

प्रसीद सीदतां नाथ ! देवानां वरदः प्रभो ! ।
तथावयोः प्रसादेन कृतोद्धारश्च केशव ॥८१॥
आराधितो यद्भगवानवतीर्णो गृहे मम ।
दुर्वृत्तनिधानार्थाय तेन नः पावितं कुलम् ॥८२॥
त्वमन्तः सर्वभूतानां सर्वभूतेष्ववस्थितः ।
प्रवर्त्तेते समस्तात्मन् ! त्वत्तो भूतभविष्यति ॥८३॥
यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्यूत ।
त्वमेव यज्ञो यष्टा च यज्ञानां परमेश्वरः ॥८४॥
सापह्नवं मम मनो यदेतत् त्वयि जायते ।
देवक्याश्चात्मजप्रीत्या तदत्यन्तविडम्बना ॥८५॥

क्व कर्त्ता सर्वभूतानामनादिनिधनो भवान् ।
क्व मे मनुष्यकस्येषा जिह्वा पुत्रेति वक्ष्यति ॥८६॥
जगदेतज्जगन्नाथ ! सम्भूतमखिलं यतः ।
कया युक्त्या विना मायां सोऽस्मत्तः सम्भविष्यति ॥८७॥
यस्मिन् प्रतिष्ठितं सर्वं जगत् स्थावरजङ्गमम् ।
म कोष्ठोत्सङ्गशयनो मानुषाज्जायते कथम् ॥८८॥
स त्व प्रसीद परमेश्वर ! पाहि विश्वमंशावतारकरणैर्न ममासि पुत्रः ।
आब्रह्मपादपमयं जगदेतदीश ! त्वं नो विमोहयसि किं परमेश्वरात्मन् ॥८९॥
मायाविमाहितदृशा तनया ममेति कंसाद्भयं कृतमपास्तभयातितीव्रम् ।
नीतोऽसि गोकुलमितोऽतिभयाकुलस्य वृद्धिं गतोऽसि मम नास्ति ममत्वमीश ॥९०॥
कर्म्माणि रुद्रमरुदश्विशतक्रतूनां साध्यानि यानि न भवन्ति निरीक्षितानि ।
त्वं विष्णुरीश ! जगतामुपकारहेतोः प्राप्तोऽसि नः परिगतो विगतो हि मोहः ॥९१॥

इति श्रीविष्णुपुराणे पञ्चमांशे विंशोऽध्यायः ॥२०॥



आदितः श्लोकानां समष्ट्यङ्काः-४,२६३+९१=४,३५४





## ॥ अथैकविंशोऽध्यायः ॥
## (उग्रसेनस्य राज्यभिषेकः, भगवतो वासुदेवस्य विद्याध्ययनञ्च)

### पराशर उवाच

तौ समुत्पन्नविज्ञानौ भगवत्कर्म्मदर्शनात् ।
देवकीवसुदेवौ तु दृष्ट्वा मायां पुनर्हरिः ॥
मोहाय यदुचक्रस्य विततान स वैष्णवीम् ॥१॥
उवाच चाम्ब ! भोस्तात ! चिरादुत्कण्ठितेन मे ।
भवन्तौ कंसभीतेन दृष्टौ सङ्कर्षणेन च ॥२॥
कुर्वतां याति यः कालो मातापित्रोरपूजनम् ।
तत्खण्डमायुषो व्यर्थमसाधूनां हि जायते ॥३॥
गुरुदेवद्विजातीनां मातापित्रोश्च पूजनम् ।
कुर्वतां सफलं जन्म देहिनां तात ! जायते ॥४॥
तत् क्षन्तव्यमिदं सर्वमतिक्रमकृतं पितः ।
कंसप्रतापवीर्याभ्यामार्त्तयोः परवश्ययोः ॥५॥

### पराशर उवाच

इत्युक्त्वाथ प्रणम्योभौ यदुवृद्धाननुक्रमात् ।
यथावदभिपूज्याथ चक्रतुः पौरमाननम् ॥६॥
कंसपत्न्यस्ततः कंसं परिवार्य हतं भुवि ।
विलेपुर्मातरश्चास्य दुःखशोकपरिप्लुताः ॥७॥
बहुप्रकारमत्यर्थं पश्चात्तापातुरो हरिः ।
ताः समाश्वासयामास स्वयमस्त्राविलेक्षणः ॥८॥
उग्रसेनं ततो बन्धान्मुमोच मधुसूदनः ।
अभ्यषिञ्चत् तथैवैनं निजराज्ये हतात्मजम् ॥९॥
राज्याभिषिक्तः कृष्णेन यदुसिंहः सुतस्य सः ।
चकार प्रेतकार्याणि ये चान्ये तत्र घातिताः ॥१०॥
कृतौर्द्ध्वदैहिकं चैनं सिहासनगतं हरिः ।
उवाचाज्ञापय विभो ! यत् कार्यमविशङ्कितः ॥११॥
ययातिशापाद् वंशोऽयमराज्यार्होऽपि साम्प्रतम् ।

मयि भृत्ये स्थिते देवानाज्ञापयतु किं नृपैः ॥१२॥

पराशर उवाच

इत्युक्त्वा सोऽस्मरद् वायुमाजगाम स तत्क्षणात् ।
उवाच चैनं भगवान् केशवः कार्यमानुषः ॥१३॥
गच्छेन्द्रं ब्रूहि वायो ! त्वमलं गर्वेण वासव ।
दीयतामुग्रसेनाय सुधर्मा भवता सभा ॥१४॥
कृष्णो ब्रवीति राजार्हमेतद्रत्नमनुत्तमम् ।
सुधर्माख्या सभा युक्तमस्यां यदुभिरासितुम् ॥१५॥

पराशर उवाच

इत्युक्तः पवनो गत्वा सर्वमाह शचीपतिम् ।
ददौ सोऽपि सुधर्माख्यां सभां वायोः पुरन्दरः ॥१६॥
वायुना चाहृतां दिव्यां सभां ते यदुपुङ्गवाः ।
बुभुजुः सर्वरत्नाढ्यां गोविन्दभुजसंश्रयात् ॥१७॥
विदिताखिलविज्ञानौ सर्वज्ञानमयावपि ।
शिष्याचार्यक्रमं वीरौ ख्यापयन्तौ यदूत्तमौ ॥१८॥
ततः सान्दीपनिं काश्यमवन्तीपुरवासिनम् ।
अस्त्रार्थं जग्मतुर्वीरौ बलदेवजनार्दनौ ॥१९॥
तस्य शिष्यत्त्वमभ्येत्य गुरुवृत्तपरौ हि तौ ।
दर्शयाञ्चक्रतुर्वीरावाचारमखिले जने ॥२०॥
सरहस्यं धनुर्वेदं ससङ्ग्रहमधीयताम् ।
अहोरात्रैश्चतुः षष्ट्यातद्भुतमभूद् द्विजः ॥२१॥
सान्दीपनिरसम्भाव्यं तयोः कर्मातिमानुषम् ।
विचिन्त्य तौ तदा मेने प्राप्तौ चन्द्रदिवाकरौ ॥२२॥
अस्त्रग्राममशेषञ्च प्रोक्तमात्रमवाप्य तौ ।
ऊचतुर्व्रियतां या ते दातव्या गुरुदक्षिणा ॥२३॥
सोऽप्यतीन्द्रियमालोक्य तयोः कर्म महामतिः ।
अयाचत मृतं पुत्रं प्रभासे लवणार्णवे ॥२४॥
गृहीतास्त्रौ ततस्तौ तु सार्घ्यपात्रो महोदधिः ।

उवाच न मया पुत्रो हतः सान्दीपनेरिति ॥२५॥
दैत्यः पञ्चजनो नाम शङ्खरूपः स बालकम् ।
जग्राह सोऽस्ति सलिले ममैवासुरसूदन ॥२६॥
इत्युक्तोऽन्तर्जलं गत्वा हत्वा पञ्चजनं खलम् ।
कृष्णो जग्राह तस्यास्थिप्रभवं शङ्खमुत्तमम् ॥२७॥
यस्य नादेन दैत्यानां बलहानिरजायत ।
देवानां ववृधे तेजो यात्यधर्मश्च संक्षयम् ॥२८॥
तं पाञ्चजन्यमापूर्य गत्वा यमपुरीं हरिः ।
बलदेवश्च बलवान् जित्वा वैवस्वतं यमम् ॥२९॥
तं बालं यातनासंस्थं यथापूर्वशरीरिणम् ।
पित्रे प्रदत्तवान् कृष्णो बलश्च बलिनां वरः ॥३०॥
मथुराञ्च पुनः प्राप्तावुग्रसेनेन पालिताम् ।
प्रहृष्टपुरुषस्त्रीकामुभौ रामजनार्दनौ ॥३१॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकविंशोऽध्यायः ॥२१॥



आदितः श्लोकानां समष्ट्यङ्काः-४,३५४+३१=४,३८५





## ॥ अथ द्वाविंशोऽध्यायः ॥
## (जरासन्धस्य पराजयः)

जरासन्धसुते कंस उपयेमे महाबलः ।
अस्ति प्राप्तिञ्च मैत्रेय ! तयोर्भर्त्तृहनं हरिम् ॥१॥
महाबलपरीवारो मगधाधिपतिर्बली ।
हन्तुमभ्याययौ कोपाज्जरासन्धः सयादवम् ॥२॥
उपेत्य मथुरां सोऽथ रुरोध मगधेश्वरः ।
अक्षौहिणीभिः सैन्यस्य त्रयोविंशतिभिर्वृतः ॥३॥
निष्क्रम्याल्पपरीवारावुभौ रामजनार्द्दनौ ।
युयुधाते समं तस्य बलिनौ बलिसैनिकैः ॥४॥
ततो बलश्च कृष्णश्च चक्राते मतिमुत्तमाम् ।
आयुधानां पुराणानामादाने मुनिसत्तम ॥५॥
अनन्तरं हरेः शार्ङ्गं तूणौ चाक्षयसायकौ ।
आकाशादागतौ वीर ! तथा कौमोदकी गदा ॥६॥
हलञ्च बलभद्रस्य गगनादागतं कवे ।
मनसोऽभिमतं विप्र ! सौनन्दं मुसलं तथा ॥७॥
ततो युद्धे पराजित्य ससैन्यं मगधाधिपम् ।
पुरीं विविशतुर्वीरावुभौ रामजनार्द्दनौ ॥८॥
जिते तस्मिन् सुदुर्वृत्ते जरासन्धे महामुने ।
जीवमाने गते कृष्णस्तं नामन्यत निर्ज्जितम् ॥९॥
पुनरप्याजगामाथ जरासन्धो बलान्वितः ।
जितश्च रामकृष्णाभ्यामपक्रान्तो द्विजोत्तम ॥१०॥
दश चाष्टौ च सङ्ग्रामानेवमत्यन्तदुर्मदः ।
यदुभिर्मागधो राजा चक्रे कृष्णापुरोगमैः ॥११॥
सर्वेष्वेतेषु युद्धेषु यादवैः स पराजितः ।
अपक्रान्तो जरासन्धः स्वल्पसैन्यैर्बलाधिकः ॥१२॥
तद् बलं यादवानां तैरर्ज्जितं यदनेकशः ।
तत्तु सन्निधिमाहात्म्यं विष्णोरंशस्य चक्रिणः ॥१३॥
मनुष्यधर्मशीलस्य लीला सा जगतः पतेः ।
अस्त्राणयनेकरूपाणि यदरातिषु मुञ्चति ॥१४॥
मनसैव जगत्सृष्टिं संहारञ्च करोति यः ।

तस्यारिपक्षक्षपणे कोऽयमुद्यमविस्तरः ॥१५॥
तथापि यो मनुष्याणां धर्मस्तमनुवर्त्तते ।
कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ ॥१६॥
साम चोपप्रदानञ्च तथा भेदं प्रदर्शयन् ।
करोति दण्डपातञ्च क्वचिदेव पलायनम् ॥१७॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्त्ततः ।
लीला जगत्पतेस्तस्य च्छन्दतः सम्प्रवर्त्तते ॥१८॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वाविंशोऽध्यायः ॥२२॥

आदितः श्लोकानां समष्टयङ्काः-४,३८५+१८=४,४०३



## ॥ अथ त्रयोविंशोऽध्यायः ॥
## (द्वारकाया दुर्गनिर्माणम्, कायवनदहनम्, मुचुकन्दस्य भगवत्स्तुतिश्च)

### पराशर उवाच

गार्ग्य गोष्ठे द्विजं श्यालः षण्ढ इत्युक्तवान द्विज ।
यदूनां सन्निधौ सर्वे जहसुः सर्वयादवाः ॥१॥
ततः कोपसमाविष्टो दक्षिणाब्धिमुपेत्य सः ।
सुतमिच्छस्तपस्तेपे यदुचक्रभयावहम् ॥२॥
आराधयन् महादेवं सोऽयश्चूर्णमभक्षयत् ।
ददौ वरञ्च तुष्टोऽस्मै वासरे द्वादशे हरः ॥३॥
सभाजयामास च तं यवनेशो ह्यनात्मजः ।
तद्योषित्सङ्गमाच्चास्य पुत्रोऽभूदलिसन्निभः ॥४॥
तं कालयवनं नाम राज्ये स्वे यवनेश्वरः ।
अभिषिच्य वनं यातो वज्राग्रकठिनोरसम् ॥५॥
स तु वीर्यमदोन्मत्तः पृथिव्यां बलिनो नृपान् ।
पप्रच्छ नारदस्तस्मै कथयामास यादवान् ॥६॥
म्लेच्छकोटिसहस्राणां सहस्रैर्बहुभिर्वृतः ।
गजाश्वरथपत्त्योघैश्चकार परमोद्यमम् ॥७॥
प्रययौ चाव्यवच्छिन्नं छिन्नयानो दिने दिने ।
यादवान् प्रति सामर्षो मैत्रेय ! मथुरापुरीम् ॥८॥
कृष्णोऽपि चिन्तयामास क्षयितं यादवं बलम् ।
यवनेन रणे गम्यं मागधस्य भविष्यति ॥९॥
मागधस्य बलं क्षीणं स कालयवनो बली ।
हन्ता तदिदमायातं यदूनां व्यसनं द्विधा ॥१०॥
तस्माद् दुर्गं करिष्यामि यदूनामतदुर्जयम् ।
स्त्रियोऽपि यत्र युध्ययुः किं पुनर्वृष्णिपुङ्गवाः ॥११॥
मयि मत्ते प्रमत्ते वा सुप्ते प्रवसिते तथा ।
यादवाभिभवं दुष्टा मा कुर्वन् परयोधकाः ॥१२॥
इति सञ्चिन्त्य गोविन्दो योजनानि महोदधिम् ।
ययाचे द्वादश पुरीं द्वारकां तत्र निर्ममे ॥१३॥
महोद्यानां महावप्रां तडागशतशोभिताम् ।

प्राकारगृहसम्बाधमिन्द्रस्येवामरावतीम्॥१४॥
मथुरावासिनो लोकांस्तत्रानीय जनार्द्दनः ।
आसन्ने कालयवने मथुराञ्च स्वयं ययौ ॥१५॥
बहिरावासिते सैन्ये मथुराया निरायुधः।
निर्ज्जगाम स गोविन्दो ददृशे यवनेश्वरम्॥१६॥
स ज्ञात्वा वासुदेवं तं बाहुप्रहरणो नृपः ।
अनुयातो महायोगिचेतोभिः प्राप्यते न यः ॥१७॥
तेनानुयातः कृष्णोऽपि प्रविवेश महागुहाम् ।
यत्र शेते महावीर्यो मुचुकुन्दो नरेश्वरः ॥१८॥
सोऽपि प्रविश्य यवनो दृष्ट्वा शय्यागतं नृपम् ।
पादेन ताडयामास मत्वा कृष्णां सुदुर्मतिः ॥१९॥
दृष्टमात्रस्तु तेनासौ जज्वाल यवनोऽग्निना ।
तत्क्रोधजेन मैत्रेय ! भस्मीभूतश्च तत्क्षणात्॥२०॥
स हि देवासुरे युद्धे गतो जित्वा महासुरान् ।
निद्रार्त्तः सुमहाकालं निद्रां वव्रे वरं सुरान्॥२१॥
प्रोक्तश्च देवैः संसुप्तं यस्त्वामुत्थापयिष्यति ।
देहजेनाग्निना सद्यः स तु भस्मीभविष्यति ॥२२॥
एवं दग्ध्वा स तं पापं दृष्ट्वा च मधुसूदनम् ।
कस्त्वमित्याह सोऽप्याह जातोऽहं शशिनःकुले ॥
वसुदेवस्य तनयो यदुवंशसमुद्भवः ॥२३॥
मुचुकुन्दोऽपि तत्रासौ वृद्धगार्ग्यवचोऽस्मरत् ।
संस्मृत्य प्रणिपत्यैनं सर्वभूतेश्वरं हरिम्॥२४॥
प्राह ज्ञातो भवान् विष्णोरंशस्त्वं परमेश्वरः ।
पुरा गार्ग्येण कथितमष्टाविंशतिमे युगे ॥
द्वापरान्ते हरेर्जन्म यदोर्वंशे भविष्यति ॥२५॥
स त्वं प्राप्तो न सन्देहो मर्त्त्यानामुपकारकृत् ।
तथापि सुमहत् तेजो नालं सोढुमहं तव ॥२६॥
तथाहि सजलाम्भोदनादधीरतरं तव ।
वाक्यं नमति चैवोर्वी यस्य पादप्रमीडिता ॥२७॥
देवासुरे महायुद्धे दैत्यसैन्ये महाभटाः ।
न शेकुर्मम तत्तेजस्त्वत्तेजो न सहाम्यहम्॥२८॥
संसारपतितस्यैको जन्तोस्त्वं शरणं परम् ।

स प्रसीद प्रपन्नार्त्तिहर्त्ता हर ममाशुभम् ॥२९॥
त्वं पयोनिधयः शैलाः सरितस्त्वं वनानि च ।
मेदिनी गगनं वायुरापोऽग्निस्त्वं तथा मनः ॥३०॥
बुद्धिरव्याकृतं प्राणाः प्राणेशस्त्वं तथा पुमान् ।
पुंसः परतरं यच्च व्याप्यजन्माविकारि यत् ॥३१॥
शब्दादिहीनमजरममेयं क्षयवर्जितम् ।
अवृद्धिनाशं तद्ब्रह्म त्वमाद्यन्तविवर्जितम् ॥३२॥
त्वत्तोऽमराः सपितरो यक्षगन्धर्वकिन्नराः ।
सिद्धाश्चाप्सरसस्त्वत्तो मनुष्याः पशवः खगाः ॥३३॥
सरीसृपा मृगाः सर्वे त्वत्तः सर्वे महीरुहाः ।
यज्व भूतं भविष्यञ्च किञ्चिदत्र चराचरम् ॥३४॥
अमूर्त्तं मूर्त्तमथवा स्थूलं सूक्ष्मतरं स्थितम् ।
तत्सर्वं त्वं जगत्कर्त्ता नास्ति किञ्चित् त्वया विना ॥३५॥
मया संसारचक्रेऽस्मिन् भ्रमता भगवन् सदा ।
तापत्रयाभिभूतेन न प्राप्ता निर्वृतिः क्वचित् ॥३६॥
दुःखान्येव सुखानीति मृगतृष्णा जलाशया ।
तथा नाथ ! गृहीतानि तानि तापाय चाभवन् ॥३७॥
राष्ट्रमुर्वी बलं कोशो मित्रपक्षस्तथात्मजाः ।
भार्या भृत्यजना ये च शब्दाद्या विषयाः प्रभो ॥३८॥
सुखबुद्ध्या मया सर्वं गृहीतमिदमव्यय ।
परिणामे तदेवेश तापात्मकमभून्मम ॥३९॥
देवलोकमिमं प्राप्तो नाथ ! देवगणोऽप्ययम् ।
मत्तः साहायकामोऽभूच्छाश्वती कुत्र निर्वृतिः ॥४०॥
त्वामनाराध्य जगतां सर्वेषां प्रभवास्पदम् ।
शाखता प्राप्यते केन परमेश्वर ! निर्वृतिः ॥४१॥
त्वन्मायामूढमनसो जन्ममृत्युजरादिकान् ।
अवाप्य तापान् पश्यन्ति प्रेतराजाननं नराः ॥४२॥
ततो निजक्रियासूतिनरकेष्वतिदारुणम् ।
प्राप्नुवन्ति नरा दुःखमस्वरूपविदस्तव ॥४३॥
अहमत्यन्तविषयी मोहितस्तव मायया ।
ममत्वगर्वगर्तान्तर्भ्रमामि परमेश्वर ॥४४॥
सोऽहं त्वां शरणमपारमीशमीड्यं सम्प्राप्तः परमपदं यतो न किञ्चित् ।

संसाराश्रमपरितापतप्तचेता निर्वाणे परिणधाम्नि साभिलाषः ॥४५॥

इति श्रीविष्णुपुराणे पञ्चमांशे त्रयोविंशोऽध्यायः ॥२३॥

आदितः श्लोकानां समष्ट्यङ्काः-४,४०३+४५=४,४४८



## ॥ अथ चतुर्विंशोऽध्यायः ॥
## (तपसे मुचुकुन्दस्य प्रस्थानम्, बलरामस्य व्रजयात्रा च)

### पराशर उवाच

इत्थं स्तुतस्तदा तेन मुचुकुन्देन धीमता ।
प्राहेशः सर्वभूतानामनादिर्भगवान् हरिः ॥१॥

### श्रीभगवानुवाच

यथाभिवाञ्छितान् दिव्यान् गच्छ लोकान् नरेश्वर ।
अव्याहतपरैश्वर्यो मत्प्रसादोपबृंहितः ॥२॥
भुक्त्वा भोगान् महादिव्यान् भविष्यसि महाकुले ।
जातिस्मरो मत्प्रसादात्ततो मोक्षमवाप्स्यसि ॥३॥

### पराशर उवाच

इत्युक्तः प्रणिपत्येशं जगतामच्युतं नृपः ।
गुहामुखाद् विनिष्क्रान्तो ददृशे सोऽल्पकान् नरान् ॥४॥
ततः कलियुगं ज्ञात्वा प्राप्तं तप्तुं नृपस्तपः ।
नरनारायणस्थानं प्रययौ गन्धमादनम् ॥५॥
कृष्णोऽपि घातयित्वारिमुपायेन हि तद्बलम् ।
जग्राह मथुरामेत्य हस्त्यश्वस्यन्दनाज्ज्वलम् ॥६॥
आनीय चोग्रसेनाय द्वारवत्यां न्यवेदयत् ।
पराभिभवनिः शङ्कं बभूव च यदोः कुलम् ॥७॥
बलदेवोऽपि मैत्रेय! प्रशान्ताखिलविग्रह ।
ज्ञातिसन्दर्शनोत्कण्ठः प्रययौ नन्दगोकुलम् ॥८॥
ततो गोपीश्च गोपांश्च यथापूर्वममित्रजित् ।
तथैवाभ्यवदत् प्रेम्णा बहुमानपुरःसरम् ॥९॥
कैश्चापि सम्परिष्वक्तः कांश्चित् स परिषस्वजे ।
हास्यञ्चक्रे समं कैश्चिद् गोपैर्गोपीजनैस्तथा ॥१०॥
प्रियाण्यनेकान्यवदन् गोपास्तत्र हलायुधम् ।

गोप्यश्च प्रे मकुपिताः प्रोचुः सेर्ष्यमथापराः ॥११॥
गोप्यः पप्रच्छुरपरा नागरीजनवल्लभः ।
कच्चिदास्ते सुखं कृष्णश्चलत्प्रेमलवात्मकः ॥१२॥
अस्मच्चेष्टामुपहसन् कच्चिन्न पुरयोषिताम् ।
सौभाग्यमानमधिकं करोति क्षणसौहृदः ॥१३॥
कच्चित् स्मरितं नः कृष्णो गीतानुगमनं कलम् ।
अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥१४॥
अथवा किं तदालापैरपरा क्रियतां कथा ।
तस्यास्माभिर्विना तेन विनास्माकं भविष्यति ॥१५॥
पिता माता तथा भ्राता भर्त्ता बन्धुजनश्च किम् ।
न त्यक्तस्तत्कृतेऽस्माभिरकृतध्वजो हि सः ॥१६॥
तथापि क्वचिदालापमिहागमनसंश्रयम् ।
करोति कृष्णो वक्तव्यं भवताकृष्ण नानृतम् ॥१७॥
दामोदरोऽसौ गोविन्दः पुरस्त्रीन्यस्तमानसः ।
दामोदरोऽसौ दुर्दर्शः प्रतिभाति नः ॥१८॥

## पराशर उवाच

आमन्त्रितं स कृष्णेति पुनर्दामोदरेति च ।
जहसुः सुस्वरं गोप्यो हरिणा हृतचेतसः ॥१९॥
सन्देशैः साममधुरैः प्रेमगर्भैरगर्वितैः ।
रामेणाश्वासिता गोप्यः कृष्णस्यातिमनोहरैः ॥२०॥
गोपैश्च पूर्ववद् रामः परिहासमनोरमाः ।
कथाश्चकार रेमे च सह तैर्व्रजभूमिषु ॥२१॥

इति श्रीविष्णुपुराणे पञ्चमांशे चतुर्विंशोऽध्यायः ॥२४॥



आदितः श्लोकानां समष्ट्यङ्काः-४,४४८+२१=४,४६९



## ॥ अथ पञ्चविंशोऽध्यायः ॥
## (बलभद्रस्य व्रजविहारः, यमुनाकर्षणञ्च)

### पराशर उवाच

वने विचरतस्तस्य सह गोपैर्महात्मनः ।
मानुषच्छद्मरूपस्य शेषस्य धरणीभृतः ॥१॥
निष्पादितोरुकार्यस्य कार्येणोर्वीविचारिणः ।
उपभोगाथमत्यर्थं वरुणः प्राह वारुणीम् ॥२॥
अभीष्टा सर्वदा यस्य मदिरे त्वं ! महौजसः ।
अनन्तस्योपभोगाय तस्य गच्छ मुदे शुभे ॥३॥
इत्युक्ता वारुणी तेन सन्निधानमथाकरोत् ।
वृन्दावनवनोत्पन्नकदम्बतरुकोटरे ॥४॥
वितरन् बलदेवोऽपि मदिरागन्धमुत्तमम् ।
आघ्राय मदिरातर्षमवापाथ पुरातनम् ॥५॥
ततः कदम्बात् सहसा मद्यधारां स लाङ्गली ।
पतन्तीं वीक्ष्य मैत्रेय ! प्रययौ परमां मुदम् ॥६॥
पपौ च गोपगोपीभिः समवेतो मुदान्वितः ।
प्रगीयमानो ललितं गीतवाद्यविशारदैः ॥७॥
समन्तोत्पन्नधर्माम्भः कणिकामौक्तिकोज्वलः ।
आगच्छ यमुने ! स्नातुमिच्छामीत्त्याह विह्वलः ॥८॥
तस्य वाचं नदी सा च मत्तोक्तामवमत्य वै ।
नाजगाम ततः क्रुद्धो हलं जग्राह लाङ्गली ॥९॥
(गृहीत्वा तां तटे तेन चकर्ष मदविह्वलः ।
पापे नायासि नायासि गम्यतामिच्छयात्मनः ॥)
सा कृष्टा तेन सहसा मार्गं सन्त्यज्य निम्नगा ।
यत्रास्ते बलभद्रोऽसौ प्लावयामास तद्वनम् ॥११॥
शरीरिणी तथोत्पत्य त्रासविह्वललोचना ।
प्रसीदेत्यब्रवीद् रामं मुञ्च मां मुषलायुध ॥१२॥
सोऽब्रवीदवजानासि मम शौर्यबले यदि ।
सोऽहं त्वां हलपातेन विनेष्यामि सहस्रधा ॥१३॥

## पराशर उवाच

इत्युक्तयातिसन्त्रासात् तया नद्या प्रसादितः ।
भूभागे प्लाविते तस्मिन् मुमोच यमुनां बलः ॥१४॥
ततः स्नातस्य वै कान्तिराजगाम महात्मनः ।
अवतंसोत्पलं चारु गृहीत्वैकञ्च कुण्डलम् ॥१५॥
वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम् ।
समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत ॥१६॥
कृतावतंसः स तदा चारुकुण्डलभूषितः ।
नीलाम्बरधरः स्रग्वी शुशुभे कान्तिसंयुतः ॥१७॥
इत्थं विभूषितो रेमे तत्र रामस्तथा व्रजे ।
मासद्वयेन यातश्च पुनः स द्वारकां पुरीम् ॥१८॥
रेवतीं नाम तनयां रैवतस्य महीपतेः ।
उपयेमे बलस्तस्यां जज्ञाते निशठोल्मुकौ ॥१९॥

इति श्रीविष्णुपुराणे पञ्चमांशे पञ्चविंशोऽध्यायः ॥२५॥



आदितः श्लोकानां समष्टयङ्काः-४,४६९+१९=४,४८८





## ॥ अथ षड्विंशोऽध्यायः ॥
## (रुक्मिणीहरणम्)

### पराशर उवाच

भीष्मकः कुण्डिने राजा विदर्भविषयेऽभवत् ।
रूक्मी तस्याभवत् पुत्रो रुक्मिणी च वराङ्गना ॥१॥
रुक्मिणीं चक्रमे कृष्णः सा च तं चारुहासिनी ।
न ददौ याचते चैनां रुक्मी द्वेषेण चक्रिणे ॥२॥
ददौ च शिशुपालाय जरासन्धप्रदेशितः ।
भीष्मको रुक्मिणा सार्द्ध रुक्मिणीमुरुविक्रमः ॥३॥
विवाहार्थं ततः सर्वे जरासन्धमुखा नृपाः ।
भीष्मकस्य पुरं जग्मुः शिशुपालप्रियैषिणः ॥४॥
कृष्णोऽपि बलभद्राद्यैर्यादवैर्बहुभिर्वृतः ।
प्रययौ कुण्डिनं द्रष्टुं विवाहञ्चैव भूभृतः ॥५॥
शोभाविनि विवाहे तु तां कन्यां हृतवान् हरिः ।
विपक्षभारमासज्य रामाद्येष्वथ बन्धुषु ॥६॥
ततश्च पौण्ड्रकः श्रीमान् दन्तवक्रो विदूरथः ।
शिशुपालजरासन्धशाल्वाद्याश्च महीभूतः ॥७॥
कुपितास्ते हरिं हन्तुं चक्रुरुद्योगमुत्तमम् ।
निर्जिताश्च समागम्य रामाद्यैर्यदुपुङ्गवैः ॥८॥
कुण्डिनं न प्रवेक्ष्यामि अहत्वा युधि केशवम् ।
कृत्वा प्रतिज्ञां रुक्मी च हन्तुं कृष्णमभिद्रुतः ॥९॥
हत्वा बलं सनागाश्वपत्तिस्यन्दनसङ्कुलम् ।
निर्जितः पातितश्चार्व्यां लीलयैव स चक्रिणा ॥१०॥
हन्तु कृतमतिः कृष्णो रुक्मिणां युद्धदुर्मदम् ।
प्रणम्य याचितो ब्रह्मन् रुक्मिण्या भगवान् हरिः ॥११॥
एक एव मम भ्राता न हन्तव्यस्त्वयाधुना ।
कोपं नियम्य देवेश ! भ्रातृभिक्षा प्रदीयताम् ॥१२॥
इत्युक्तेन परित्यक्तः कृष्णेनाक्लिष्टकर्मणा ।
रुक्मी भोजकटं नाम पुरं कृत्वावसत् तदा ॥१३॥
निर्जित्य रुक्मिणं सम्यगुपयेमे स रुक्मिणीम् ।

राक्षसेन विवाहेन सम्प्राप्तां मधुसूदनः ॥१४॥
तस्यां जज्ञेऽथ प्रद्युम्नो मदनांश स वीर्य्यवान् ।
जहार शम्बरो यं वै यो जघान च शम्बरम् ॥१५॥

इति श्रीविष्णुपुराणे पञ्चमांशे षड्विंशोऽध्यायः ॥२६॥

आदितः श्लोकानां समष्टयङ्काः-४,४८८+१५=४,५०३



## ॥ अथ सप्तविंशोऽध्यायः ॥
## (प्रद्युम्नहरणं शम्बरवधश्च)

### मैत्रेय उवाच

शम्बरेण हृतो वीरः प्रद्युम्नः स कथं मुने ।
शम्बरश्च महावीर्य्यः प्रद्युम्नेन कथं हतः ॥१॥

### पराशर उवाच

षष्ठेऽह्नि जातमात्रन्तु प्रद्युम्नं सूतिकागृहात् ।
ममैष हन्तेति मुने ! हृतवान् कालशम्बरः ॥२॥
हृत्वा चिक्षेप चैवैनं ग्राहोग्रे लवणार्णवे ।
कल्लोलजनितावर्त्ते सुघोरे मकरालये ॥३॥
पतितं तत्र चैवैको मत्स्यो जग्राह बालकम् ।
न ममार च तस्यापि जठरेऽनलदीपितः ॥४॥
मत्स्यबन्धैश्च मत्स्योऽसौ मत्स्यैरन्यैः सह द्विज ।
घातितोऽसुरवर्य्याय शम्बराय निवेदितः ॥५॥
तस्य मायावती नाम पत्नी सर्वगृहेश्वरी ।
कारयामास सूदानामाधिपत्यमनिन्दिता ॥६॥
दारिते मत्स्यजठरे सा ददर्शातिशोभनम् ।
कुमारं मन्मथतरोर्दग्धस्य प्रथमाङ्कुरम् ॥७॥
कोऽयं कथमयं मत्स्यजठरं समुपागतः ।
इत्येवं कौतुकाविष्टां तां तन्वीं प्राह नारदः ॥८॥
अयं समस्तजगतः सृतिसंहारकारिणा ।
शम्बरेण हृतः कृष्णतनयं सूतिकागृहात् ॥९॥
क्षिप्तः समुद्रे मत्स्येन निगीर्णास्ते वशं गतः ।
नररत्नमिदं सुभ्रू विस्त्रब्धा परिपालय ॥१०॥

### पराशर उवाच

नारदेनैवमुक्ता सा पालयामास तं शिशुम् ।

बाल्यादेवातिरागेण रूपातिशयमोहिता ॥११॥
स यदा यौवनाभोगभूषितोऽभून्महामते ।
साभिलाषा तदा साति बभूव गजगामिनी ॥१२॥
मायावती ददौ तस्म मायाः सर्वा महामुने ।
प्रद्युम्नायातिरागान्धा तन्न्यस्तहृदयेक्षणा ॥१३॥
प्रसज्जन्तीन्तु तामाह स कार्ष्णिः कमलेक्षणाम् ।
मातृभावमपाहाय किमेवं वर्त्तसेऽन्यथा ॥१४॥
सा चास्मै कथयामास न पुत्रस्त्वं ममेति वै ।
तनयं त्वामयं विष्णोर्हृतवान् कालशम्बरः ॥१५॥
क्षिप्तः समुद्र मत्स्यस्य सम्प्राप्तो जठरान्मया ।
सा तु रोदिति ते माता कान्ताद्याप्यतिवत्सला ॥१६॥

पराशर उवाच

इत्युक्तः शम्बरं युद्धे प्रद्यम्नः स समाह्वयत् ।
क्रोधाकुलीकृतमना युयुधे च महाबलः ॥१७॥
हत्वा सैन्यमशेषन्तु तस्य दैत्यस्य माधविः ।
सप्त माया व्यतिक्रम्य मायां प्रयुयुजेऽष्टमीम् ॥१८॥
तया जघान तं दैत्यं मायया कालशम्बरम् ।
उत्पत्य च तया सार्द्धमाजगाम पितुर्गृहम् ॥१९॥
अन्तःपुरे निपतितं मायावत्या समन्वितम् ।
तं दृष्ट्वा कृष्णसङ्कल्पा बभूवुः कृष्णयोषितः ॥२०॥
रुक्मिणी चावदत् प्रेम्णा साश्रुदृष्टिरनिन्दिता ।
धन्यायाः खल्वयं पुत्रो वर्त्तते नवयौवने ॥२१॥
अस्मिन् वयसि पुत्रो मे प्रद्युम्नो यदि जीवति ।
सभाग्या जननी वत्स ! त्वया कापि विभूषिता ॥२२॥
अथवा यादृशः स्नेहो मम यादृग् वपुस्तव ।
हरेरपत्यं सुव्यक्तं भवान् वत्स ! भविष्यति ॥२३॥

पराशर उवाच

एतिस्मिन्नन्तरे प्राप्तः सह कृष्णेन नारदः ।

अन्तः पुरचरीं देवीं रुक्मिणीं प्राह हर्षयन् ॥२४॥
एश ते तनयः सुभ्रु ! हत्वा शम्बरमागतः ।
हृतो येनाभवद् बालो भवत्याः सूतिकागृहात् ॥२५॥
इयं मायावती भार्या तनयस्यास्य ते सती ।
शम्बरस्य न भार्येयं श्रूयतामत्र कारणम् ॥२६॥
मन्मथे तु गते नाशं तदुद्भवपरायणा ।
शम्बरं मोहयामास मायारूपेण रूपिणी ॥२७॥
व्यवायाद्यु पभोगेषु रूपं मायामयं शुभम् ।
दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा ॥२८॥
कामोऽवतीर्णः पुत्रस्ते तस्येयं दयिता रतिः ।
विशङ्का नात्र कर्तव्या स्नुषेयं तव शोभना ॥२९॥
ततो हर्षसमाविष्टा रुक्मिणी केशवस्तथा ।
नगरी च समस्ता सा साधु साध्वित्यभाषत ॥३०॥
चिरं नष्टेन पुत्रेण संयुक्तां प्रेक्ष्य रुक्मिणीम् ।
अवाप विस्मयं सर्वो द्वारवत्यां जनस्तदा ॥३१॥

इति श्रीविष्णुपुराणे पञ्चमांशे सप्तविंशोऽध्यायः ॥२७॥



आदितः श्लोकानां समष्ट्यङ्काः-४,५०३+३१=४,५३४





## ॥ अथाष्टाविंशोऽध्यायः ॥
## (रुक्मिवधः)

### पराशर उवाच

चारुदेष्णां सुदेष्णञ्च चारुदेवञ्च वीर्य्यवान् ।
सुषेणं चारुगुप्तञ्च भद्रचारुं तथापरम् ॥१॥
चारुविन्दं सुचारुञ्च चारुञ्च बलिनां वरम् ।
रुक्मिण्यजनयत् पुत्रान् कन्यां चारुमतीं तथा ॥२॥
अन्याश्च भार्याः कृष्णस्य बभूवुः सप्त शोभनाः ।
कालिन्दी मित्रविन्दा च सत्या नाग्नजिती तथा ॥३॥
देवी जाम्बवती चापि रोहिणी कामरूपिणी ।
मद्रराजसुता चान्या सुशीला शीलमण्डना ॥४॥
सात्राजिती सत्यभामा लक्ष्मणा चारुहासिनी ।
षोडशासन् सहस्राणि स्त्रीणामन्यानि चक्रिणः ॥५॥
प्रद्युम्नोऽपि महावीर्य्यो रुक्मिणस्तनयां शुभाम् ।
स्वयंवरस्थां जग्राह सा च तं तनयं हरेः ॥६॥
यस्यामस्याभवत् पुत्रो महाबलपरावक्रमः ।
अनिरुद्धो रणो क्रुद्धो वीर्य्योदधिररिन्दमः ॥७॥
तस्यापि रुक्मिणः पौत्रीं वरयामास केशवः ।
दौहित्राय ददौ रुक्मी तां स्पर्द्धन्नपि शौरिणा ॥८॥
तस्या विवाहे रामाद्या यादवा हरिणा सह ।
रुक्मिणो नगरं जग्मुर्नाम्ना भोजकटं द्विज ॥९॥
विवाहे तत्र निर्वृत्ते प्राद्यूम्नेः सुमहात्मनः ।
कलिङ्गराजप्रमुखा रुक्मिणं वाक्यमब्रुवन् ॥१०॥
अनक्षत्रो हली द्यूते तथास्य व्यसनं महत् ।
न जयामो बलं कस्माद् द्यूतेनैनं महाद्युते ॥११॥

### पराशर उवाच

तथेति तानाह नृपान् रुक्मी बलसमन्वितः ।
सभायां सह रामेण चक्रे द्यूतञ्च वै तदा ॥१२॥

सहस्रमेकं निष्काणां रुक्मिणां विजितो बलः ।
द्वितीयेऽपि पणे चान्यत् सहस्र रुक्मिणा जितम् ॥१३॥
ततो दश सहस्राणि निष्काणां पणमाददे ।
बलभद्रोऽजयत्तानि रुक्मी द्यूतविदां वरः ॥१४॥
ततो जहास स्वनवत् कलिङ्गाधिपतिर्द्विज ।
दन्तान् विदर्शयन् मूढो रुक्मी चाह मदोद्धतः ॥१५॥
अविज्ञोऽयं मया द्यूते बलदेवः पराजितः ।
मुधैवाक्षावलेपान्धो यः स्वं मेनेऽक्षकोविदम् ॥१६॥
दृष्ट्वा कलिङ्गराजं तं प्रकाशदशनाननम् ।
रुक्मिणञ्चापि दुर्वाक्यं कोपं चक्रे हलायुधः ॥१७॥
ततः कोपपरीतात्मा निष्कोटिं हलायुधः ।
ग्लहं जग्राह रुक्मी च तदर्थेऽक्षानपातयत् ॥१८॥
अजयद् बलदेवस्तं प्राहोच्चैस्तं जितं मया ।
मयेति रुक्मी प्राहोच्चैरलीकोक्तेरलं बल ॥१९॥
त्वयोक्तोऽयं ग्लहः सत्यं न ममैषोऽनुमोदितः ।
एवं त्वया चेद् विजितं मया न विजितं कथम् ॥२०॥
अथान्तरिक्षे वागुच्चैः प्राह गम्भीरनादिनी ।
बलदेवस्य तद्कोपं वर्द्धयन्ती महात्मनः ॥२१॥
जितं बलेन धर्म्मेण रुक्मिणो भाषितं मृषा ।
अनुक्त्वापि वचः किञ्चित् कृतं भवति कर्मणा ॥२२॥
ततो बलः समुत्थाय कोपसंरक्तलोचनः ।
जघानाष्टापदेनैव रुक्मिणं सुमहाबलः ॥२३॥
कलिङ्गराजञ्चादाय विस्फुरन्तं बलाद् बलः ।
वभञ्ज दन्तान् कुपितो यैः प्रकाशं जहास सः ॥२४॥
आकृष्य च महास्तम्भं जातरूपमयं बलः ।
जघान येऽन्ये तत्पक्षा भूभृतः कुपितो बलात् ॥२५॥
ततो हाहाकृतं सर्वं पलायनपरं द्विज ।
तद्राजमणडलं भीतं बभूव कुपिते बले ॥२६॥
बलेन निहतं श्रुत्वा रुक्मिणं मधुसूदनः ।
नोवाच किञ्चिन्मैत्रेय ! रुक्मिणीबलयोर्भयात् ॥२७॥
ततोऽनिरुद्धमादाय कृतोद्वाहं द्विजोत्तम ।
द्वारकामाजगामाथ यदुचक्रं सकेशवम् ॥२८॥

## इति श्रीविष्णुपुराणे पञ्चमांशे अष्टाविंशोऽध्यायः ॥२८॥

## आदितः श्लोकानां समष्ट्यङ्काः-४,५३४+२८=४,५६२



## ॥ अथैकोनत्रिंशोऽध्यायः ॥
## (नरकासुरवधः)

### पराशर उवाच

द्वारवत्यां ततः शौरिं शक्रस्त्रिभुवनेश्वरः ।
आजगामाथ मैत्रेय ! मत्तैरावतपृष्ठगः ॥१॥
प्रविश्य द्वारकां सोऽथ समेत्य हरिणा ततः ।
कथयामास दैत्यस्य नरकस्य विचेष्टितम् ॥२॥
त्वया नाथेन देवानां मनुष्यत्वेऽपि तिष्ठता ।
प्रशमं सर्वदुःखानां नीतानि मधुसूदन ॥३॥
तपस्विजननाशाय सोऽरिष्टो धेनुकस्तथा ।
चाणूरो मुष्टिकः केशी ते सर्वे निहतास्त्वया ॥४॥
कंसः कुवलयापीडः पूतना बालघातिनी ।
नाशं नीतास्त्वया सर्वे येऽन्ये जगदुपद्रवाः ॥५॥
युष्मद्दोर्दण्ड-सद्बुद्धि परित्राते जगत्त्रये ।
यज्वियज्ञांशसम्प्राप्त्या तृप्तिं यान्ति दिवौवसः ॥६॥
सोऽहं साम्प्रतमायातो यन्निमित्तं जनार्दन ।
तच्छ्रुत्वा तत्प्रतीकारप्रयत्नं कर्त्तुमर्हसि ॥७॥
भौमोऽयं नरको नाम्ना प्राग्ज्योतिषपुरेश्वरः ।
करोति सर्वभूतानामुपधातमरिन्दम ॥८॥
देवसिद्धासुरादीनां नृपाणाञ्च जनार्दन ।
हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे ॥९॥
छत्रं यत् सलिलस्त्रावि तज्जहार प्रचेतसः ।
मन्दरस्य तथा श्रृङ्ग हृतवान् मणिपर्वतम् ॥१०॥
अमृतस्त्राविणी दिव्य मन्मातुः कृष्ण ! कुण्डले ।
जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं गजम् ॥११॥
दुर्णीतमेतद् गोविन्द ! मया तस्य तवोदितम् ।
यदत्र प्रतिपत्तव्यं तत् स्वयं प्रविमृष्यताम् ॥१२॥

### पराशर उवाच

इति श्रुत्वा स्मितं कृत्वा भगवान् देवकीसुतः ।
गृहीत्वा वासवं हस्ते समुत्तस्थौ वरासनात् ॥१३॥
चिन्तयामास स विभुर्मनसा पन्नगाशनम् ।
सञ्चिन्तितमुपारुह्य गरुडं गगनेचरम् ॥
सत्यभामां समारोप्य यौ प्राग्ज्योतिषं पुरम् ॥१४॥
आरुह्यैरावतं नागं शक्रोऽपि त्रिदिवालयम् ।
ततो जगाम मैत्रेय ! पश्यतां द्वारकौकसाम् ॥१५॥
प्रागूज्योतिषपुरस्यासीत् समन्ताच्छतयोजनम् ।
आचिता मौरवैः पाशैः क्षुरान्तैर्भूर्द्विजोत्तम ॥१६॥
तांश्चिच्छेद हरिः पाशान् क्षिप्त्वा चक्रं सुदर्शनम् ।
ततो मुरुः समुत्तस्थौ तं जघान च केशवः ॥१७॥
मुरोश्च तनयान् सप्त सहस्रां स्तां स्ततो हरिः ।
चक्रधाराग्निनिर्दग्धांश्चकार शलभानिव ॥१८॥
हत्वा मुरुं हयग्रीवं तथा पञ्चजनं द्विज ।
प्रागूज्योतिषपुरं धीमांस्त्वरावान् समुपागतः ॥१९॥
नरकेणास्य तत्राभून्महासैन्येन संयुगः ।
कृष्णस्य यत्र गोविन्दो जघ्ने दैत्यान् सहस्रशः ॥२०॥
शस्त्रास्त्रवर्ष मुञ्चन्तं भौमं तं नरकं बली ।
क्षिप्त्वा चक्रं द्विधा चक्रे चक्री दैतेयचक्रहा ॥२१॥
हते तु नरके भूमिर्गृहीत्वा दितिकुण्डले ।
उपतस्थे जगन्नाथं वाक्यं चेदमथाब्रवीत् ॥२२॥

पृथिव्युवाच

यदाहमुद्धृता नाथ ! त्वया शूकरमूर्त्तिना ।
त्वत्स्पर्शसम्भवः पुत्रस्तदायं मय्यजायत ॥२३॥
सोऽयं त्वयैव दत्तो मे त्वयैव विनिपातितः ।
गृहाण कुण्डले चेमे पालयास्य च सन्ततिम् ॥२४॥
भारावतारणार्थाय ममैव भगवानिमम् ।
अंशेन लोकमायातः प्रसादसुमुखः प्रभो ॥२५॥
त्वं कर्त्ता त्वं विकर्त्ता च संहर्त्ता प्रभवोऽप्ययः ।
जगतो त्वं जगद्रूपः स्तूयतेऽच्युत ! किं तव ॥२६॥

(व्यापी व्याप्यः क्रिया कर्त्ता कार्य्यञ्च भगवान् यथा ।
सर्वभूतात्मभूतस्य स्तूयते तव किं तदा ॥)
परमात्मा च भूतात्मा महात्मा चाव्ययो भवान् ।
यदा तदा स्तुतिर्नाथ ! किमर्थं ते प्रवर्त्तते ॥२८॥
प्रसीद सर्वभूतात्मन् ! नरकेणा हि यत् कृतम् ।
तत् क्षम्यतामदोषाय त्वत्सुतः त्वन्निपातितः ॥२९॥

पराशर उवाच

तथेति चोक्त्वा धरणीं भगवान् भूतभावनः ।
रत्नानि नरकावासज्जग्राह मुनिसत्तम ॥३०॥
कन्यापुरे स कन्यानां षोडशातुलविक्रमः ।
शताधिकानि ददृशे सहस्राणि महामते ॥३१॥
चतुर्दन्तान् गजाश्चोग्र्यान् षट्सहस्रान् स दृष्टवान् ।
काम्बोजानां तथाश्वानां नियुतान्येकविंशतिम् ॥३२॥
कन्यास्ताश्च तता नागांस्तानश्वान् द्वारकां पुरीम् ।
प्रेषयामास गोविन्दः सद्यो नरककिङ्करैः ॥३३॥
ददृशे वारुणं छत्रं तथैव मणिपर्वतम् ।
आरोपयामास हरिर्गरुडे पन्नगाशने ॥३४॥
आरुह्य च स्वयं कृष्णाः सत्यभामासहायवान् ।
अदित्याः कुण्डले दातु जगाम त्रिदिवालयम् ॥३५॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकोनत्रिंशोऽध्यायः ॥२९॥



आदितः श्लोकानां समष्ट्यङ्काः-४,५६२+३५=४,५९७



## ॥ अथ त्रिंशोऽध्यायः ॥
## (पारिजातहरणम्)

### पराशर उवाच

गरुडो वारुणं छत्रं तथैव मणिपर्वतम् ।
सभार्य्यञ्च हृषीकेशं लीलयैव वहन् ययौ ॥१॥
ततः शङ्खमुपाध्मासीत् स्वर्गद्वारगतो हरिः ।
उपतस्थुस्तथा देवाः सार्घ्यहस्ता जनार्द्दनम् ॥२॥
स देवैरर्च्चितः कृष्णो देवमातुर्निवेशनम् ।
सिताभ्रशिखराकारं प्रविश्य ददृशेऽदितिम् ॥३॥
स तां प्रणाम्य शक्रेण सह ते कुण्डलोत्तमे ।
ददौ नरकनाशञ्च शशंसास्यै जनार्द्दनः ॥४॥
ततः प्रीता जगन्माता धातारं जगतां हरिम् ।
तुष्टावादितिरव्यग्र कृत्वा त्वत्प्रवणं मनः ॥५॥

### अदितिरुवाच

नमस्ते पुण्डरीकाक्ष ! भक्तानामभयङ्कर ।
मनातनात्मन् सर्वात्मन् ! भूतात्मन् ! भूतभावन ॥६॥
प्रणेता मनसा बुद्धेरिन्द्रियाणां गुणात्मक ।
त्रिगुणातीत ! निर्द्वन्द्व ! शुद्धसत्त्व ! हृदि स्थित ॥७॥
सितदीर्घादिनिः शेषकल्पनापरिवर्ज्जित ।
जन्मादिभिरसंस्पृष्ट ! स्वप्नादिपरिवर्ज्जित ॥८॥
सन्ध्या रात्रिरहोभूमिर्गगनं वायुरम्बु च ।
हुताशनी मनो बुद्धिर्भूतादिस्त्वं तथाच्युत ॥९॥
सृष्टिस्थितिविनाशानां कर्त्ता कर्त्तृ पतिर्भवान् ! ।
ब्रह्मविष्णुशिवाख्याभिरात्ममूर्त्तिभिरीश्वर ॥१०॥
देवा यक्षास्तथा दैत्या राक्षसाः सिद्धपन्नगाः ।
कुष्माण्डाश्च पिशाचाश्च गन्धर्वा मनुजास्तथा ॥११॥
पश्वो मृगमातङ्गस्तथैव च सरीसृपाः ।
वृक्षगुल्मलता बह्वयः समस्तास्तृणजातयः ॥१२॥

स्थूला मध्यास्तथा सूक्ष्माः स्थूलसूक्ष्मतराश्च ये ।
देहबेदा भवान् सर्वे ये केचित् पुद्गलाश्रयाः ॥१३॥
माया तवेयमज्ञातपरमार्थातिमोहिनी ।
अनात्मन्यात्मविज्ञानं यया मूढो निरुध्यते ॥१४॥
अस्वे ममेति भावोऽत्र यत् पुंसामुपजायते ।
अहं ममेति भावोऽत्र यत् प्रायेणाभिजायते ॥
संसारमातुर्मायायास्तवैतन्नाथ ! चेष्टितम् ॥१५॥
यः स्वधर्मपरेर्नाथ ! नरैराराधितो भवान् ।
ते तरन्यखिलामेतां मायामात्मविमुक्तये ॥१६॥
ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा ।
विष्णुमायामहावर्त्तमोहान्धतमसावृताः ॥१७॥
आराध्य त्वामभीप्सन्ते कामानात्ममवक्षयम् ।
यदेते पुरुषा माया सैवेयं भगवंस्तव ॥१८॥
मया त्वं पुत्रकामिन्या वैरिपक्षक्षयाय च ।
आराधितो न मोक्षाय मायाविलसितं हि तत् ॥१९॥
कौपीनाच्छादनप्राया वाञ्छा कल्पद्रुमादपि ।
जायते यदपुण्यानां सोऽपराधः स्वदोषजः ॥२०॥
तत् प्रसीदाखिलजगन्मायामोहकराव्यय ।
अज्ञानं ज्ञानसद्भावभूतं भूतेश ! नाशय ॥२१॥
नमस्ते चक्रहस्ताय शार्ङ्गहस्ताय ते नमः ।
गदाहस्ताय ते विष्णो ! शङ्खहस्ताय ते नमः ॥२२॥
एतत् पश्यामि ते रूपं स्थूलचिह्नोपलक्षितम् ।
न जानामि परं यत्ते प्रसीद परमेश्वर ॥२३॥

पराशर उवाच

अदित्यैवं स्तुतो विष्णुः प्रहस्याह सुरारणिम् ।
माता देवि ! त्वमस्माकं प्रसीद वरदा भव ॥२४॥
एवमस्तु यथेच्छा ते त्वमशेषैः सुरासुरैः ।
अजेयः पुरुषव्याघ्र ! मर्त्त्यलोके भविष्यसि ॥२५॥

पराशर उवाच

ततोऽन्तरमेवास्य शक्राणीसहितादितिम् ।
सत्यभामा प्रणम्याह प्रसीदेति पुनः पुनः ॥२६॥

अदितिरुवाच

मत्प्रसादान्न ते सुभ्रु ! जरा वैरूप्यमेव च ।
भविष्यत्यनवद्याङ्गि ! सुस्थिरं नवयौवनम् ॥२७॥

पराशर उवाच

अदित्या तु कृतानुज्ञो देवराजो जनार्द्दनम् ।
यथावत् पूजयामास बहुमानपुरः सरम् ॥२८॥
शची च सत्यभामायै पारिजातस्य पुष्पकम् ।
न ददौ मानुषीं मत्वा स्वयं पुष्पैरलङ्कृता ॥२९॥
ततो ददर्श कृष्णोऽपि सत्यभामासहायवान् ।
देवोद्यानानि हृद्यानि नन्दनादीनि सत्तम ॥३०॥
ददर्श च सुगन्धाढ्यं मञ्जरीपुञ्जधारिणम् ।
नित्याह्लादकरं ताम्रबालपल्लवशोभितम् ॥३१॥
मथ्यमानेऽमृते जातं जातरूपोपमत्वचम् ।
पारिजातं जगन्नाथं केशवः केशिसूदनः ॥३२॥
तं दृष्ट्वा प्राह गोविन्दं सत्यभामा द्विजोत्तम ।
कस्मानं द्वारकामेष नीयते देवपादपः ॥३३॥
यदि ते तद्वचः सत्यं सत्यात्यर्थ प्रियेति मे ।
मद्गेहनिष्कुचार्थाय तदयं नीयतां तरुः ॥३४॥
न मे जाम्बवती तादृगभीष्टा न च रुक्मिणी ।
सत्ये यथा त्वमित्युक्तं त्वया कृष्णासकृत् प्रियम् ॥३५॥
सत्यं तद् यदि गोविन्द ! नोपचारकृतं तव ।
तदस्तु पारिजातस्य मम गेहविभूषणम् ॥३६॥
बिभ्रती पारिजातस्य केशपक्षेण मञ्जरीम् ।
सपत्नीनामहं मध्ये शोभेयमिति कामये ॥३७॥

## पराशर उवाच

इत्युक्तः सम्प्रहस्यैनं पारिजातं गरुत्मति ।
आरोपयामास हरिस्थमूचूर्वनरक्षिणः ॥३८॥
भोः शची देवराजस्य महिषी तत्परिग्रहम् ।
पारिजातं न गोविन्द ! हर्त्तु मर्हसि पादपम् ॥३९॥
शचीविभूषणार्थाय देवैरमृतमन्थने ।
उत्पादितोऽयं न क्षेमी गृहीत्वैनं गमिष्यसि ॥४०॥
देवराजो मुखप्रेक्षी यस्यास्तस्याः परिग्रहम् ।
मौढ्यात् प्रार्थयसे क्षेमी गृहीत्वैनं हि को व्रजेत् ॥४१॥
अवश्यमस्य देवेन्द्रो निष्कृतिं कृष्ण ! यास्यति ।
वज्रोद्यतकरं शक्रमनुयास्यन्ति चामराः ॥४२॥
तदलं सकलैर्देवैर्विग्रहेण तवाच्युत ।
विपाककटु यत् कर्म्म तन्न शंसन्ति पण्डिताः ॥४३॥
इत्युक्ते तैरुवाचैतान् सत्यभामातिकोपिनी ।
का शची पारिजातस्य को वा शक्रः सुराधिपः ॥४४॥
सामान्यः सर्वलोकानां यद्येषोऽमृतमन्थने ।
समुत्पन्नः सुराः कस्मादेको गृह्णाति वासवः ॥४५॥
यथा सुरा यथैवेन्दुर्यथा श्रीर्वनरक्षिणः ।
सामान्याः सर्वलोकस्य पारिजातस्तथा द्रुमः ॥४६॥
भर्त्तृबाहुमहागर्वाद् रुणद्ध्येनं यथा शची ।
तत् कथ्यतामलं क्षान्त्या सत्या हारयति द्रुमम् ॥४७॥
कथ्यताञ्च द्रुतं गत्वा पौलोम्या वचनं मम ।
सत्यभामा वदत्येतदतिगर्वोद्धताक्षरम् ॥४८॥
यदि त्वं दयिता भर्त्तुर्यदि वश्यः पतिस्तव ।
मद्भर्त्तुर्हरतो वृक्षं तत् कारय निवारणम् ॥४९॥
जानामि ते पतिं शक्रं जानामि त्रिदिवेश्वरम् ।
पारिजातं तथाप्येन मानुषी हारयामि ते ॥५०॥
इत्युक्ता रक्षिणो गत्वा शच्या ऊचुर्यथोदितम् ।
शची चोत्साहयामास त्रिदशाधिपतिं पतिम् ॥५१॥
ततः समस्तदेवानां सैन्यैः परिवृतो हरिम् ।
प्रययौ पारिजातार्थमिन्द्रो योधयितुं द्विज ॥५२॥

ततः परिघनिस्त्रिंशगदाशूलवरायुधाः ।
बभूवुस्त्रिदशाः सज्जाः शक्रे वज्रकरे स्थिते ॥५३॥
ततो निरीक्ष्य गोविन्दो नागराजोपरि स्थितम् ।
शक्रं देवपरीवारं युद्धाय समुपस्थितम् ॥५४॥
चकार शङ्खनिर्घोषं दिशः शब्देन पूरयन् ।
मुमोच शरसङ्घातान् सहस्रायुतशः शितान् ॥५५॥
ततो दिशो नभश्चैव दृष्टा शरशतैश्चितम् ।
मुमुचुस्त्रिदशाः सर्वे अस्त्रशस्त्राण्यनेकशः ॥५६॥
एकैकमस्त्रं शस्त्रञ्च देवैर्मुक्तं सहस्रधा ।
चिच्छेद लीलयैवेशो जगतां मधुसूदनः ॥५७॥
पाशं सलिलराजस्य समाकृष्योरगाशनः ।
चकार खण्डशश्चञ्च्वा बालपन्नगदेहवत् ॥५८॥
यमेन प्रहृतं दण्डं गदाविक्षेपखण्डितम् ।
पृथिव्याः पातयामास भगवान् देवकीसुतः ॥५९॥
शिविकाञ्च धनेशस्य चक्रेण तिलशो विभुः ।
चकार शौरिरर्कञ्च दृष्टिदृष्टहतौजसम् ॥६०॥
नीतोऽग्निः शतशां वाणैर्द्राविता वसवो दिशः ।
चक्रविच्छिन्नशूलाग्रा रुद्रा भुवि निपातिताः ॥६१॥
साध्य विश्वेऽथ मरुतो गन्धर्वाश्चैव सायकैः ।
शार्ङ्गिणा प्रेरितैरस्ता व्योम्नि शाल्मलितूलवत् ॥६२॥
गरुत्मानपि वक्त्रेण पक्षाभ्यां नखराङ्कुरैः ।
भक्षयंस्ताडयन् देवान् दारयंश्च चचार वै ॥६३॥
ततः शरसहस्रेण देवेन्द्रमधुसूदनौ ।
परस्परं ववर्षाते धाराभिरिव तोयदौ ॥६४॥
ऐरावतेन गरुडङ्गो युयुधे तत्र संयुगे ।
देवैः समस्तैर्युयुधे शक्रेण च जनार्द्दनः ॥६५॥
छिन्नेष्वशेषवाणेषु शस्त्रेष्वस्त्रेषु च त्वरन् ।
जग्राह वासवो वज्र कृष्णाश्चक्रं सुदर्शनम् ॥६६॥
ततो हाहाकृतं सर्वं त्रैलोक्यं द्विजसत्तम ।
वज्रचक्रधरौ दृष्ट्वा देवराजजनार्द्दनौ ॥६७॥
क्षिप्तं वज्रमथेन्द्रेणा जग्राह भगवान् हरिः ।
न मुमोच तदा चक्र तिष्ठ तिष्ठेति चाब्रवीत् ॥६८॥

प्रनष्टवज्रं देवेन्द्र गरुडक्षतवाहनम् ।
सत्यभामाब्रवीद् वीरं पलायनपरायणम् ॥६९॥
त्रैलोक्येश ! न ते युक्तं शचीभर्त्तुः पलायनम् ।
पारिजातस्रगाभोगा त्वामुपस्थास्यते शची ॥७०॥
कीदृशं देवराज्यन्ते पारिजातस्रगुज्ज्वलाम् ।
अपश्यतो यथापूर्वं प्रणयादागतां शचीम् ॥७१॥
अलं शक्र ! प्रयातेन न ब्रीडां गन्तुमर्हसि ।
नीयतां पारिजातोऽयं देवाः सन्तु गतव्यथाः ॥७२॥
पतिगर्वावलेपेन बहुमानपुरः सरम् ।
न ददर्श गृहे यातामुपचारेणा मां शची ॥७३॥
स्त्रीत्वादगुरुचित्ताहं स्वभर्त्तृश्लाघनापरा ।
ततः कृतवती शक्र भवता सह विग्रहम् ॥७४॥
तदलं पारिजातेन परस्वेन हृतेन नः ।
रूपेण गर्विता सा तु भर्त्रा स्त्री का न गर्विता ॥७५॥
इत्युक्तो विनिवृत्तोऽसौ देवराजस्तथा द्विज ।
प्राह चैनामलं चण्डि ! सख्युः खेदातिवस्तिरैः ॥७६॥
न चापि सर्गसंहारस्थितिकर्त्ताखिलस्य यः ।
जितस्य तेन मे व्रीडा जायते विश्वरूपिणा ॥७७॥
यस्मिन् जगत् सकलमेतदनादिमध्ये यस्माद् यतश्च न भविष्यति सर्वभूतात् ।
तेनोद्भवप्रलयपालनकारणेन व्रीडा कथं भवति देवि ! निराकृतस्य ॥७८॥
सकलभुवनसूतेर्मूर्त्तिरस्यानुसूक्ष्मां विदितसकलवेदैर्ज्ञायते यस्य नान्यैः ।
तमजमकृतमीशं शाश्वतं स्वेच्छयैनं जगदुपकृतिमर्त्त्यं को विजेतुं समर्थः ॥७९॥

इति श्रीविष्णुपुराणे पञ्चमांशे त्रिंशोऽध्यायः ॥३०॥



आदितः श्लोकानां समष्ट्यङ्काः-४,५९७+७९=४,६७६



## ॥ अथैकत्रिंशोऽध्यायः ॥
## (श्रीभगवतो द्वारकापुरीप्रत्यावर्त्तनम् शताधिकषोडशसहस्ररमणीभिः सह विवाहश्च)

### पराशर उवाच

संस्तुतो भगवानित्थं देवराजेन केशवः ।
प्रहस्य भावगम्भीरमुवाचेदं द्विजोत्तम ॥१॥

### श्रीकृष्ण उवाच

देवराजो भवानिन्द्रो वयं मर्त्त्या जगत्पते ।
क्षन्तव्यं भवता चद्मपराधकृत मम ॥२॥
पारिजाततरुश्चवायं नीयतामुचितास्पदम् ।
गृहीतोऽयं मया शक्र ! सत्यावचनकारणात् ॥३॥
वज्रञ्चेदं गृहाण त्वं यत्त्वया प्रहितं मयि ।
तवैवैतत् प्रहरणं शक्र ! वैरिविदारणम् ॥४॥

### शक्र उवाच

विमोहयसि मामीश ! मर्त्त्योऽहमिति किं वदन् ।
जानीमस्त्वां भगवतो न तु सूक्ष्मविदो वयम् ॥५॥
योऽसि सोऽसि जगत्त्राण ! प्रवृत्तौ नाथ ! संस्थितः ।
जगतः शल्यनिष्कर्ष करोष्यसुरसूदन ॥६॥
नीयतां पारिजातोऽयं कृष्ण ! द्वारवतीं पुरीम् ।
मर्त्त्यलोके त्वया त्यक्त नायं संस्थास्यते भुवि ॥७॥

### पराशर उवाच

तथेत्युक्त्वा च देवेन्द्रमाजगाम भुवं हरिः ।
प्रसक्तैः सिद्धगन्धर्वैः स्तूयमानस्तथर्षिभिः ॥८॥
ततः शङ्खमुपाध्माय द्वारकोपरि संस्थितः ।
हर्षमुत्पादयामास द्वारकावासिनां द्विजः ॥९॥

अवतीर्य्याथ गरुडात् सत्यभामासहायवान् ।
निष्कुटे स्थापयामास पारिजातं महातरुम् ॥१०॥
यमभ्येत्य जनः सर्वो जातिं स्मरति पौर्विकीम् ।
वास्यते यस्य पुष्पोत्थगन्धेनोर्वी त्रियोजनम् ॥११॥
ततस्ते सादराः सर्वे देहबन्धानमानुषान् ।
ददृशुः पादपे तस्मिन् कुर्वन्तो मुखदर्शनम् ॥१२॥
किङ्करैः समुपानीतं हस्त्यश्वादि ततो धनम् ।
स्त्रियश्च कृष्णो जग्राह नरकस्य परिग्रहान् ॥१३॥
ततः काले शुभे प्राप्ते उपयेमे जनार्द्दनः ।
ताः कन्या नरकेणासन् सर्वतो याः समाहृताः ॥१४॥
एकस्मिन्नेव गोविन्दः काले तासां महामते ।
जग्राह विधिवत् पाणीन् पृथग्गेहेषु धर्म्मतः ॥१५॥
षोडशस्त्रीसहस्राणि शतमेकं ततोऽधिकम् ।
तावन्ति चक्रे रूपाणि भगवान् मधुसूदनः ॥१६॥
एकैकश्येन ताः कन्या मेनिरे मधुसूदनम् ।
ममैव पाणिग्रहणं भगवान् कृतवानिति ॥१७॥
निशासु च जगत्स्रष्टा तासां गुहेषु केशवः ।
उवास विप्र ! सर्वासां विश्वरूपधरो हरिः ॥१८॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकत्रिंशोऽध्यायः ॥३१॥



आदितः श्लोकानां समष्ट्यङ्काः-४,६७६+१८=४,६९४





## ॥ अथ द्वात्रिंशोऽध्यायः ॥
## (ऊषाचरितम्)

### पराशर उवाच

प्रद्युम्नाद्या हरेः पुत्रा रुक्मिण्याः कथितास्तव ।
भानुं भैमरिकञ्चैव सत्यभामा व्यजायत ॥१॥
दीप्तिमान् ताम्रपक्षाद्या रोहिणयां तनया हरेः ।
बभूवुर्जाम्बवत्याञ्च शाम्बाद्या बलशालिनः ॥२॥
तनया भद्रविन्दाद्या नाग्नजित्यां महाबलाः ।
सङ्ग्रामजित्प्रधानास्तु शैव्यायान्त्वभवन् सुताः ॥३॥
वृकाद्याश्च सुता माद्रयां गात्रवत्प्रमुखान् सुतान् ।
अवाप लक्ष्मणा पुत्राः कालिन्द्याञ्च श्रुतादयः ॥४॥
अन्यासाञ्चैव भार्य्याणां समुत्पन्नानि चक्रिणः ।
अष्टायुतानि पुत्राणां सहस्राणां शतं तथा ॥५॥
प्रद्युम्नः प्रथमस्तेषा सर्वेषां रुक्मिणीसुतः ।
प्रद्युम्नादनिरुद्धोऽभूद् वज्रस्तस्मादजायत ॥६॥
अनिरुद्धो रणो रुद्धो बलेः पौत्रीं महाबलः ।
वाणास्य तनयामूषामुपयेमे द्विजोत्तम ॥७॥
यत्र युद्धमभूद् घोरं हरिशङ्करयोर्महत् ।
छिन्न सहस्रं बाहूनां यत्र वाणस्य चक्रिणा ॥८॥

### मैत्रेय उवाच

कथं युद्धमभूद् ब्रह्मन्नुषार्थे हरकृष्णयोः ।
कथं क्षयञ्च वाणस्य बाहूनां कृतवान् हरिः ॥९॥
एतत् सर्वं महाभाग ! समाख्यातुं त्वमर्हसि ।
महत् कौतूहलं जातं कथां श्रोतुमिमां हरेः ॥१०॥

### पराशर उवाच

ऊषा वाणसुता विप्र ! पार्वतीं सह शम्भुना ।

क्रीडन्तीमुपलक्ष्योच्चैः स्पृहाञ्चक्रे तदाश्रयाम् ॥११॥
ततः सकलाचित्तज्ञा गौरी तामाह भामिनीम् ।
अलमत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे ॥१२॥
इत्युक्ते सा तदा चक्रे कदेति मतिमात्मनः ।
को वा भर्त्ता ममेत्येतां पुनरप्याह पार्व्वती ॥१३॥

पार्वत्युवाच

वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव ।
करिष्यति स ते भर्त्ता राजपुत्रि ! भविष्यति ॥१४॥

पराशर उवाच

तस्यां तिथौ पुमान् स्वप्ने यथा देव्या उदीरितम् ।
तथैवाभिभवं चक्रे रागञ्चक्रे तथैव सा ॥१५॥
ततः प्रबुद्धा पुरुषमपश्यन्ती तमुत्सुका ।
क्व गतोऽसीति निर्लज्जा मैत्रेयोक्तवती सखीम् ॥१६॥
वाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा तु तत्सुता ।
तस्याः सख्यभवत् सा च प्राह कोऽयं त्वयोच्यते ॥१७॥
यदा लज्जाकुला नास्यै कथयामास सा सती ।
तदा विश्वासमानीय सर्वमेवाभ्यवादयत् ॥१८॥
विदितार्थान्तु तामाह पुनरूषा यथोदितम् ।
देव्या तथैव तत्प्राप्तौ योऽभ्युपायः कुरुष्व तम् ॥१९॥

पराशर उवाच

ततः पटे सुरान् दैत्यान् गन्धर्व्वांश्च प्रधानतः ।
मनुष्यांश्चाबिलिख्यास्यै चित्रलेखा व्यदर्शयत् ॥२०॥
अपास्य सा तु गन्धर्वस्तथोरगसुरासुरान् ।
मनुष्येषु ददौ दृष्टिं तेष्वप्यन्धकवृष्णिषु ॥२१॥
कृष्णरामौ विलोक्यासौ सुभ्रुर्लज्जाजडेव सा ।
प्रद्युम्नदर्शने व्रीडादृष्टिं निन्येऽन्यतो द्विज ॥२२॥

दृष्टमात्रे ततः कान्ते प्रद्युम्नतनये द्विज ।
दृष्ट्यात्यर्थविकाशिन्या लज्जा क्वापि निराकृता ॥२३॥
सोऽयं सोऽयमितीत्युक्ते तया सा योगगामिनी ।
ययौ द्वारवतीमूषां समाश्वास्य ततः सखीम् ॥२४॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वात्रिंशोऽध्यायः ॥३२॥

आदितः श्लोकानां समष्ट्यङ्काः-४,६९४+२४=४,७१८



## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥
## (कृष्णवाणासुरयोः सङ्ग्रामः)

### पराशर उवाच

बाणोऽपि प्रणिपत्याग्रे मैत्रेयाह त्रिलोचनम् ।
देव ! बाहुसहस्रृण निर्विण्णोऽहं विनाहवम् ॥१॥
क्वचिन्ममैषां बाहूनां साफल्यजनको रणः ।
भविष्यति विना युद्धं भाराय मम किं भुजैः ॥२॥

### श्रीशङ्कर उवाच

मयूरध्वजभङ्गस्ते यदा बाणा ! भविष्यति ।
पिशिताशिजनानान्दं प्राप्स्यसे त्वं तदा रणम् ॥३॥

### पराशर उवाच

ततः प्रणम्य मुदितः शम्भुमभ्यागतो गृहम् ।
भग्नञ्च ध्वजमालोक्य हृष्टो हर्षान्तरं ययौ ॥४॥
एतस्मिन्नेव काले तु योगविद्याबलेन तम् ।
अनिरुद्धमथानिन्ये चित्रलेखा वराप्सराः ॥५॥
कन्यान्तःपुरमध्ये तं रममाणं सहोषया ।
विज्ञाय रक्षिणो गत्वा शशंसुर्दैत्यभूपतेः ॥६॥
आदिष्टं किङ्कराणान्तु सैन्यं तेन दुरात्मना ।
जघान परिघं लोहमादाय परवीरहा ॥७॥
हतेषु तेषु वाणोऽपि रथस्थस्तद्वधोद्यतः ।
युध्यमानो यथाशक्ति यदा वीर्य्येण निर्ज्जितः ॥८॥
मायया युयुधे तेन स तदा मन्त्रिचोदितः ।
ततस्तं पन्नगास्त्रेण बबन्ध यदुनन्दनम् ॥९॥
द्वारवत्यां क्व यातोऽसावनिरुद्धेति जल्पताम् ।
यदूनामाचचक्षे तं बद्धं बाणेन नारदः ॥१०॥
तं शोणितपुरे श्रुत्वा नीतं विद्याविदग्धया ।

योषिता हत्ययं जग्मुर्यादवा नामरैरिति ॥११॥
ततो गरुडमारुह्य स्मृतमात्रागतं हरिः ।
बलप्रद्युम्नसहितो बाणस्य प्रययौ पुरम् ॥१२॥
पुरीप्रवेशे प्रमथैर्युद्धमासीन्महात्मनः ।
ययौ बाणपुराभ्यासं नीत्वा तान् संक्षयं हरिः ॥१३॥
ततस्त्रिपादस्त्रिशिरा ज्वरो माहेश्वरो महान् ।
वाणारक्षार्थमत्यर्थं युयुधे शार्ङ्गधन्वना ॥१४॥
तद्भस्मस्पर्शसम्भूततापः कृष्णाङ्गसङ्गमात् ।
अवाप बलदेवोऽपि श्रममामीलितेक्षणः ॥१५॥
ततः स युध्यमानस्तु सह देवेन शार्ङ्गिणा ।
वैष्णवेन ज्वरेणाशु कृष्णदेहान्निराकृतः ॥१६॥
नारायणभुजाघातपरिपीडनविह्वलम् ।
तं वीक्ष्य क्षम्यतामस्येत्याह देवः पितामहः ॥१७॥
ततश्च क्षान्तमेवेति प्रोक्त्य तं वैष्णवं ज्वरम् ।
आत्मन्येव लय निन्ये भगवान् मधुसूदनः ॥१८॥
मम त्वया समं युद्धं ये स्मरिष्यन्ति मानवाः ।
विज्वरास्ते भविष्यन्तीत्युक्त्वा चैनं ययौ ज्वरः ॥१९॥
ततोऽग्नीन् भगवान् पञ्च जित्वा नीत्वा तथा क्षयम् ।
दानवानां बलं विष्णुश्चूर्णयामास लीलया ॥२०॥
ततः समस्तसैन्येन दैतेयानां बलेः सुतः।
युयुधे शङ्करश्चैव कार्तिकेयश्च शौरिणा ॥२१॥
हरिशङ्करयोर्युद्धमतीवासीत् सुदारुणम् ।
चुक्षुभुः सकला लोकाः शस्त्रास्त्रांशुप्रतापिताः ॥२२॥
प्रलयोऽयम शेषस्य जगतो नूनमागतः ।
मेनिरे त्रिदशा यत्र वर्त्तमाने महाहवे ॥२३॥
जृम्भणास्त्रेण गोविन्दो जृम्भयामास शङ्करम् ।
ततः प्रणेशुर्दैतेयाः प्रमथाश्च समन्ततः ॥२४॥
जृम्भाभिभूतश्च हरो रथोपस्थ उपाविशत् ।
न शशाक तथा योद्धु कृष्णेनाक्लिष्टकर्म्मणा ॥२५॥
गरुडक्षतवाहश्च प्रद्युम्नास्त्रप्रपीडितः ।
कृष्णहुङ्कारनिर्द्धूतशक्तिश्चाति ययौ गुहः ॥२६॥
जृम्भिते शङ्करे नष्टे दैत्यसैन्ये गुहे जिते ।

नीते प्रमथसैन्ये च संक्षयं शार्ङ्गधन्वना ॥२७॥
नन्दीश सङ्गृहीताश्वमधिरूढो महारथम् ।
बाणस्तत्राययौ योद्धुं कृष्णकार्ष्णिबलैः सह ॥२८॥
बलभद्रो महावीर्यो बाणसैन्यमनेकधा ।
विव्याध बाणैः प्रभ्रश्य धर्मतस्ततत् पलायत ॥२९॥
आकृष्य लाङ्गलाग्रेण मुषलेनावपोथितम् ।
बलं बलेन ददृशे बाणो बाणैश्च चक्रिणा ॥३०॥
ततः कृष्णस्य बाणेन युद्धमासीत् समस्यतोः ।
परस्परमिषून् दीप्तान् कायत्राणविभेदकान् ॥३१॥
कृष्णश्चिच्छेद बाणौस्तान् बाणोन प्रहिताञ्छरान् ।
बिभेद केशवं बाणो बाणं विव्याध चक्रभृत् ॥३२॥
मुमुचाते तथास्त्राणि बाणकृष्णौ जिगीषया ।
परस्पर क्षतिपरौ परमामर्षणो द्विज ॥३३॥
छिद्यमानेष्वशेषेषु शरेष्वस्त्रे च सीदति ।
प्राचुर्येण हरिर्बाणं हन्तुञ्चक्रे ततो मनः ॥३४॥
ततोऽर्कशतसङ्घाततेजसा सदृशद्युति ।
जग्राह दैत्यचक्रारिर्हरिश्चक्रं सुदर्शनम् ॥३५॥
मुञ्चतो बाणनाशाय तत्र चक्रं मधुद्विषः ।
नग्ना दैतेयविद्याभूत् कोटरी पुरतो हरेः ॥३६॥
तामग्रतो हरिर्दृष्ट्वा मीलिताक्षः सुदर्शनम् ।
मुमोच बाणमुद्दिश्य च्छेत्तुं बाहुवनं रिपोः ॥३७॥
क्रमेण तत्तु बाहूनां बाणस्याच्युतनोदितम् ।
छेदञ्चक्रेऽमुरापास्तशस्त्रौघक्षरणादृतम् ॥३८॥
छिन्ने बाहुवने तत्तु करस्थं मधुसूदनः ।
मुमुक्षुर्बाणानाशाय वितस्त्रिपुरद्विषा ॥३९॥
स उपेत्याह गोविन्दं सामपूर्वमुमापतिः ।
विलोक्य बाणं दोर्दण्डच्छेदासृक्स्त्राववर्षिणम् ॥४०॥

रुद्र उवाच

कृष्ण ! कृष्ण ! जगन्नाथ जाने ! त्वां पुरुषोत्तमम् ।
परेशं परमानन्दमनादि निधनं परम् ॥४१॥

देवतिर्यङ्मनुष्येषु शरीरग्रहणात्मिका ।
लीलेयं सर्वभूतस्य तव चेष्टोपलक्षणा ॥४२॥
तत् प्रसीदाभयं दत्तं बाणस्यास्य मया प्रभो ।
तत्त्वया नानृतं कार्यं यन्मया व्याहृतं वचः ॥४३॥
अस्मत्संश्रयवृद्धोऽयं नापराध्यस्तवाव्यय ।
मया दत्तवरो दैत्यस्ततस्त्वां क्षामयाम्यहम् ॥४४॥

पराशर उवाच

इत्युक्तः प्राह गोविन्दः शूलपाणिमुमापतिम् ।
प्रसन्नवदनो भूत्वा गतामर्षोऽसुरं प्रति ॥४६॥

श्रीभगवानुवाच

युष्मद्दत्तवरो बाणो जीवतामेष शङ्कर ।
त्वद्वाक्यगौरवादेतन्मया चक्रं निवर्त्तितम् ॥४६॥
त्वया यदभयं दत्तं तद्दत्तमखिलं मया ।
मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शङ्कर ॥४७॥
योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषां भिन्नदर्शिनः ॥४८॥
इत्युक्ता प्रययौ कृष्णः प्राद्युम्निर्यत्र तिष्ठित ।
तद्बन्धफणिनो नेशुर्गरुडानिलभीषिताः ॥४९॥
ततोऽनिरुद्धमारोप्य सपत्नीकं गरुत्मति ।
आजग्मुर्द्वारकां रामकार्ष्णिदामोदराः पुरीम् ॥५०॥

इति श्रीविष्णुपुराणे पञ्चमांशे त्रयस्त्रिंशोऽध्यायः ॥३३॥



आदितः श्लोकानां समष्ट्यङ्काः-४,७१८+५०=४,७६८



## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥
## (पौण्ड्रकवधः, काशीदहनश्च)

### मैत्रेय उवाच

चक्र कर्म महच्छौरिर्बिभ्राणो मानुषीं तनुम् ।
जिगाय शक्रं सर्वञ्च सर्वदेवांश्च लीलया ॥१॥
यच्चान्यदकरोत् कर्म्म दिव्यचेष्टाविघातकृत् ।
तत् कथ्यतां महाभाग ! परं कौतूहलं हि मे ॥२॥

### पराशर उवाच

गदतो मम विप्रर्षे ! श्रूयतामिदमादरात् ।
नरावतारे कृष्णेन दग्धा वाराणसी यथा ॥३॥
पौण्ड्रको वासुदेवस्तु वासुदेवोऽभवद् भुवि ।
अवतीर्णस्त्वमित्युक्तो जनैरज्ञानमोहितैः ॥४॥
स मेने वासुदेवऽहमवतीर्णो महीतले ।
नष्टस्मृतिस्ततः सर्व विष्णुचिह्नमचीकरत् ॥५॥
दूतञ्च प्रेरयामास कृष्णाय सुमहात्मने ।
त्यक्त्वाचक्रादिकं चिह्नं मदीयं नाम चात्मनः ॥६॥
वासुदेवात्मकं मूढ ! मुक्त्वा सर्वं विशेषतः ।
आत्मनो जीवितार्थाय ततो मे प्रणतिं व्रज ॥७॥
इत्युक्तः सम्प्रहस्यैनं दूतं प्राह जनार्द्दनः ।
निजचिह्नमहं चक्रं समुत्स्रक्ष्ये त्वयीति वै ॥८॥
वाच्यः स पौण्ड्रको गत्वा त्वया दूत ! वचो मम ।
ज्ञातस्त्वद्वाक्यसद्भावो यत् कार्यं तद्विधीयताम् ॥९॥
गृहीतचिह्न एवाहमागमिष्यामि ते पुरम् ।
समुत्स्रक्ष्यामि ते चक्रं निजचिह्नमसंशयम् ॥१०॥
आज्ञापूर्वञ्च यदिदमागच्छेति त्वयोदितम् ।
सम्पादयिष्ये श्वस्तुभ्यं तदप्येषोऽविलम्बितम् ॥११॥
शरणं ते समभ्येत्य कर्त्तास्मि नृपते ! तदा ।
यथा त्वत्त्वो भयं भूयो न मे किञ्चिद्भविष्यति ॥१२॥

इत्युक्तेऽपगते दूते संस्मृत्याभ्यागतं हरिः ।
गरुत्मन्तमथारुह्य त्वरितं तत्पुरं ययौ ॥१३॥
स चापि केशवोद्योगं श्रुत्वा काशिपतिस्तदा ।
सर्वसैन्यपरीवारः पार्ष्णिग्राह उपाययौ ॥१४॥
ततो बलेन महता काशिराजबलेन च ।
पौण्ड्रको वासुदेवोऽसौ केशवाभिमुखं ययौ ॥१५॥
तं ददर्श हरिर्दूरादुदारस्यन्दने स्थितम् ।
चक्रहस्तं गदाखड्गबाहुं पाणिगताम्बुजम् ॥१६॥
स्रग्धरं धृतशार्ङ्गञ्च सुपर्णरचितध्वजम् ।
वक्षःस्थले कृतञ्चास्य श्रीवत्सं ददृशे हरिः ॥१७॥
किरीटकूण्डलधरं पीतवासःसमन्वितम् ।
दृष्ट्वा तं भावगम्भीरं जहास गरुडध्वजः ॥१८॥
युयुध च बलेनास्य हस्त्यश्वबलिना द्विज ।
निस्त्रिंशशर्ष्टिगदाशूलशक्तिकार्म्मुकशालिना ॥१९॥
क्षणेन शार्ङ्गनिर्म्मुक्तैः शरैरिषुविदारणैः ।
गदाचक्रनिपातैश्च सूदयामास तद्बलम् ॥२०॥
काशिराजबलञ्चैव क्षयं नित्वा जनार्द्दनः ।
उवाच पौण्ड्रकं मूढमात्मचिह्नोपलक्षणम् ॥२१॥

श्रीभगवानुवाच

पौण्ड्रकोक्तं त्वया यत्तु दूतवक्त्रेण मां प्रति ।
समुत्सृजेति चिह्नानि तत्ते सम्पादयाम्यहम् ॥२२॥
चक्रमेतत् समुत्सृष्टं गदेयं ते विसर्जिता ।
गरुत्मानेष निर्द्दिष्टः समारोहतु ते ध्वजम् ॥२३॥

पराशर उवाच

इत्युच्चार्य्य विमुक्तेन चक्रेणासौ विदारितः ।
पोथितो गदया भग्नो गरुत्मांश्च गरुत्मता ॥२४॥
ततो हाहाकृते लोके काशिपुर्य्यधिपो बली ।
युयुधे वासुदेवेन मित्रस्यापचितौ स्थितः ॥२५॥

ततः शार्ङ्गधनुर्मुक्तैश्छित्त्वा तस्य शरैः शिरः ।
काशिपुर्य्याञ्च चिक्षेप कुर्वन् लोकस्य विस्मयम् ॥२६॥
हत्वा च पौण्ड्रकं शौरिः काशिराजञ्च सानुगम् ।
पुनर्द्वारवतीं प्राप्तो रेमे स्वर्गगतो यथा ॥२७॥
तच्छिरः पतितं दृष्ट्वा तत्र काशिपतेः पुरे ।
जनः किमेतदित्याह केनत्यत्यन्तविस्मितः ॥२८॥
ज्ञात्वा तं वासुदेवेन हतं तस्य सुतस्ततः ।
पुरोहितेन सहितस्तोषयामास शङ्करम् ॥२९॥
अविमुक्ते महाक्षेत्रे तोषितस्तेन शङ्करः ।
वरं वृणीष्वेति तदा तं प्रोवाच नृपात्मजम् ॥३०॥
स वव्रे भगवान् कृत्या पितृहन्तुर्वधाय मे ।
समुत्तिष्ठतु कृष्णस्य त्वत्प्रसादान्महेश्वर ॥३१॥

## पराशर उवाच

एवं भविष्यतीत्युक्तै दक्षिणाग्नेरनन्तरम् ।
महाकृत्या समुत्तस्थौ तस्यैवाग्नेर्विनाशिनी ॥३२॥
ततो ज्वालाकरालास्या ज्वलत्केशकलापिका ।
कृष्ण कृष्णेति कुपिता कृत्या द्वारवतीं ययौ ॥३३॥
तामवेक्ष्य जनस्त्रासविचल्लोचनो मुने ।
ययौ शरण्यं जगतां शरणं मधुसूदनम् ॥३४॥
काशिराजसुतेनेयमाराध्य वृषभध्वजम् ।
उत्पादिता महाकृत्येत्यवगम्याथ चक्रिणा ॥३५॥
जहि कृत्यामिमामुग्रां वह्निज्वालाजटालकाम् ।
चक्रमुत्सृष्टमक्षेषु क्रीडासक्तेन लीलया ॥३६॥
तदग्निमालाजटिलज्वालोद्गारातिभीषणाम् ।
कृत्यामनुजगामाशु विष्णुचक्रं सुदर्शनम् ॥३७॥
चक्रगतापविध्वस्ता कृत्या माहेश्वरी तदा ।
ननाश वेगिनी वेगात् तदप्यनुजगाम ताम् ॥३८॥
कृत्या वाराणसीमेव प्रविवेश त्वरान्विता ।
विष्णुचक्रप्रतिहतप्रभावा मुनिसत्तम ॥३९॥
ततः काशिबलं भूरि प्रमथानां तथा बलम् ।

समस्तशस्त्रस्त्रयुतं चक्रस्याभिमुखं ययौ ॥४०॥
शस्त्रास्त्रमोक्षचतुरं दग्ध्वा तद्बलमोजसा ।
कृत्यागर्भामशेषां तां दग्ध्वा वाराणसीं पुरीम् ॥४१॥
सभृद्भृत्यपौरान्तु साश्वमातङ्गमानवाम् ।
अशेषकौषकोष्ठां तां दुर्निरीक्ष्या सुरैरपि ॥४२॥
ज्वालापरिप्लुताशेषगृहप्राकारचत्वराम् ।
ददाह तद्धरेश्चक्रं सकलामेव तां पुरीम् ॥४३॥
अक्षीणामर्षमत्युग्रसाध्यसाधनसस्पृहम् ।
तच्चक्रं प्रस्फुरद्दीप्ति विष्णोरभ्याययौ करम् ॥४४॥

इति श्रीविष्णुपुराणे पञ्चमांशे चतुस्त्रिंशोऽध्यायः ॥३४॥

आदितः श्लोकानां समष्टचङ्काः-४,७६८+४४=४,८१२



## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥
## (कृष्णपुत्र शाम्बस्य विवाहः)

### मैत्रेय उवाच

भूय एवाहमिच्छामि बलभद्रस्य धीमतः ।
श्रोतु पराक्रमं ब्रह्मन् ! तन्ममाख्यातुमर्हसि ॥१॥
यमुनाकर्षणादीनि श्रुतानि भगवन्मया ।
तत् कथ्यतां महाभाग ! यदन्यत् कृतवान् बलः ॥२॥

### पराशर उवाच

मैत्रेय ! श्रूयतां कर्म्म यद् रामेणाभवत् कृतम् ।
अनन्तेनाप्रमेयेण शेषेणा धरणीभृता ॥३॥
दुर्योधनस्य तनयां स्वयंवरकृतक्षणाम् ।
बलादादत्तवान् वीरः शाम्बो जाम्बवतीसुतः ॥४॥
ततः क्रुद्धा महावीर्याः कर्णः दुर्योधनादयः ।
भीष्मग्रोणादयश्चैव बबुन्धर्युधि निर्जितम् ॥५॥
तच्छ्रुत्वा यादवाः सर्वे क्रोधं दुर्योधनादिषु ।
मैत्रेय ! चक्रुश्च ततो निहन्तु ते महोद्यमम् ॥६॥
तान् निवार्य्य बलः प्राह मदलोलाकुलाक्षरम् ।
मोक्ष्यन्ति ते मद्वचनाद् यास्याम्येको हि कौरवान् ॥७॥

### पराशर उवाच

बलदेवस्ततो गत्वा नगरं नागसाह्वयम् ।
बाह्येपवनमध्येऽभूद् न विवेश च तत्पुरम् ॥८॥
बलमागतमाज्ञाय भूपा दुर्योधनादयः ।
गामर्घ्यमुदकञ्चैव रामाय प्रत्यवेदयन् ॥९॥
गृहीत्वा विधिवत् सर्वं ततस्तानाह कौरवान् ।
आपयत्युग्रसेनः शाम्बमाशु विमुञ्चत ॥१०॥
ततस्ते तद्वचः श्रुत्वा भीष्मद्रोणादये द्विज ।

कर्णदुर्य्योधनाद्याश्च चुक्रुधर्द्विजसत्तम ॥११॥
ऊचुश्च कुपिताः सर्वे वाहूलीकाद्याश्च कौरवाः ।
अराज्यार्हं यदोर्वंशमवेक्ष्य मुसलायुधम् ॥१२॥
भो भोः ! किमेतद्भवता बलभद्रेरितं वचः ।
आज्ञां कुरुकुलोत्थानां यादवः कः प्रदास्यति ॥१३॥
उग्रसेनोऽपि यद्याज्ञां कौरवाणां प्रदास्यति ।
तदलं पाण्डुरच्छत्रैर्नृपयोग्यैर्विडम्बितैः ॥१४॥
तद्गच्छ बल ! पापाढ्यं शाम्बमन्यायचेष्टितम् ।
विमोक्ष्यामो न भवतो नोग्रसेनस्य शासनात् ॥१५॥
प्रणतिर्या कृतास्माकमार्याणां कुकुरान्धकैः ।
ननाम सा कृता केयमाज्ञा स्वामिनि भृत्यतः ॥१६॥
गर्वमारोपिता युयं समानासनभोजनैः ।
को दोषो भवतां नितिर्यत् प्रीत्या नावलोकिता ॥१७॥
अस्माभिरर्घो भवतो योऽयं बल ! निवेदितः ।
प्रेम्णैतन्नैतदस्माकं कुल्यं युष्मत्कुलोचितम् ॥१८॥

पराशर उवाच

इत्युक्त्वा कुरवः सर्वे न मुञ्चामो हरेः सुतम् ।
कृतैकनिश्चयास्तूर्णं विविशुर्गजसाह्वयम् ॥१९॥
मत्तःकोपेन चाघूर्णस्तदधिक्षेपजन्मना ।
उत्थाय पार्ष्ण्या वसुधां जघान स हलायुधः ॥२०॥
ततो विदारिता पृथ्वी पार्ष्णिघातान्महात्मनः ।
आस्फोटयामास तथा दिशः शब्देन पूरयन् ॥२१॥
स उवाचातिताम्राक्षो भ्रुकुटीकुटिलाननः ।
अहो मदापलेपोऽयमसाराणां दुरात्मनाम् ॥२२॥
कौरवाणां महापत्वमस्माकं किल कालजम् ।
उग्रसेनस्य ये नाज्ञां मन्यन्तेऽद्यापि लङ्घनम् ॥२३॥
आज्ञां प्रतीच्छेद्धर्म्मेण सह देवैः शचीपतेः ।
सदाध्यास्ते सुधर्म्मां तामुग्रसेनः शचीपतेः ॥२४॥
धिङ्मनुष्यशतोच्छिष्टे तुष्टिरेषां नृपासने ।
पारिजाततरोः पुष्पमञ्जरीर्वनिताजनः ॥२५॥

बिभर्ति यस्य भृत्यानां सोऽप्येषां न महीपतिः ।
समस्तभूभृतां नाथ उग्रसेनः स तिष्ठतु ॥२६॥
अद्य निष्कौरवामुर्वीं कृत्वा यास्यामि तत्पुरीम् ।
कर्णं दुर्योधनं द्रोणमद्य भीष्मं सवाह्लिकम् ॥२७॥
दुष्टान् दुःशासनादींश्च भूरिश्रवसमेव च ।
सोमदत्तं शलं भीममर्जुनं सयुधिष्ठिरम् ॥२८॥
यमजौ कौरवांश्चान्यान् हत्वा साश्वरथद्विपान् ।
वीरमादाय शाम्बञ्च सपत्नीकं ततः पुरीम् ॥
द्वारकामुग्रसेनादीन् गत्वा द्रक्ष्यामि बान्धवान् ॥२९॥
अथवा कौरवाधीनं समस्तैः कुरुभिः सह ।
भारावतरणे शीघ्रं देवराजेन चोदितः ॥
भागीरथ्यां क्षिपाम्याशु नगरं नागसाह्वयम् ॥३०॥

## पराशर उवाच

इत्युक्त्वा मदरक्ताक्षः कर्षणाधोमुखं हलम् ।
प्राकारवप्रे विन्यस्य चकर्ष मुषलायुधः ॥३१॥
आघूर्णितं तत् सहसा ततो वै हस्तिनापुरम् ।
दृष्ट्वा संक्षुब्धहृदयाश्चुक्रशुः सर्वकौरवाः ॥३२॥
राम ! राम ! महावाहो ! क्षम्यतां क्षम्यतां त्वया ।
उपसंह्रियतां कोपः प्रसीद मुषलायुध ॥३३॥
एष शाम्बः सपत्नीकस्तव निर्यातितो बल ।
अविज्ञातप्रभावाणां क्षम्यतामपराधिनाम् ॥३४॥

## पराशर उवाच

ततो निर्यातयामासुः शाम्बं पत्नीसमन्वितम् ।
निष्क्रम्य नगरात्तूर्णं कौरवा मुनिपुङ्गव ॥३५॥
भीष्मद्रोणकृपादीनां प्रणम्य वदतां प्रियम् ।
क्षान्तमेतन्मयेत्याह बलो बलवतां वरः ॥३६॥
अद्याप्याघूर्णिताकारं लक्ष्यते तत् पुरं द्विज ।
एष प्रवादो रामस्य बलशौर्योपलक्षणः ॥३७॥

**ततस्तु कौरवाः शाम्बं सम्पूज्य हलिना सह ।**
**प्रेषयामासुरुद्धाहधनभार्यासमन्वितम् ॥३८॥**

**इति श्रीविष्णुपुराणे पञ्चमांशे पञ्चत्रिंशोऽध्यायः ॥३५॥**

**आदितः श्लोकानां समष्ट्यङ्काः-४,८१२+३८=४,८५०**



## ॥ अथ षट्त्रिंशोऽध्यायः ॥
## (द्विविदवधः)

### पराशर उवाच

मैत्रेय ! श्रूयतां तस्य बलस्य बलशालिनः ।
कृतं यदन्यत्तेनाभूत्तदपि श्रूयतां द्विज ॥१॥
नरकस्यासुरेन्द्रस्य देवपक्षविरोधिनः ।
सुखाभवन्महावीर्यो द्विविदो नाम वानरः ॥२॥
वैरानुबन्धं बलवान् स चकार सुरान् प्रति ।
नरकं हतवान् कृष्णो बलदर्पसमन्वितम् ॥३॥
करिष्ये सर्वदेवानां तस्मादेतत्प्रतिक्रियाम् ।
यज्ञविध्वंसनं कुर्वन् मर्त्तलोकक्षयं तथा ॥४॥
ततो विध्वंसयामास यज्ञानज्ञानमोहितः ।
बिभेद साधुमर्यादां क्षयं चक्रे च देहिनाम् ॥५॥
ददाह च वनोद्देशान् पुरग्रामान्तराणि च ।
क्वचिच्च पर्वताक्षेपैर्ग्रामिदीन् समचूर्णयत् ॥६॥
शैलानुत्पाट्य तोयेषु मुमोचाम्बुनिधौ तथा ।
पुनश्चार्णवमध्यस्थः क्षोभयामास सागरम् ॥७॥
तेन विक्षोभितश्चब्धिरुद्वेलोऽजायत द्विज ।
प्लावयंस्तीरजान् ग्रामान् पुरादीनतिवेगवान् ॥८॥
कामरूपी महारूपं कृत्वा संस्थानशेषतः ।
लुण्ठन् भ्रमणसंमर्द्दैः सञ्चूर्णयति वानरः ॥९॥
तेन विप्रकृतं सर्वं जगदेतद्दुरात्मना ।
निः स्वाध्यायवषट्कारं मैत्रेयासीत् सुदुःखितम् ॥१०॥
एकदा रैवतोद्याने पपौ पानं हलायुधः ।
रेवती च महाभागा तथैवान्या वरस्त्रियः ॥११॥
उपगीयमानो विलसल्लनामौलिमध्यगः ।
रेमे यदुवरश्रेष्ठः कुवेर इव मन्दरे ॥१२॥
ततः स वानरोऽभ्येत्य गृहीत्वा सीरिणो हलम् ।
मुषलञ्च चकारास्य सम्मुखञ्च बिडम्बनम् ॥१३॥
तथैव योषितां तासां जहासाभिमुखं कपिः ।

पानपूर्णांश्च करकांपश्चिक्षेपाहत्य वै तदा ॥१४॥
ततः कोपपरीतात्मा भर्त्स्र्ययामास तं बलः ।
तथापि तमवाय चक्रे किलकिलाध्वनिम् ॥१५॥
ततः समुत्थाय बलो जग्राह मुषल रुषा ।
सोऽपि शैलशिलां भीमां जग्राह प्लवगोत्तमः ॥१६॥
चिक्षेप च स तां क्षिप्ता मुषलेन सहस्रधा ।
बिभेद यादवश्रेष्ठ : सा पपात महीतले ॥१७॥
आपतन्मुषलञ्चासौ समुल्लङ्घ्य प्लवङ्गमः ।
वेगेनागम्य रोषेण तलेनोरस्यताडयत् ॥१८॥
ततो बलेन कोपेन मुष्टिना मूर्ध्नि ताडितः ।
पपात रुधिरोद्गारी द्विविदः क्षीणजीवितः ॥१९॥
पतता तच्छरीरेण गिरेः शृङ्गमदीर्य्यत ।
मैत्रेय ! शतधा वज्रिवज्रेणेव हि ताडितम् ॥२०॥
पुष्पवृष्टिं ततो देवा रामस्योपरि चिक्षिपुः ।
प्रशशंसुस्तथाभ्येत्य साध्वेतत्ते महत् कृतम् ॥२१॥
अनेन दुष्टकपिना दैत्यपक्षोपकारिण ।
जगन्निराकृतं वीर ! दिष्ट्यासौ क्षयमागतः ॥२२॥
इत्युक्त्वा दिवमाजग्मुर्देवा हृष्टाः सगुह्यकाः ॥२३॥

### पराशर उवाच

एवंविधान्यनेकानि बलदेवस्य धीमतः ।
कर्माण्यपरिमेयाणि शेषस्य धरणीभृतः ॥२४॥

इति श्रीविष्णुपुराणे पञ्चमांशे षट्त्रिंशोऽध्यायः ॥३६॥



आदितः श्लोकानां समष्ट्यङ्काः-४,८५०+२४=४,८७४



## ॥ अथ सप्तत्रिंशोऽध्यायः ॥
## (ऋषिणां शापः, यदुवंविनाशः, भगवतः स्वधामप्रत्यावर्त्तनञ्च)

### पराशर उवाच

एवं दैत्यवधं कृष्णो बलदेवसहायवान् ।
चक्रे दुष्टक्षितीशानां तथैव जगतः कृते ॥१॥
क्षितेश्च भारं भगवान् फाल्गुनेन समं विभुः ।
अवतारयामास हरिः समस्ताक्षौहिणीवधात् ॥२॥
कृत्वा भारावतरणं भुवो हत्वाऽखिलान् नृपान् ।
शापव्याजेन विप्राणामुपसंहृतवान् कुलम् ॥३॥
उत्सृज्य द्वारकां कृष्णस्त्यक्त्वा मानुष्यमात्मभूः ।
सांशो विष्णुमयं स्थानं प्रविवेश पुनर्निजम् ॥४॥

### मैत्रेय उवाच

स विप्रशापव्याजेन सञ्जघ्ने स्वकुलं कथम् ।
कथञ्च मानुषं देहमुत्ससर्ज्ज जनार्द्दनः ॥५॥

### पराशर उवाच

विश्वामित्रस्तथा कण्वो नारदश्च महामुनिः ।
पिण्डारके महातीर्थे दृष्टा यदुकुमारकैः ॥६॥
ततस्ते यौवनोन्मत्ता भाविकार्य्यप्रचोदिताः ।
शाम्बं जाम्बवतीपुत्रं भूषयित्वा स्त्रीयं यथा ॥७॥
प्रसृतांस्तान्मुनीनूचुः प्रणिपातपुरः सरम् ।
इयं स्त्री पुत्रकामस्य बभ्रोः किं जनयिष्यति ॥८॥

### पराशर उवाच

दिव्यानोपपन्नास्ते विप्रलब्धाः कुमारकैः ।
मुनयः कुपिताः प्रोचुर्मुषलं जनयिष्यति ॥

येनाखिलकुलोत्सादो यादवानां भविष्यति ॥९॥
इत्युक्तास्तैः कुमारास्ते आचचक्षुर्यथाकृतम् ।
उग्रसेनाय मुसलं जज्ञे शाम्बस्य चोदरात् ॥१०॥
तदुग्रसेनो मुसलमयश्चूर्णामकारयत् ।
जे स चैरकाश्चूर्णः प्रक्षिप्तस्तैमहोदधौ ॥११॥
मुसलस्याथ लोहस्य चूर्णितस्यान्धकैर्द्विज ।
खण्डं चूर्णयितुं शेकुनैकं ते तोमराकृति ॥१२॥
तदप्यम्बुनिधौ क्षिप्तं मत्स्यो जग्राह घातिभिः ।
घातितस्योदरात् तस्य लुब्धो जग्राह तं जरा ॥१३॥
विज्ञातपरमार्थोऽपि भगवान् मधुसूदनः ।
नैच्छत्तदन्यथाकर्त्तुं विधिना यत् समीहितम् ॥१४॥
देवैश्च प्रहितो दूतः प्रणिपत्याह केशवम् ।
रहस्येवमहं दूतः प्रहितो भगवन् सुरैः ॥१५॥
विश्वाश्विमरुदादित्यरुद्रसाध्यादिभिः सह ।
विज्ञापयति यच्छक्रस्तदिदं श्रूयतां प्रभो ॥१६॥
भारावतारणार्थाय वर्षाणामधिकं शतम् ।
भगवानवतीर्णोऽत्र त्रिदशैः सम्प्रसादितः ॥१७॥
दुर्वृत्ता निहता दैत्या भुवो भारोऽवतारितः ।
त्वया सनाथास्त्रिदशा भवन्तु त्रिदिवे पुनः ॥१८॥
तदतीतं जगन्नाथ वर्षाणामधिकं शतम् ।
इदानीं गम्यतां स्वर्गो भवता यदि रोचते ॥१९॥
देवैर्विज्ञाप्यते चेदमथात्रैव रतिस्तव ।
तत् स्थीयतां यथाकालमाख्येयमनुजीविभिः ॥२०॥

श्रीभगवानुवाच

यत्त्वमात्थाखिलं दूत वेदयेतदहमप्युत ।
प्रारब्ध एव हि मया यादवानामपि क्षयः ॥२१॥
भुवो नाद्यापि भारोऽयं यादवैरनिवर्हितैः ।
अवतार्य्य करोम्येतत् सप्तरात्रेण सत्वरः ॥२२॥
यथा गृहीतामम्भोधेर्दत्त्वाहं द्वारकाभुवम् ।
यादवानुपसंहृत्य यास्यामि त्रिदिवालयम् ॥२३॥

मनुष्यदेहमुत्सृज्य सङ्कर्षणसहायवान ।
प्राप्त एवास्मि मन्तव्यो देवेन्द्रण तथा सुरैः ॥२४॥
जरासन्धादयो येऽन्ये निहता भारहेतवः ।
क्षितेस्तेभ्यः कुमारोऽपि यदूनां नापचीयते ॥२५॥
तदेनं सुमहाभारमवतार्य्य क्षितेरहम् ।
यास्याम्यमरलोकस्य पालनाय ब्रवीहि तान् ॥२६॥

पराशर उवाच

इत्युक्तो वासुदेवेन देवदूतः प्रणम्य तम् ।
मैत्रेय दिव्यया गत्या देवराजान्तिकं ययौ ॥२७॥
भगवानप्यथोत्पातान् दिव्यभौमान्तरीक्षगान् ।
ददर्श द्वारकापुर्य्यां विनाशाय दिवानिशम् ॥२८॥
तान् दृष्ट्वा यादवानाह पश्यध्वमतिदारुणान् ।
महोत्पातान् शमायैषां प्रभासं याम मा चिरम् ॥२९॥

पराशर उवाच

एवमुक्ते तु कृष्णेन यादवप्रवरस्ततः ।
महाभगावतः प्राह प्रणिपत्योद्धवो हरिम् ॥३०॥
भगवन् यन्मया कार्य्यं तदाज्ञापय साम्प्रतम् ।
मन्ये कुलमिदं सर्वं भगवान् संहरिष्यति ॥
नाशायास्य निमित्तानि कुलस्याच्युत लक्षये ॥३१॥

श्रीभगवानुवाच

गच्छ त्वं दिव्यया गत्या मत्प्रसादसमुत्थया ।
वदरीमाश्रमं पुण्यं गन्धमादनपर्वते ॥३२॥
नरनारायणस्थाने तत्पावितमहीतले ।
मन्मना मत्प्रसादेन तत्र सिद्धिमवाप्स्यसि ॥३३॥
अहं स्वर्गं गमिष्यामि उपसंहृत्य वै कुलम् ।
द्वारकाञ्च मया त्यक्तां समुद्रः प्लावयिष्यति ॥३४॥

## पराशर उवाच

इत्युक्तः प्रणिपत्यैनं जगामाथ तदोद्धवः ।
नरनारायणस्थानं केशवेनानुमोदितः ॥३५॥
ततस्ते यादवाः सर्वे रथानारुह्य शीघ्रगान् ।
प्रभासं प्रययुः सार्द्धं कृष्णरामादिभिर्द्विज ॥३६॥
प्राप्य प्रययुः प्रयताः स्नातास्ते कुकुरान्धकाः ।
चक्रुस्तत्र सुरापानं वासुदेवानुमोदिताः ॥३७॥
पिबतां तत्र वै तेषां संघर्षेण परस्परम् ।
अतिवादेन्धनो जज्ञे कलहाग्निः क्षयावहः ॥३८॥
जघ्नुः परस्परं ते तु शस्त्रैर्दैवबलात् कृताः ।
क्षीणशस्त्राश्च जगृहुः प्रत्यासन्नामथैरकाम् ॥३९॥
एरका तु गृहीता तैर्वज्रभूतेव लक्ष्यते ।
तया परस्परं जघ्नुः सम्प्रहारे सुदारुणे ॥४०॥
प्रद्युम्नशाम्बप्रमुखाः कृतवर्माथ सात्यकिः ।
अनिरुद्धादयश्चान्ये पृथुर्विपृथुरेव च ॥४१॥
चारुवर्मा चारुकश्च तथाक्रूरादयो द्विज ।
एरकारूपिभिर्वज्रैस्ते निजघ्नुः परस्परम् ॥४२॥
निवारयामास हरिर्यादवांस्ते च केशवम् ।
सहायं मेनिरे प्राप्तं ते निजघ्नुः परस्परम् ॥४३॥
कृष्णोऽपि कुपितस्तेषामेरकामुष्टिमाददे ।
वधाय सोऽपि मुसलं मुष्टिर्लोहोऽभवत्तदा ॥४४॥
जघान तेन निःशेषान् यादवानाततायिनः ।
जघ्नुश्च सहसाभ्येत्य तथान्ये च परस्परम् ॥४५॥
ततश्चार्णवमध्येन जैत्रोऽसौ चक्रिणो रथः ।
पश्यतो दारुकस्याशु हृतोऽश्वैर्द्विजसत्तम ॥४६॥
चक्र तथा गदा शार्ङ्ग तूणौ शङ्खोऽसिरेव च ।
प्रदक्षिणं हरिं कृत्वा जग्मुरादित्यवर्त्मना ॥४७॥
क्षणेन नाभवत् कश्चिद् यादवानामघातितः ।
ऋते कृष्णां महाबाहुं दारुकञ्च महामुने ॥४८॥
चङ्क्रम्यमाणौ तौ रामं वृक्षमूलकृतासनम् ।
ददृशाते मुखाच्चास्य निष्क्रामन्तं महोरगम् ॥४९॥

निष्क्रम्य स मुखात्तस्य महाभोगो भुजङ्गमः ।
प्रययावर्णवं सिद्धैः स्तूयमानस्तथोरगैः ॥५०॥
ततोऽर्घ्यमादाय तदा जलधिः सम्मुखं ययौ ।
प्रविवेश च तत्तोयं पूजितः पन्नगोत्तमैः ॥५१॥
दृष्ट्वा बलस्य निर्याणां दारुकं प्राह केशवः ।
इदं सर्वं त्वमाचक्ष्व वसुदेवोग्रसेनयोः ॥५२॥
निर्याणं बलभद्रस्य यादवानां तथा क्षयम् ।
योगे स्थित्वाहमप्येतं परित्यक्षे कलेवरम् ॥५३॥
वाच्यश्च द्वारकावासिजनः सर्वस्तथाहुकः ।
यथेमां नगरीं सर्वां समुद्रः प्लावयिष्यति ॥५४॥
तस्माद्भवद्भिः सर्वैस्तु प्रतीक्ष्यो ह्यर्ज्जुनागमः ।
न स्थेयं द्वारकामध्ये निष्क्रान्ते तत्र पाण्डवे ॥५५॥
तेनैव सह गन्तव्यं यत्र याति स कौरवः ।
गत्वा च ब्रूहि कौन्तेयमर्ज्जुनं वचनान्मम ॥५६॥
पालनीयस्त्वया शक्त्या जनोऽयं मत्परिग्रहः ।
इत्यर्ज्जुनेन सहितो द्रारवत्या भवान् जनम् ॥
गृहीत्वा यातु वज्रश्च यदुराज्येऽभिषिच्यताम् ॥५७॥

पराशर उवाच

इत्युक्तो दारुकः कृष्णां प्रणिपत्य पुनः पुनः ।
प्रदक्षिणञ्च बहुशः कृत्वा प्रायाद् यथोदितम् ॥५८॥
स गत्वा च तथा चक्रे द्वारकायां तथार्ज्जुनम् ।
आनिनाय महाबुद्धिर्वज्रं चक्रे तथा नृपम् ॥५९॥
भगवानपि गोविन्दो वासुदेवात्मकं परम् ।
ब्रह्मात्मनि समारोप्य सर्वभूतेष्वधारयत् ॥६०॥
सम्मानयन् द्विजवचो दुर्वासा यदुवाच ह ।
योगयुक्तोऽभवत् पादं कृत्वा जानुनि सत्तमः ॥६१॥
आययौ च जरानाम स तदा तत्र लुब्धकः ।
मुसलावशेषलोहसायकन्यस्ततोमरः ॥६२॥
स तं पादं मृगाकारमवेक्ष्यारादवस्थितः ।
तले विव्याध तेनैव तोमरेण द्विजोत्तम ॥६३॥

गतश्च ददृशे तत्र चतुर्बाहुधरं नरम् ।
प्रणिपत्याह चैवैनं प्रसीदेति पुनः पुनः ॥६४॥
अजानता कृतमिदं यदा हरिणशङ्कया ।
क्षम्यतामात्मपापेन दग्धं मा दग्धुमर्हसि ॥६५॥

पराशर उवाच

ततस्तं भगवानाह न तेऽस्ति भयमण्वपि ।
गच्छ त्वं मत्प्रसादेन लुब्ध स्वर्गे सुरालयम् ॥६६॥
विमानमागतं सद्यस्तद्वाक्यसमनन्तरम् ।
आरुह्यं प्रययौ स्वर्गं लुब्धकस्तत्प्रसादतः ॥६७॥
गते तस्मिन् स भगवान् संयोज्यात्मानमात्मनि ।
ब्रह्मभूतेऽव्ययेऽचिन्त्ये वासुदेवमयेऽमले ॥६८॥
अजन्मन्यजरेऽनाशिन्यप्रमेयेऽखिलात्मनि ।
तत्याज मानुषं देहमतीत्य त्रिविधां गतिम् ॥६९॥

इति श्रीविष्णुपुराणे पञ्चमांशे सप्तत्रिंशोऽध्यायः ॥३७॥



आदितः श्लोकानां समष्ट्यङ्काः-४,८७४+६९=४,९४३





## ॥ अथाष्टत्रिंशोऽध्यायः ॥
## (यादवानामन्त्येष्टिसंस्कारः, परीक्षितो राज्याभिषेकः, पाण्डवानां वनगमनञ्च)

### पराशर उवाच

अर्ज्जुनोऽपि तदान्विष्य कृष्णरामकलेवरे ।
संस्कारं लम्भयामास तथान्येषामनुक्रमात् ॥१॥
अष्टौ महिष्यः कथिता रुक्मिणीप्रमुखास्तु याः ।
उपगुह्य हरेर्देहं विविशुस्ता हुताशनम् ॥२॥
रेवती चैव रामस्य देहमाश्लिष्य सत्तम ।
विवेश ज्वलितं वह्निं तत्सङ्गाह्लादशीतलम् ॥३॥
उग्रसेनस्तु तच्छ्रुत्वा तथैवानकदुन्दुभिः ।
देवकी रोहिणी चैव विविशुर्जातवेदसम् ॥४॥
ततोऽर्ज्जुनः प्रेतकार्यं कृत्वा तेषां यथाविधि ।
निश्चक्राम जनं सर्वं गृहीत्वा वज्रमेव च ॥५॥
द्वारवत्या विनिष्क्रान्ताः कृष्णपत्न्यः सहस्रशः ।
वज्रं जनञ्च कौन्तेयः पालयञ्छनकैर्ययौ ॥६॥
सभा सुधर्म्मा कृष्णेन मर्त्यलोके समुज्झिते ।
स्वर्गं जगाम मैत्रेय पारिजातश्च पादपः ॥७॥
यस्मिन् दिने हरिर्यातो दिवं सन्त्यज्य मेदिनीम् ।
तस्मिन्नेवावतीर्णोऽयं कालकायो बली कलिः ॥८॥
प्लावयामास तां शून्यां द्वारकाञ्च महोदधिः ।
यदुदेवगृहं त्वेकं नाप्लावयत सागरः ॥९॥
नातिक्रान्तुमलं ब्रह्मंस्तदद्यापि महोदधिः ।
नित्यं सन्निहितस्तत्र भगवान् केशवो यतः ॥१०॥
तदतीव महत् पुण्यं सर्वपातकनाशनम् ।
विष्णुक्रीडान्वितस्थानं दृष्ट्वा पापात् प्रमुच्यते ॥११॥
पार्थःपञ्चनदे देशे धनधान्यसमन्विते ।
चकार वासं सर्वस्य जनस्य मुनिसत्तम ॥१२॥
ततो लोभः समभवद्दस्यूनां निहतेश्वराः ।
दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन धन्विना ॥१३॥
ततस्ते पापकर्माणो लोभोपहतचेतसः ।

आभीरा मन्त्रयामासुः समेत्यात्यन्तदुर्म्मदाः ॥१४॥
अयमेकोऽर्ज्जुनो धन्वी स्त्रीजनं निहतेश्वरम् ।
नयत्यस्मानतिक्रम्य धिगेतद्भवतां बलम् ॥१५॥
हत्वा गर्वसमारूढो भीष्मद्रोणजयद्रथान् ।
कर्णादींश्च न जानाति बलं ग्रामनिवासिनाम् ॥१६॥
हे हे यष्टीर्महायामा गृह्णीतायं सुदुर्म्मतिः ।
सर्वानेवावजानाति किं वो बाहुभिरुन्नतैः ॥१७॥
ततो यष्टिप्रहरणा दस्यवो लोष्टहारिणः ।
सहस्रशोऽभ्यधावन्त तं जनं निहतेश्वरम् ॥१८॥
ततो निवृत्य कौन्तेयः प्राहाभीरान् हसन्निव ।
निवर्त्तध्वमधर्म्मज्ञा यदि न स्थ मुमूर्षवः ॥१९॥
अवज्ञाय वचस्तस्य जगृहुस्ते तदा धनम् ।
स्त्रीजनञ्चैव मैत्रेय विष्वक्सेनपरिग्रहम् ॥२०॥
ततोऽर्ज्जुनो धनुर्द्दिव्यं गाण्डीवमजरं युधि ।
आरोपितुं समारेभे न शशाक स वीर्यवान् ॥२१॥
चकार सज्यं कृच्छ्राच्च तच्चाभूच्छिथिलं पुनः ।
न सस्मार तथास्त्राणि चिन्तयन्नपि पाण्डवः ॥२२॥
शरान्मुमोच वै तेषु पार्थो वैरिष्वमर्षितः ।
त्वग्भेदं ते परं चक्रुरस्ता गाण्डीवधन्वना ॥२३॥
वह्निना येऽक्षया दत्ताः शरास्तेऽपि क्षयं ययुः ।
युध्यत सह गोपालैरर्ज्जुनस्य भवक्षये ॥२४॥
अचिन्तयच्च कौन्तेयः कृष्णस्यैव हि तद्बलम् ।
यन्मया शरसङ्घातैः सकला भूभुजो जिताः ॥२५॥
मिषतः पाण्डुपुत्रस्य ततस्ताः प्रमदोत्तमाः ।
आभीरैरपकृष्यन्त्यः कामाच्चान्या प्रवव्रजुः ॥२६॥
ततः शरेषु क्षीणेषु धनुष्कोटया धनञ्जयः ।
जघान दस्यूंस्ते चास्य प्रहारान् जहसुर्मुने ॥२७॥
प्रेक्षतश्चैव पार्थस्य वृष्ण्यन्धकवरस्त्रियः ।
जग्मुरादाय ते म्लेच्छाः सम्मता मुनिसत्तम ॥२८॥
ततः सुदुःखितो जिष्णुः कष्टं कष्टमिति ब्रुवन् ।
अहो भगवता तेन मुषितोऽस्मि रुरोद ह ॥२९॥
तद्धनुस्तानि चास्त्राणि स रथस्ते च वाजिनः ।

सर्वमेकपदे नष्टं दानमश्रोत्रिये यथा ॥३०॥
अहोऽतिबलवद्दैवं विना तेन महात्मना ।
यदसामर्थ्ययुक्तेऽपि नीचवर्गे जयप्रदम् ॥३१॥
तौ बाहू स च मे मुष्टिः स्थानं तत् सोऽस्मि चार्ज्जुनः ।
पुण्येनैव विना तेन गतं सर्वमसारताम् ॥३२॥
ममार्ज्जुनत्वं भीमस्य भीमत्वं तत्कृतं ध्रुवम् ।
विना तेन यदाभीरैर्जितोऽहं कथमन्यथा ॥३३॥
इत्यं वदन् ययौ जिष्णुर्मथुराख्यं पुरोत्तमम् ।
चक्रार तत्र राजानं वज्रं यादवनन्दनम् ॥३४॥
स ददर्श ततो व्यासं फाल्गुनः काननाश्रयम् ।
तमुपेत्य महाभागं विनयेनाभ्यवादयत् ॥३५॥
तं वन्दमानं चरणाववलोक्य मुनिश्चिरम् ।
उवाच पार्थ विच्छायः कथमत्यन्तमीदृशः ॥३६॥
अवीरजोऽनुगमनं ब्रह्महत्याथवा कृता ।
दृढाशाभङ्गदुःखी वा भ्रष्टच्छायोऽसि साम्प्रतम् ॥३७॥
सान्तानिकादयो वा ते याचमाना निराकृताः ।
अगम्यस्त्रीरतिर्वा त्वं तेनासि विगतप्रभः ॥३८॥
भुक्तोऽप्रदाय विप्रेभ्य एको मिष्टमथी भवान् ।
किं वा कृष्णावित्तानि हृतानि भवतार्ज्जुन ॥३९॥
कच्चित्त्वं शूर्पवातस्य गोचरत्वं गतोऽर्ज्जुन ।
दुष्टचक्षुर्हतो वापि निःश्रीकः कथमन्यथा ॥४०॥
स्पृष्टो नखाम्भसा चाथ घटाम्भः प्रोक्षितोऽपि वा ।
तेनातीवासि विच्छायो न्यूनैर्वा युधि निर्ज्जितः ॥४१॥
ततः पार्थो विनिःश्वस्य श्रूयतां भगवन्निति ।
प्रोक्त्वा यथावदाचष्ट व्यासायात्मपराभवम् ॥४२॥

अर्जुन उवाच

यद्बलं यच्च नस्तेजो यद्वीर्यं यत्पराक्रम ।
या श्रीश्छाया च नः सोऽस्मान् परित्यज्य गतो हरः ॥४३॥
इतरेणैव महता स्मितपूर्वाभिभाषिणा ।
हीना वयं मुने तेन जातास्तृणमया इव ॥४४॥

अस्त्राणां सायकानाञ्च गाण्डीवस्य तथा मम ।
सारता याभवन् मूलं स गतः पुरुषोत्तमः ॥४५॥
यस्याङ्गवलोकनादस्मान् श्रीर्जयः सम्पदुन्नतिः ।
न तत्याज स गोविन्दस्त्यक्त्वास्मान् भगवान् गतः ॥४६॥
भीष्मद्रोणाङ्गराजाद्यास्तथा दुर्योधनादयः ।
यत्प्रभावेण निर्दग्धाः स कृष्णस्त्यक्तवान् भुवम् ॥४७॥
निर्यौवनहतश्रीका भ्रष्टच्छायेव मेदिनी ।
विभाति तात नैकोऽहं विरहे तस्य चक्रिणः ॥४८॥
यस्यानुभावाद् भीष्माद्यैर्मयग्नौ शलभायितम् ।
विना तेनाद्य कृष्णेन गोपालैरस्मि निर्ज्जितः ॥४९॥
गण्डीवं त्रिषु लोकेषु ख्यातिं यदनुभावतः ।
गतं तेन विनाभीरलगुडैस्तन्निराकृतम् ॥५०॥
स्त्रीसहस्राण्यनेकानि मन्नाथानि महामुने ।
यततो मम नीतानि दस्युभिर्लगुडायुधैः ॥५१॥
आनीयमानमार्भीरैः कृष्ण कृष्णावरोधनम् ।
हृतं यष्टिप्रहरणैः परिभूय बलं मम ॥५२॥
निःश्रीकान्ता न मे चित्रं यजीवामि तदद्भुतम् ।
न चावमानपङ्काङ्की निर्लज्जोऽस्मि पितामह ॥५३॥

व्यास उवाच

अलं ते व्रीडया पार्थ न त्वं शोचितुमर्हसि ।
अवेहि सर्वभूतेषु कालस्य गतिरीदृशी ॥५४॥
कालो भवाय भूतानामभवाय च पाण्डव ।
कालमूलमिदं ज्ञात्वा भव स्थैर्यधनोऽर्ज्जुन ॥५५॥
नद्यः समुद्रा गिरयः सकला च वसुन्धरा ।
देवा मनुष्याः पशवस्तरवः ससरीसृपाः ॥५६॥
सृष्टाः कालेन कालेन पुनर्यास्यन्ति संक्षयम् ।
कालात्मकमिदं सर्वं ज्ञात्वा शममवाप्नुहि ॥५७॥
यच्चाह कृष्णमाहात्म्यं तत्तथैव धनञ्जय ।
भारावतारकार्यार्थमवतीर्णः स मेदिनीम् ॥५८॥
भाराक्रान्ता धरा याता देवानां समितिं पुरा ।

तद्द्वारमवतीर्णोऽसौ कालरूपी जनार्द्दनः ॥५९॥
तच्च निष्पादितं कार्यमशेषा भुभृतो हताः ।
वृष्ण्यन्धककुलं सर्वं तथा पार्थोपसंहृतम् ॥६०॥
न किञ्चिदन्यत् कर्त्तव्यमस्य भूमितले प्रभोः ।
अतो गतः स भगवान् कृतकृत्यो यथेच्छया ॥६१॥
सृष्टिं सर्गे करोत्येष देवदेवः स्थितौ स्थितिम् ।
अन्तेऽन्ताय समर्थोऽयं साम्प्रतं हि यथाकृतम् ॥६२॥
तस्मात् पार्थं न सन्तापस्त्वया कार्यः पराभवात् ।
भवन्ति भवकालेषु पुरुषाणां पराक्रमाः ॥६३॥
त्वयैकेन हता भीष्मद्रोणकर्णादयो नृपाः ।
तेषामर्ज्जुन कालोत्थः किं न्यूनाबिभवो न सः ॥६४॥
विष्णोस्तथानुभावेन यथा तेषां पराभवः ।
ततस्तथैव भवतो दस्युभ्योऽन्ते तदुद्भवः ॥६५॥
स देवोऽन्यशरीराणि समाविश्य जगत्स्थितिम् ।
करोति सर्वभूतानां नाशं चान्ते जगत्पतिः ॥६६॥
भवोद्भवे च कौन्तेय सहायोऽभूज्जनार्द्दनः ।
भवान्ते त्वद्विपक्षास्ते केशवेनावलोकिताः ॥६७॥
कः श्रद्दध्यात् सगाङ्गेयान् हन्यास्त्वं सर्वकौरवान् ।
आभीरेभ्यश्च भवतः कः श्रद्दध्यात् पराभवम् ॥६८॥
पार्थैतत् सर्वभूतस्य हरेर्लीलाविचेष्टितम् ।
त्वया यत् कौरवा ध्वस्ता यदाभीरैर्भवान् जितः ॥६९॥
गृहीता दस्युभिर्याश्च भवतः शोचिताः स्त्रियः ।
तदप्यहं यथावृत्तं कथयामि तवार्ज्जुन ॥७०॥
अष्टावक्रः पुरा विप्रो जलवासरतोऽभवत् ।
बहून् वर्षगणान् पार्थ गृणन् ब्रह्म सनातनम् ॥७१॥
जितेष्वसुरसङ्घेषु मेरुपृष्ठे महोत्सवः ।
बभूव तत्र गच्छन्त्यो ददृशुस्तं वरस्त्रियः ॥७२॥
रम्भातिलोत्तमाद्याश्च शतशोऽथ सहस्रशः ।
तुष्टुवुस्तं महात्मानं प्रशशंसुश्च पाण्डव ॥७३॥
आकण्ठमग्नं सलिले जटाभारधरं मुनिम् ।
विनयावनताश्चैनं प्रणेमुः स्तोत्रतत्पराः ॥७४॥
यथा यथा प्रसन्नोऽसौ तुष्टुवुस्तं तथा तथा ।

सर्वास्ताः कौरवश्रेष्ठ वरिष्ठं तं द्विजन्मनाम् ॥७५॥

अष्टावक्र उवाच

प्रसन्नोऽहं महाभागा भवतीनां यदिष्यते ।
मत्तस्तद्व्रियतां सर्वं प्रदास्याम्यतिदुर्लभम् ॥७६॥
रम्भातिलोत्तमाद्यास्तं वैदिक्योऽप्सरसोऽब्रु वन् ।
प्रसन्ने त्वय्यपर्याप्तं किमस्माकमिति द्विज ॥७७॥
इतरास्त्वब्रुवन् विप्र प्रसन्नो भगवान् यदि ।
तदिच्छामः पतिं प्राप्तुं विप्रेन्द्र पुरुषोत्तमम् ॥७८॥

व्यास उवाच

एवं भविष्यतीत्युक्त्वा उत्ततार जलान्मुनिः ।
ददृशुस्तास्तमुत्तीर्णं विरूपं वक्रमष्टधा ॥७९॥
तं दृष्ट्वा गूहमानानां यासां हासः स्फुटोऽभवत् ।
ताः ! शशाप मुनिः कोपमवाप्य कुरुनन्दन ॥८०॥
यस्माद्विरूपरूपं मां ज्ञात्वा हासावमानना ।
भवतीभिः कृता तस्मादेष शापं ददामि वः ॥८१॥
मत्प्रसादेन भर्त्तारं लब्ध्वा तं पुरुषोत्तमम् ।
मच्छापोपहताः सर्वा दस्युहस्तं गमिष्यथ ॥८२॥
इत्युदीरितमाकर्ण्य मुनिस्ताभिः प्रसादितः ।
पुनः सुरेन्द्रलोकं वै प्राह भूयो गमिष्यथ ॥८३॥
एवं तस्य मुनेः शापादष्टावक्रस्य केशवम् ।
भर्त्तारं प्राप्य ता दस्युहस्तं याता वराङ्गनाः ॥८४॥
तत्त्वया नात्र कर्त्तव्यः शोकोऽल्पोऽपि हि पाण्डव ।
तेनैवाखिलनाथेन सर्वं तदुपसंहृतम् ॥८५॥
भवतां चोपसंहारमासन्नं तेन कुर्वता ।
बलं तेजस्तथ वीर्यं माहात्म्यं चोपसंहृतम् ॥८६॥
जातस्य नियतो मृत्युः पतनञ्च तथोन्नतेः ।
विप्रयोगावसानश्च संयोगः सञ्चयात् क्षयः ॥८७॥
विज्ञाय न बुधाः शोकं न हर्षमुपयान्ति ये ।

तेषामेवेतरे चेष्टां शिक्षन्तः सन्ति तादृशाः ॥८८॥
तस्मात्त्वया नरश्रेष्ठ ज्ञात्वैतद् भ्रातृभिः सह ।
परित्यज्याखिलं तन्त्रं गन्तव्यं तपसं वनम् ॥८९॥
तद् गच्छ धर्मराजाय निवेद्यतैद् वचो मम ।
परश्वो भ्रातृभिः सार्द्धं यथा यासि तथा कुरु ॥९०॥

## पराशर उवाच

इत्युक्तोऽभ्येत्य पार्थाभ्यां यमाभ्याञ्च तथार्ज्जुनः ।
दृष्टं चैवानुभूतञ्च कथितं तेष्वशेषतः ॥९१॥
व्यासवाक्यञ्च ते सर्वे श्रुत्वार्ज्जुनसमीरितम् ।
राज्ये परीक्षितं कृत्वा यतुः पाण्डुसुता वनम् ॥९२॥
इत्येतत् तव मैत्रेय विस्तरेणा मयोदितम् ।
जातस्य यद् यदोर्वंशे वासुदेवस्य चेष्टितम् ॥९३॥

इति श्रीविष्णुपुराणे पञ्चमांशे अष्टत्रिंशोऽध्यायः ॥३८॥

आदितः श्लोकानां समष्ट्यङ्काः-४,९४३+९३=५,०३६

॥ पञ्चमांश सम्पूर्णः ॥

अध्यायानामादितः समष्ट्यङ्काः-८०+३८=११८



## ॥ अथ षष्ठांशः ॥
## ॥ अथ प्रथमोऽध्यायः ॥
## (कलिधर्मनिरूपणम्)

मैत्रेय उवाच

व्याख्याता भवता सर्गवंशमन्वन्तरस्थितिः ।
वंशानुचरितश्चैव विस्तरेण महामुने ॥१॥
श्रोतुमिच्छाम्यहं त्वत्तो यथावदुपसंहृतिम् ।
महाप्रलयसंस्थानं कल्पान्ते च महामुने ॥२॥

पराशर उवाच

मैत्रेय श्रूयतां मत्तो यथावदुपसंहृतिः ।
कल्पान्ते प्राकृते चैव प्रलयो जायते यथा ॥३॥
अहोरात्रं पितृणान्तु मासोऽब्दस्त्रिदिवौकसाम् ।
चतुर्युगसहस्रे तु ब्रह्मणो द्वे द्विजोत्तम ॥४॥
कृतं त्रेता द्वापरश्च कलिश्चैव चतुर्युगम् ।
दिव्यैर्वर्षसहस्रैस्तु तद् द्वादशभिरुच्यते ॥५॥
चतुर्युगाण्यशेषाणि सदृशानि स्वरूपतः ।
आद्यं कृतयुगं मुक्त्वा मैत्रेयान्ते तथा कलिम् ॥६॥
आद्ये कृतयुगो सर्गो ब्रह्मणा क्रियते यतः ।
क्रियते चोपसंहारस्तथान्ते च कलौ युगे ॥७॥

मैत्रेय उवाच

कलेः स्वरूपं भगवन् विस्तराद् वक्तुमर्हसि ।
धर्म्मश्चतुष्पाद्भवन् यस्मिन् विप्लवमृच्छति ॥८॥

पराशर उवाच

कलेः स्वरूपं मैत्रेय यद्भवान् प्रष्टुमिच्छति ।

तन्निबोध समासन्नं वर्त्तते यन्महामुने ॥९॥
वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम् ।
नसामऋग्यजुर्वेदविनिष्पादनहेतुका ॥१०॥
विवाहा न कलौ धर्म्या न शिष्यगुरुसंस्थितिः ।
न दाम्पत्यक्रमो नैव वह्निदैवात्मकः क्रमः ॥११॥
यत्र तत्र कुले जातो बली सर्वेश्वरः कलौ ।
सर्वेभ्य एव वर्णेभ्यो योग्यः कन्यावरोधने ॥१२॥
येन कैनैव योगेन द्विजातिर्दीक्षितः कलौ ।
यैरसैव च मैत्रेय प्रायश्चित्तक्रिया कलौ ॥१३॥
सर्वमेव कलौ शास्त्रं यस्य यदद्वचनं द्विज ।
देवाताश्च कलौ सर्वाः सर्वः सर्वस्य चाश्रमः ॥१४॥
उपवासस्तथायासो वित्तोत्सर्गस्तथा कलौ ।
धर्मो यथाभिरुचितैरनुष्ठानैरनुष्ठितः ॥१५॥
वित्तेन भविता पुंसां स्वल्पेनाढ्यमदः कलौ ।
स्त्रीणां रूपमदश्चैव केशैरेव भविष्यति ॥१६॥
सुवर्णमणिरत्नादौ वस्त्रे चापि क्षयं गते ।
कलौ स्त्रियो भविष्यन्ति तदा केशैरलङ्कृताः ॥१७॥
परित्यक्षन्ति भर्त्तारं वित्तहीनं तथा स्त्रियः ।
भर्ता भविष्यति कलौ वित्तवानेव योषिताम् ॥१८॥
यो यो ददाति बहुलं स स स्वामी तदा नृणाम् ।
स्वामित्वहेतुः सम्बन्ध भावी नाभिजनस्तदा ॥१९॥
गृहान्ता द्रव्यसङ्घाता द्रव्यान्ता च तथा मतिः ।
अर्थाश्चात्मोपभोगान्ता भविष्यन्ति कलौ युगे ॥२०॥
स्त्रियः कलौ भविष्यन्ति स्वैरिण्यो ललितस्पृहाः ।
अन्यायावाप्तवित्तेषु पुरुषाश्च स्पृहालवः॥२१॥
अभ्यर्थितोऽपि सुहृदा स्वार्थहानिं न मानवः ।
पणार्द्धार्द्धमात्रेऽपि करिष्यति तदा द्विज ॥२२॥
समानं पौरुषञ्चेतो भावि विप्रेषु वै कलौ ।
क्षीरप्रदानसम्बन्धि भावि गोषु च गौरवम् ॥२३॥
अनावृष्टिभयप्रायाः प्रजाः क्षुद्भयकातराः ।
भविष्यन्ति तदा सर्वा गगनासक्तदृष्टयः ॥२४॥
कन्दपर्णफलाहारास्तापसा इव मानवाः ।

आत्मानं पातयिष्यन्ति तदा वृष्ट्यादिदुःखिताः ॥२५॥
दुर्भिक्षमेव सततं तदा क्लेशमनीश्वराः ।
प्राप्स्यन्ति व्याहतसुखप्रमोदा मानवाः कलौ ॥२६॥
अस्नानभोजिनो नाग्निदेवतातिथिपूजनम् ।
करिष्यन्ति कलौ प्राप्ते न च पित्र्योदकक्रियाम् ॥२७॥
लोलुपा ह्रस्वदेहाश्च वह्वन्नादनतत्पराः ।
बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः ॥२८॥
उभाभ्यामेव पाणिभ्यां शिरः कण्डूयनं स्त्रियः ।
कुर्वन्त्यो गुरुभर्त्तृणामाज्ञां भेत्स्यन्त्यनादृताः ॥२९॥
स्वपोषणपराः क्षुद्रा देहसंस्कारवर्ज्जिताः ।
परुषानृतभाषिण्यो भविष्यन्ति कलौ स्त्रियः ॥३०॥
दुःशीला दुष्टशीलेषु कुर्वन्त्यः सततं स्पृहाम् ।
असद्वृत्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः ॥३१॥
वेदादानं करिष्यन्ति वटवश्च तदाव्रताः ।
गृहस्थाश्च न होष्यन्ति न दास्यन्त्युचितान्यपि ॥३२॥
वनावासा भविष्यन्ति ग्राम्याहारपरिग्रहाः ।
भिक्षवश्चापि मित्रादिस्नेहसम्बन्धयन्त्रिताः ॥३३॥
अरक्षितारो हर्त्तारः शुल्कव्याजेन पार्थिवाः ।
हारिणो जनवित्तानां सम्प्राप्ते तु कलौ युगे ॥३४॥
यो योऽश्वरथनागाढ्यः स स राजा भविष्यति ।
यश्च यश्चाबलः सर्वः स स भृत्यः कलौ युगे ॥३५॥
वैश्याः कृषिवाणिज्यादि सन्त्यज्य निजकर्म यत् ।
शूद्रवृत्त्या प्रवत्स्यन्ति कारुकर्मोपजीविनः ॥३६॥
भैक्ष्यव्रतास्तथा शूद्रा प्रव्रज्यालिङ्गिनोऽधमाः ।
पाषण्डसंश्रयाः वृत्तिमाश्रयिष्यन्त्यसंस्कृताः ॥३७॥
दुर्भिक्षाकरपीडाभिरतीवोपहता जनाः ।
गवेधुककदन्नाद्यान् देशान् यास्यन्ति दुःखिताः ॥३८॥
वेदमार्गे प्रलीने च पाषण्डाढ्ये ततो जने ।
अधर्मवृद्ध्या लोकानां स्वल्पमायुर्भविष्यति ॥३९॥
अशास्त्रविहित्तं घोरं तप्यमानेषु वै तपः ।
नरेषु नृपदोषेण बालमृत्युर्भविष्यति ॥४०॥
भवित्री योषितां सूतिः पञ्चषट्सप्तवार्षिकी ।

नवाष्टदशवर्षाणां मनुष्याणां तथा कलौ ॥४१॥
पालितोद्भवश्च भविता तदा द्वादशवार्षिकः ।
नातिजीवति वै कश्चित् कलौ वर्षाणि विंशतिम् ॥४२॥
अल्पप्रज्ञा वृथालिङ्गा दुष्टान्तः करणाः कलौ ।
यतस्ततो विनङ्क्ष्यन्ति कालेनाल्पेन मानवाः ॥४३॥
यदा यदा हि पाषण्डवृद्धिर्मैत्रेय लक्ष्यते ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥४४॥
यदा यदा सतां हानिर्वेदमार्गानुसारिणाम् ।
प्रारम्भाश्चावसीदन्ति यदा धर्म्मभृतां नृणाम् ॥
तदानुमेयं प्राधान्यं कलेर्मैत्रेय पण्डितैः ॥४५॥
यदा यदा न यज्ञानामीश्वरः पुरुषोत्तमः ।
इज्यते पुरुषैर्यज्ञैस्तदा ज्ञेयं कलेर्बलम् ॥४६॥
न प्रीतिर्वेदवादेषु पाषण्डेषु यदा रतिः ।
कलेर्वृद्धिस्तदा प्राज्ञैरनुमेया विचक्षणैः ॥४७॥
कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ।
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता नराः ॥४८॥
कि वेदैः किं द्विजैर्देवैः किं शौचेनाम्बुजन्मना ।
इत्येवं विप्र वक्ष्यन्ति पाषण्डोपहता नराः ॥४९॥
स्वल्पाम्बुवृष्टिः पर्ज्जन्यः शस्यं स्वल्पफल तथा ।
फलं तथाल्पसारञ्च विप्र प्राप्ते कलौ युगे ॥५०॥
शाणीप्रायाणि वस्त्राणि शमीप्राया महीरुहाः ।
शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे ॥५१॥
अणुप्रायाणि धान्यानि अजाप्रायं तथा पयः ।
भविष्यति कलौ प्राप्ते उषीरञ्चानुलेपनम् ॥५२॥
श्वश्रूश्वशूरभूयिष्ठा गुरवश्च नृणां कलौ ।
श्यालाद्या हारिभार्याश्च सुहृदो मुनिसत्तम ॥५३॥
कस्य माता पिता कस्य यदा कर्म्मानुगः पुमान् ।
इति चोदाहरिष्यन्ति श्वशुरानुगेता नराः ॥५४॥
वाङ्मनः कायिकैर्दोषैरभिभूताः पुनः पुनः ।
नराः पापान्यनुदिनं करिष्यन्त्यल्पमेधसः ॥५५॥
निः सत्त्वानामशौचानां निःश्रीकाणां तथा नृणाम् ।
यद्यद्दुःखाय यत् सर्वं कलिकाले भविष्यति ॥५७॥

निःस्वाध्यायवषट्कारे स्वधास्वाहाविवर्जिते ।
तथा प्रविरलो विप्र क्वचिल्लोको निवत्स्यति ॥५७॥
तत्राल्पेनैव यत्नेन पुण्यस्कन्धमनुत्तमम् ।
करोति यं कृतयुगे क्रियते तपसा हि सः ॥५८॥

इति श्रीविष्णुपुराणे षष्ठांशे प्रथमोऽध्यायः ॥१॥

आदितः श्लोकानां समष्ट्यङ्काः-५,०३६+५८=५,०९४



## ॥ अथ द्वितीयोऽध्यायः ॥
## (वेदव्यासेन कलियुगस्य, शूद्राणाम्, स्त्रियाञ्च महत्व वर्णनम्)

### पराशर उवाच

व्यासश्चाह महाबुद्धिर्यदत्रैव हि वस्तुनि ।
तच्छ्रूयतां महाभाग गदतो मम तत्त्वतः ॥१॥
कस्मिन् कालेऽल्पको धर्म्मो ददाति सुमहत् फलम् ।
मुनीनामित्यभूद्वादः कैश्चासौ क्रियते सुखम् ॥२॥
सन्देहनिर्णयार्थाय वेदव्यासं महामुनिम् ।
ययुस्ते संशयं प्रष्टुं मैत्रेय मुनिपुङ्गवाः ॥३॥
ददृशुस्ते मुनिं तत्र जाह्नवीसलिले द्विजाः ।
वेदव्यासं महाभागमर्द्धस्नातं महामतिम् ॥४॥
स्नानावसानं तत्तस्य प्रतीक्षन्तो महर्षय ।
तस्थस्तटे महानद्यास्तरुषण्डमुपाश्रिताः ॥५॥
मग्नोऽथ जाह्नवीतोयादुत्थायाह सुतो मम ।
कलिः साधुः कलिः साधुरित्येवं श्रृण्वतां वचः ॥६॥
तेषां मुनीनां भूयश्च ममज्ज स नदीजले ।
उत्थाय साधु साध्विति शूद्र धन्योऽसि चाब्रवीत् ॥७॥
स निमग्नः समुत्थाय पुनः प्राह महामुनिः ।
योषितः साधुधन्यास्तास्ताभ्यो धन्यतरोऽस्ति कः ॥८॥
ततः स्नात्वा यथान्यायमायान्तं कृतसत्क्रियम् ।
उपतस्थुर्महाभागं मुनयस्ते सुतं मम ॥९॥
कृतसंवन्दनाश्चाह कृतासनपरिग्रहान् ।
किमर्थमागता यूयमिति सत्यवतीसुतः ॥१०॥
तमूचुः संशयं प्रष्टुं भवन्तं वयमागताः ।
अल तेनास्तु तावन्नः कथ्यतामपरं त्वया ॥११॥
कलिः साध्विति यत् प्रोक्तं शूद्रः साध्विति योषितः ।
यदाह भगवान् साधु धन्याश्चेति पुनः पुनः ॥१२॥
तत् सर्वं श्रोतुमिच्छामो न चेद् गुह्यं महामुने ।
तत् कथ्यतां ततो हृत्स्थं प्रक्ष्यामस्त्वां प्रयोजनम् ॥१३॥
इत्युक्तो मुनिभिर्व्यासः प्रहस्येदमथाब्रवीत् ।

श्रूयतां भो मुनिश्रेष्ठा यदुक्तं साधु साध्विति ॥१४॥
यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन यत् ।
द्वापरे यच्च मासेन अहोरात्रेण तत् कलौ ॥१५॥
तपसो ब्रह्मचर्य्यस्य जपादेश्च फलं द्विजाः ।
प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम् ॥१६॥
ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्त्य केशवम् ॥१७॥
धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ ।
अल्पायासेन धर्म्मज्ञास्तेन तुष्टोऽस्म्यहं कलेः ॥१८॥
व्रतचर्य्यापरैर्ग्राह्यो वेदः पूर्वं द्विजातिभिः ।
ततः स्वधर्म्मसम्प्राप्तैर्यष्टव्यं विधिनाध्वरैः ॥१९॥
वृथा कथा वृथाभोज्यं वृथेज्या च द्विजन्मनाम् ।
पतनाय तथा भाव्यं तैस्त्वसंयमिभिः सदा ॥२०॥
असम्यक्करणे दोषस्तेषां सर्वेषु कर्मसु ।
भोज्यपेयादिकञ्चैषां नेच्छाप्राप्तिकरं द्विजाः ॥२१॥
पारतन्त्र्यं समस्तेषु तेषां कार्य्येषु वै ततः ।
जयन्ति ते निजात् लोकान् क्लेशेन महता द्विजाः ॥२२॥
द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् ।
निजान् जयति वै लोकाञ्छूद्रो धन्यतरस्ततः ॥२३॥
भक्ष्याभक्ष्येषु नास्यास्ति पेयापेये वै यतः ।
नियमो मुनिशार्द्दूलास्तेनासौ साध्वितीरितः ॥२४॥
स्वधर्म्मस्याविरोधेन नरैर्लब्धं धनं सदा ।
प्रतिपादनीयं पात्रेषु यष्टव्यञ्च यथाविधि ॥२५॥
तस्यार्ज्जने महाक्लेशः पालने च द्विजोत्तमाः ।
तथा सद्विनियोगाय विज्ञेयं गहनं नृणाम् ॥२६॥
एभिरन्यैस्तथा क्लेशैः पुरुषा द्विजसत्तमाः ।
निजान् जयन्ति वै लोकान्प्राजापत्यादिकान्क्रमात् ॥२७॥
योषिच्छुश्रूषणं भर्तुः कर्म्मणा मनसा गिरा ।
कुर्वतो समवाप्नोति तत्सालोक्यं यतो द्विजाः ॥२८॥
नातिक्लेशेन महता तानेव पुरुषो यथा ।
तृतीयं व्याहृतं तेन मया साध्विति योषितः ॥२९॥
एतद्वः कथितं विप्रा यन्निमित्तमिहागताः ।

तत्पृच्छध्वं यथाकामं सर्वं वक्ष्यामि वः स्फुटम् ॥३०॥

## पराशर उवाच

ततस्ते मुनयः प्रोचुर्यत्प्रष्टव्यं महामुने ।
अन्यस्मिन्नेव तत्पुष्टे यथावत्कथितं त्वया ॥३१॥
ततः प्रहस्य तान् प्राह कृष्णद्वैपायनो मुनिः ।
विस्मयोत्फुल्लनयनांस्तापसांस्तानुपागतान् ॥३२॥
मयैष भवतां प्रश्नो ज्ञातो दिव्येन चक्षुषा ।
तता हि वः प्रसङ्गेन साधु साध्विति भाषितम् ॥३३॥
स्वल्पेनैव प्रयत्नेन धर्म्मः सिध्यति वै कलौ ।
नरैरात्मगुणाम्भोभिः क्षालिताखिलकिल्विषैः ॥३४॥
शूद्रैश्च द्विजशुश्रूषातत्परैर्मुनिसत्तमाः ।
तथा स्त्रीभिरनायासं पतिशुश्रूषयैव हि ॥३५॥
ततस्त्रितमयप्येतन्मम धन्यतमं मतम् ।
धर्मसंसाधने क्लेशो द्विजातीनां कृतादिषु ॥३६॥
भवद्भिर्यदभिप्रेतं तदेतत् कथितं मया ।
अपृष्टेनापि धर्मज्ञाः किमन्यत् कथ्यतां द्विजाः ॥३७॥
ततः सम्पूज्य ते व्यासं प्रशस्य च पुनः पुनः ।
यथागतं द्विजा जग्मुर्व्यासोक्तिक्षतसंशयाः ॥३८॥
भवतोऽपि महाभाग ! रहस्यं कथितं मया ॥३९॥
अत्यन्तदुष्टस्य कलेरयमेको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥४०॥
यच्चाहं भवता पृष्टो जगतामुपसंहृतिम् ।
प्राकृतामान्तरालाञ्च तामप्येष वदामि ते ॥४१॥

इति श्रीविष्णुपुराणे षष्ठांशे द्वितीयोऽध्यायः ॥२॥



आदितः श्लोकानां समष्ट्यङ्काः-५,०९४+४१=५,१३५



## ॥ अथ तृतीयोऽध्यायः ॥
## (निमेषदिकालमानस्य नैमित्तिकप्रलयस्य च वर्णनम्)

### पराशर उवाच

सर्वेषामेव भूतानां त्रिविधः प्रितसञ्चरः ।
नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको मतः ॥१॥
ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसञ्चरः ।
आत्यन्तिकश्च मोक्षाख्यः प्राकृतो द्विपरार्द्धिकः ॥२॥

### मैत्रेय उवाच

परार्द्धसंख्यां भगवन् ! ममाचक्ष्व यया तु सः ।
द्विगुणीकृतया येः प्राकृतः प्रतिसञ्चरः ॥३॥

### पराशर उवाच

स्थानात् स्थानं दशगुणमेकस्माद् गण्यते द्विज ।
ततोऽष्टादशमे स्थाने परार्द्धमभिधीयते ॥४॥
परार्द्धद्विगुणं यत्तु प्राकृतः प्रलयो द्विज ।
तदाव्यक्तेऽखिलं व्यक्तं स्वहेतौ लयमेति वै ॥५॥
निमेषो मानुषो योऽयं मात्रामात्रप्रमाणतः ।
तैः पञ्चदशभिः काष्ठा त्रिंशत् काष्ठास्तथा कलाः ॥६॥
नाडिका तु प्रमाणेन कला दश च पञ्च च ।
उन्मानेनाम्भसः सा तु पलान्यर्द्धत्रयोदश ॥७॥
हेममाषैः कृतिच्छिद्रश्चतुर्भिश्चतुरङ्गुलैः ।
मागधेन प्रमाणेन जलप्रस्थस्तु स स्मृतः ॥८॥
नाडिकाभ्यामथ द्वाभ्यां मुहूर्त्तो द्विजसत्तम ।
अहोरात्रं मुहूर्त्तास्तु त्रिंशन्मासो दिनैस्तथा ॥९॥
मासैर्द्वादशभिर्वर्षैमहोरात्रन्तु तद्दिवि ।
त्रिभिर्वर्षशतैर्वर्षं षष्ट्या चैवासुरद्विषाम् ॥१०॥
तैस्तु द्वादशसाहस्त्रं चतुर्युगमुदाहृतम् ।

चतुर्युगसहस्रन्तु कथ्यते ब्रह्मणो दिनम् ॥११॥
स कल्पोऽप्यत्र मनवश्चतुर्द्दश महामुने ।
तदन्ते चैव मैत्रेय ! ब्राह्मो नैमित्तिको लयः ॥१२॥
तस्य स्वरूपमत्युग्रं मैत्रेय गदतो मम ।
श्रृणुष्व प्राकृतं भूयस्तव वक्ष्याम्यहं लयम् ॥१३॥
चतुर्युगसहस्रान्ते क्षीणप्राये महीतले ।
अनावृष्टिरतीवोग्रा जायते शतवार्षिकी ॥१४॥
ततो यान्यल्पसाराणि तानि तत्त्वान्यशेषतः ।
क्षयं यान्ति मुनिश्रेष्ठ ! पार्थिवान्यत्र पीडनात् ॥१५॥
ततः स भगवान् विष्णू रुद्ररूपधरोऽव्ययः ।
क्षयाय यतते कर्त्तुमात्मस्थाः सकलाः प्रजाः ॥१६॥
ततः स भगवान् विष्णुर्भानोः सप्तसु रश्मिषु ।
स्थितः पिबत्यशेषाणि जलानि मुनिसत्तम ॥१७॥
पीत्वाम्भांसि समस्तानि प्राणिभूमिगतानि वै ।
शोषं नयति मैत्रय ! समस्तं पृथिवीतलम् ॥१८॥
सरित्समुद्रशैलेषु शैलप्रस्रवणेषु च ।
पातालेषु च यत्तोयं तत्सर्वं नयति क्षयम् ॥१९॥
ततस्तस्यानुभावेन तोयाहारोपबृंहिताः ।
त एव रश्मयः सप्त जायन्ते सप्त भास्कराः ॥२०॥
अधश्चोर्ध्वञ्च ते दीप्तास्ततः सप्त दिवाकराः ।
दहन्त्यशेषं त्रैलोक्यं सपातालतलं द्विज ॥२१॥
दह्यमानन्तु तैर्दीप्तैस्त्रैलोक्यं द्विज ! भास्करैः ।
साद्रिनद्यर्णावाभोगं निःस्नेहमति जायते ॥२२॥
ततो निर्दग्धवृक्षाम्बु त्रैलोक्यमखिल द्विज ।
भवत्येका च वसुधा कूर्मपृष्ठोपमाकृतिः ॥२३॥
ततः कालाग्निरुद्रोऽसौ भूत्वा सर्वहरो हरिः ।
शेषनिःश्वाससम्भूतः पातालानि बभस्त्यधः ॥२४॥
पातालानि समस्तानि स दग्ध्वा ज्वलनो महान् ।
भूमिमभ्येत्य सकलं बभस्ति वसुधातलम् ॥२५॥
भुवर्लोकं ततः सर्वं स्वर्लोकञ्च सुदारुणः ।
ज्वालामालामहावर्तस्तत्रैव परिवर्त्तते ॥२६॥
अम्बरीषमिवाभाति त्रैलोक्यमखिलं तदा ।

ज्वालावर्त्तपरीवारमुपक्षीणचराचरम् ॥२७॥
ततस्तापपरीतास्तु लोकद्वयनिवासिनः ।
कृताधिकारा गच्छन्ति महर्लोकं महामुने ॥२८॥
तस्मादपि महातापतप्ता लोकास्ततः परम् ।
गच्छन्ति जनलोकं ते दशावृत्या परैषिणः ॥२९॥
ततो दग्ध्वा जगत् सर्वं रुद्ररूपी जनार्द्दनः ।
मुखनिःश्वासजान् मेघान् करोति मुनिसत्तम ॥३०॥
ततो गजकुलप्रख्यास्तडित्वन्तो निनादिनः ।
उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्त्तका घनाः ॥३१॥
केचिन्नीलोतूपलश्यामाः केचित्कुमुदसन्निभाः ।
धूमवर्णा घनाः केचित् केचित् पीताः पयोधराः ॥३२॥
केचिद्रासभवर्णाभा लाक्षारसनिभास्तथा ।
केचिद्वैदूर्य्यसङ्काशा इन्द्रनीलनिभाः परे ॥३३॥
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभास्तथा ।
इन्द्रगोपनिभाः केचिन्मनः शिलनिभास्तथा ॥३४॥
चाषपत्रनिभाः केचिदुत्तिष्ठन्ति घना घनाः ।
केचित् पुरवराकाराः केचित् पर्वतसन्निभाः ॥३५॥
कूटागारनिभाश्चान्ये केचित् स्थूलनिभा घनाः ।
महारावा महाकायाः पूरयन्ति नभस्तलम् ॥३६॥
वर्षन्तस्ते महासारैस्तमग्निमतिभैरवम् ।
शमयन्त्यखिलं विप्र ! त्रैलोक्यान्तरविस्तृतम् ॥३७॥
नष्टे चाग्नौ शतं तेऽपि वर्षाणामनिवारिताः ।
प्लावयन्तो जगत् सर्वं वर्षन्ति मुनिसत्तम ॥३८॥
धाराभिरक्षमात्राभिः प्लावयित्वाखिलं भुवम् ।
भुवर्लोकं तथैवोर्द्ध्वं प्लावयन्ति दिवं द्विज ॥३९॥
अन्धरारीकृते लोके नष्टे स्थावरजङ्गमे ।
वर्षन्ति ते महामेघा वर्षाणामधिकं शतम् ॥४०॥

इति श्रीविष्णुपुराणे षष्ठांशे तृतीयोऽध्यायः ॥३॥



आदितः श्लोकानां समष्ट्यङ्काः-५,१३५+४०=५,१७५



## ॥ अथ चतुर्थोऽध्यायः ॥
## (प्राकृतप्रलयवर्णनम्)

### पराशर उवाच

सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि महामुने ।
एकार्णवं भवत्येव त्रैलोक्यमखिलं ततः ॥१॥
मुखनिःश्वासजो विष्णोर्वायुस्तान् जलदांस्ततः ।
नाशयित्वा तु मैत्रेय ! वर्षाणामधिकं शतम् ॥२॥
सर्वभूतमयोऽचिन्त्यो भगवान् भूतभावनः ।
अनादिरादिर्विश्वस्य पीत्वा वायुमशेषतः ॥३॥
एकार्णवे ततस्तस्मिन् शेषशय्यास्थितः प्रभुः ।
ब्रह्मरूपधरः शेते भगवानादिकृद्धरिः ॥४॥
जनलोकगतैः सिद्धैः सनकाद्यैरभिष्टुतः ।
ब्रह्मलोकगतैश्चैव चिन्त्यमानो मुमुक्षुभिः ॥५॥
आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः ।
आत्मानं वासुदेवाख्यं चिन्तयन् परमेश्वरः ॥६॥
एष नैमित्तिको नाम मैत्रेय ! प्रतिसञ्चरः ।
निमित्तं तत्र यच्छेते ब्रह्मरूपधरो हरिः ॥७॥
यदा जागर्त्ति विश्वात्मा स तदा चेष्टते जगत् ।
निमीलत्येतदखिलं योगशय्याशयेऽच्युते ॥८॥
पद्मयोनेर्दिनं यत्तु चतुर्युगसहस्रवत् ।
एकार्णावाप्लुते लोके तावती रात्रिरिष्यते ॥९॥
ततः प्रबुद्धो रात्र्यन्ते पुनः सृष्टिं करोत्यजः ।
ब्रह्मस्वरूपधृग् विष्णुर्यथा ते कथितं पुरा ॥१०॥
इत्येष कल्पसंहारश्चान्तरः प्रलयो द्विज ।
नैमित्तिकस्ते कथितः प्राकृतः श्रृण्वतः परम् ॥११॥
अनावृष्ट्याग्निसम्पर्कात् कृते संक्षालने मुने ।
समस्तेष्वेव लोकेषु पातालेष्वखिलेषु च ॥१२॥
महदादेर्विकारस्य विशेषान्तस्य संक्षये ।
कृष्णेच्छाकारिते तस्मिन् प्रवृत्ते प्रतिसञ्चरे ॥१३॥
आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणाम् ।

आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते ॥१५॥
प्रनष्टे गन्धतन्मात्रेऽभवत् पृथ्वी जलात्मिका ।
रसाज्जलं समुद्भूतं तस्माज्जातं रसात्मकम् ॥१५॥
आपस्तदा प्रवृद्धास्तु वेगवत्यो महास्वनाः ।
सर्वमापूरयन्तीदं तिष्ठन्ति विचरन्ति च ॥
सलिलेनैवोर्म्मिमता लोका व्याप्ताः समन्ततः ॥१६॥
अपामपि गुणो यस्तु ज्योतिषा पीयते तु सः ।
नश्यन्त्यापस्ततस्ताश्च रसतन्मात्रसंक्षयात् ॥१७॥
ततश्चापो हृतरसा ज्योतिष्ट्वं प्राप्नुवन्ति वै ।
अग्न्यवस्थे तु सलिले तेजसा सर्वतो वृते ॥१८॥
स चाग्निः सर्वतो व्याप्त आदत्ते तज्जलं तदा ।
सर्वमापूर्य्य तेजोभिस्तदा जगदिदं शनैः ॥१९॥
अर्च्चिर्भिः संवृते तस्मिन् तिर्य्यगूद्ध्र्वमधस्तथा ।
ज्योतिषोऽपि परं रूपं वायुरत्ति प्रभाकरम् ॥२०॥
प्रलीने च ततस्तस्मिन् वायुभूतेऽखिलात्मनि ।
प्रनष्टे रूपतन्मात्रे हृतरूपो विभावसुः ॥२१॥
प्रशाम्यति तदा ज्योतिर्वायुर्दोधूयते महान् ।
निरालोके तदा लोके वाय्वस्थे च तेजसि ॥२२॥
ततस्तु मूलमासाद्य वायुः सम्भवमात्मनः ।
ऊर्ध्वञ्चाधश्च तिर्य्यक् च दोधवीति दिशो दश ॥२३॥
वायारपि गुणं स्पर्शमाकाशो ग्रसते पुनः ।
प्रशाम्यति ततो वायुः खन्तु तिष्ठत्यनावृतम् ॥२४॥
अरूपमरसस्पर्शमगन्धं न च मूर्त्तिमत् ।
सर्वमापूरयच्चैतत् सुमहत् सम्प्रकाशते ॥२५॥
परिमण्डलं तच्छुषिरमाकाशं शब्दलक्षणम् ।
शब्दमात्रं तदाकाशं सर्वमावृत्य तिष्ठति ॥२६॥
ततः शब्दं गुणं तस्य भूतादिर्ग्रसते पुनः ।
भूतेन्द्रियेषु युगपद्भूतादौ संस्तितेषु वै ॥२७॥
अभिमानात्मको ह्येष भूतादिस्तामसः स्मृतः ।
भूतादिं ग्रसते चापि महान् वै वुद्धिलक्षणः ॥२८॥
उर्वी महांश्च जगतः प्रान्तेऽन्तर्बाह्यतस्तथा ॥२९॥
एवं सप्त महाबुद्धे ! क्रमात् प्रकृतयस्तु वै ।

प्रत्याहारे तु ताः सर्वाः प्रविशन्ति परस्परम् ॥३०॥
येनेदमावृतं सर्वमण्डमप्सु प्रलीयते ।
सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम् ॥३१॥
उदकावरणं यत्तु ज्योतिषा पीयते तु तत् ।
ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः ॥३२॥
आकाशश्चैव भूतादिर्ग्रसते तं तदा महान् ।
महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विज ॥३३॥
गुणसाम्यमनुद्रिक्तमन्यूनञ्च महामुने ।
प्रोच्यते प्रकृतिर्हेतुः प्रधानं काराण परम् ॥३४॥
इत्येषा प्रकृतिः सर्वा व्यक्ताव्यक्तस्वरूपिणी ।
व्यक्तस्वरूपमव्यक्ते तस्मिन् मैत्रेय ! लीयते ॥३५॥
एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान् ।
सोऽप्यंशः सर्वभूतस्य मैत्रेय ! परमात्मनः ॥३६॥
न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः ।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥३७॥
स ब्रह्म तत् परं धाम परमात्मा स चेश्वरः ।
स विष्णुः सर्वमेवेदं यतो नावर्त्तते यतिः ॥३८॥
प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयते परमात्मनि ॥३९॥
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुर्नाम्ना स वेदेषु वेदान्तेषु च गीयते ॥४०॥
प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म वैदिकम् ।
ताभ्यामुभाभ्यां पुरुषैः सर्वमूर्त्तिः स इज्यते ॥४१॥
ऋग्यजुःसामभिर्मार्गैः प्रवृत्तैरिज्यते ह्यसौ ।
यज्ञेश्वरो यज्ञपुमान् पुरुषैः पुरुषोत्तमः ॥४२॥
ज्ञानात्मा ज्ञानयोगेन ज्ञानमूर्त्तिः स चेज्यते ।
निवृत्ते योगिभिर्मार्गैर्विष्णुर्मुक्तिफलप्रदः ॥४३॥
ह्रस्वदीर्घप्लुतैर्यत्तु किञ्चिद्वस्त्वभियुज्यते ।
यच्च वाचामविषये तत्सर्वं विष्णुरव्ययः ॥४४॥
व्यक्तं स एव चाव्यक्तं स एव पुरुषोऽव्ययः ।
परमात्मा स विश्वात्मा विश्वरूपधरो हरिः ॥४५॥
व्यक्ताव्यक्तात्मिका तस्मिन् प्रकृतिः सम्प्रलीयते ।

पुरुषश्चापि मैत्रेय ! व्यापिन्यव्याहतात्मनि ॥४६॥
द्विपरार्द्धात्मकः कालः कथितो यो मया तव ।
तदहस्तस्य मैत्रेय ! विष्णोरीशस्य कथ्यते ॥४७॥
व्यक्ते च प्रकृतौ लीने प्रकृत्यां पुरुषे तथा ।
तत्र स्थिते निशा चान्या तत्प्रमाणा महामुने ॥४८॥
नैवाहस्तस्य न निशा नित्यस्य परमात्मनः ।
उपचारस्तथाप्येष तस्येशस्य द्विजोच्यते ॥४९॥
इत्येष तव मैत्रेय ! कथितः प्राकृतो लयः ।
आत्यन्तिकमितो ब्रह्मन्निबोध प्रतिसञ्चरम् ॥५०॥

इति श्रीविष्णुपुराणे षष्ठांशे चतुर्थोऽध्यायः ॥४॥



आदितः श्लोकानां समष्टयङ्काः-५,१७५+५०=५,२२५





## ॥ अथ पञ्चमोऽध्यायः ॥
## (आध्यात्मिकादित्रिविधतापवर्णनम्, भगवान् वासुदेवश्चेति शब्दद्वयस्य व्याख्या, भगवतः पारमार्थिकस्वरूपवर्णनञ्च)

### पराशर उवाच

आध्यात्मिकादि मैत्रेय ! ज्ञात्वा तापत्रयं बुधः ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥१॥
आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा ।
शारीरो बहुभिर्भेदैर्भिद्यते श्रुयताञ्च सः ॥२॥
शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः ।
गुल्मार्शः श्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥३॥
तथाक्षिरोगातीसार कुष्ठाङ्गामयसंज्ञकैः ।
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥४॥
कामक्रोधभयदोषलोभमोहविषादजः ।
शोकासूयावमानेर्ष्यामात्सर्य्यादिभवस्तथा ॥५॥
मानसोऽपि द्विजश्रेष्ठ ! तापो भवति नैकधा ।
इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥६॥
मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः ।
सरीसृपाद्यैश्च नृणां जन्यते चाधिभौतिकः ॥७॥
शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवः ।
तापो द्विजवरश्रेष्ठ ! कथ्यते चाधिदैविकः ॥८॥
गर्भजन्मजराज्ञानमृत्युनारकजं तथा ।
दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ॥९॥
सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते ।
उल्लसंवेष्टितो भुग्नपृष्ठग्रीवास्थिसंहतिः ॥१०॥
अत्यन्तकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः ।
अत्यन्ततापैरत्यर्थं वर्द्धमानातिवेदनः ॥११॥
प्रसारणाकुञ्चनादेर्नाङ्गनां प्रभुरात्मनः ।
शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः ॥१२॥
निरुच्छ्वासः सचैतन्यः स्मरन् जन्मशतान्यथ ।
आस्ते गर्भेऽतिदुःखेन निजकर्मनिबन्धनः ॥१३॥

जायमानः पुरीषाश्रृङ्मूत्रशुक्राविलाननः ।
प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः ॥१४॥
अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः ।
क्लेशौर्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः ॥१५॥
मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना ।
विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम ॥१६॥
कङ्कटैरिव तुन्नाङ्गः क्रकचैरिव दारितः ।
पूतिव्रणान्निपतितो धरण्यां कृमिको यथा ॥१७॥
कण्डूयने चाप्यशक्तः परिवर्त्तेऽप्यनीश्वरः ।
स्तन्यपानादिकाहारमवाप्नोति परेच्छया ॥१८॥
अशुचिः प्रस्तरे सुप्तः कीटदंशादिभिस्तथा ।
भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे ॥१९॥
जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि वै ।
बालभावे यदाप्नोति आधिभौतादिकानि च ॥२०॥
अज्ञानतमसाच्छन्नो मूढान्तः करणो नरः ।
न जानाति कुतः कोऽहं क्वाहं गन्ता किमात्मकः ॥२१॥
केन बन्धेन बद्धोऽहं कारणं किमकारणम् ।
किं कार्य्यं किमकार्य्यं वा किं वाच्यं किन्न वोच्यते ॥२२॥
कोऽधर्म्मः कश्च वै धर्मः कस्मिन् वर्त्तेत वा कथम् ।
किं कर्त्तव्यमकर्त्तव्यं किं वा किं गुणदोषवत् ॥२३॥
एवं पशुसमैर्मूढैरज्ञानप्रभवं महत् ।
अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः ॥२४॥
अज्ञानं तामसो भावः कार्यारम्भाः प्रवृत्तयः ।
अज्ञानिनां प्रवर्त्तन्ते कर्म्मलोपास्ततो द्विज ॥२५॥
नरकं कर्मणां लोपात् फलमाहुर्महर्षयः ।
तस्मादज्ञानिनां दुःखमिह चामुत्र चोत्तमम् ॥२६॥
जराजर्ज्जरदेहश्च शिथिलावयवः क्रमात् ।
विगलच्छीर्णदशनो बली स्नायुशिरावृतः ॥२७॥
दूरप्रनष्टनयनो व्योमान्तर्गततारकः ।
नासाविवरनिर्यातलोपपुञ्जश्चलद्वपुः ॥२८॥
प्रकटीकृतसर्वास्थिर्नतपृष्ठास्थिसंहतिः ।
उत्सन्नजठराग्नित्वादल्पाहारोऽल्पचेष्टितः ॥२९॥

कृच्छ्रचङ्क्रमणोत्थानशयनासनचेष्टितः ।
मन्दीभवच्छ्रोत्रनेत्रः स्रवल्लालाविलाननः ॥३०॥
अनायत्तैः समस्तैश्च करणैर्मरणोन्मुखः ।
तत्क्षणेऽप्यनुभूतानामस्मर्ताखिलवस्तुनाम् ॥३१॥
सकृदुच्चारिते वाक्ये समुद्भूतमहाश्रमः ।
श्वासः कासससमुद्भूतमहायासप्रजागरः ॥३२॥
अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी ।
भृत्यात्मपुत्रदाराणामवमानास्पदीकृतः ॥३३॥
प्रक्षीणाखिलशौचश्च विहाराहारसस्पृहः ।
हास्यः परिजनस्यापि निर्विण्णशेषबान्धवः ॥३४॥
अनुभूतमिवान्यस्मिन् जन्मन्यात्मविचेष्टितम् ।
संस्मरन् यौवने दीर्घ निःश्वस्त्यभितापितः ॥३५॥
एवमादीनि दुःखानि जरायामनुभूय वै ।
मरणे यानि दुः खानि प्राप्नोति श्रृणू तान्यपि ॥३६॥
श्लथग्रीवाङ्घ्रिहस्तोऽथ व्याप्तो वेपथुना भृशम् ।
मुहुर्ग्लानिपरवशो मुहुर्ज्ञानलवान्वितः ॥३७॥
हिरण्य-धान्य-तनय-भार्या-भृत्य-गृहादिषु ।
एते कथं भविष्यन्ति ममेति ममताकुलः ॥३८॥
मर्मभिद्भिर्महारोगैः क्रकचैरिव दारुणैः ।
शरैरिवान्तकस्योग्रै श्छिद्यमानास्थिबन्धनः ॥३९॥
विवर्त्तमानताराक्षि हस्तपादं मुहुः क्षिपन् ।
संशुष्यमाणताल्वोष्ठकण्ठो घुरघुरायते ॥४०॥
निरुद्धकण्ठो दीषैघैरुदानश्वासपीडितः ।
तापेन महता व्याप्तस्तृषा चार्त्तस्तथा क्षुधा ॥४१॥
क्लेशादुत्क्रान्तिमाप्नोति याम्यकिङ्करपीडितः ।
ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ॥४२॥
एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम् ।
श्रृणुष्य नरके यानि प्राप्यन्ते पुरुषैर्मृतैः ॥४३॥
याम्यकिङ्करपाशादिग्रहणं दण्दताडनम् ।
यमस्य दर्शनञ्चोग्रमुग्रमार्गविलोकनम् ॥४४॥
करम्भबालुकावह्नियन्त्रशस्त्रादिभीषणे ।
प्रत्येकं नरके याश्च यातना द्विज ! दुःसहाः ॥४५॥

क्रकचैः पीड्यमानानामूषायाञ्चापि धम्यताम् ।
कुठारैः कृत्यमानानां भूमौ चापि निखन्यताम् ॥४६॥
शूलेष्वारोप्यमाणानां व्याघ्रवक्त्रे प्रवेश्यताम् ।
गृघ्रः सम्भक्ष्यमाणानां द्वीपिभिश्चोपभुज्यताम् ॥४७॥
क्वाथ्यतां तैलमध्ये च क्लिश्यतां क्षारकर्द्दमैः ।
उच्चान्निपात्यमानानां क्षिप्यतां क्षेपयन्त्रकैः ॥४८॥
नरके यानि दुःखानि पापहेतूद्भवानि वै ।
प्राप्यन्ते नारकैर्विप्र ! तेषां संख्या न विद्यते ॥४९॥
न केवलं द्विजश्रेष्ठ नरके दुःखपद्धतिः ।
स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः ॥५०॥
पुनश्च गर्भे भवति जायते च पुनः पुनः ।
गर्भे विलीयते भूयो जायमानोऽस्तमेति च ॥५१॥
म्रियते जातमात्रश्च बालभावेऽथ यौवने ।
मध्यमं वा वयः प्राप्य वार्द्धके वा ध्रुवा मृति ॥५२॥
यावज्जीवति तावच्च दुःखैर्नानाविधैः प्लुतः ।
तन्तुकारणपक्ष्मौघैरास्ते कार्पासबीजवत् ॥५३॥
द्रव्यनाशे तथोत्पत्तौ पालने च तथा नृणम् ।
भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु ॥५४॥
यद्यत् प्रीतिकरं पुसां वस्तु मैत्रेय ! जायते ।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ॥५५॥
कलत्रपुत्रभृत्यादिगृहक्षेत्रधनादिकैः ।
क्रियते न तथा भूरि सुखं पुसां यथाऽसुखम् ॥५६॥
इति संसारदुःखार्कतापतापितचेतसाम् ।
विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् ॥५७॥
तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः ।
गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥५८॥
निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भैषज्यं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥५९॥
तस्मात् तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं महामुने ॥६०॥
आगमोत्थं विवेकोत्थं द्विधा ज्ञानं तथोच्यते ।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥६१॥

अन्धं तम इवाज्ञानं दीपवच्चेन्द्रियाद्भवम् ।
यथा सूर्यस्तथा ज्ञानं यद् विप्रर्षे ! विवेकजम् ॥६२॥
मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम ।
तदेतच्छ्रूयतामत्र सम्बन्धे गदतो मम ॥६३॥
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥६४॥
द्वे विद्ये वेदितव्ये वै इति चाथर्वणी श्रुतिः ।
परया त्वक्षरप्राप्तिऋग्वेदादिमयापरा ॥६५॥
यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूपञ्च पाणिपादाद्यसंयुतम् ॥६६॥
विभु सर्वगतं नित्य भूतयोनिमकारणम् ।
व्याप्तव्याप्तं यतः सर्वं तद्वै पश्यन्ति सूरयः ॥६७॥
तद् ब्रह्म परमं धाम तद् ध्येयं मोक्षकाङ्क्षिभिः ।
श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ॥६८॥
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ।
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥६९॥
एवं निगदितार्थस्य तत्तत्त्वं तस्य तत्त्वतः ।
ज्ञायते येन तज्ज्ञानं परमन्यत् त्रयमयम् ॥७०॥
अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ।
पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः ॥७१॥
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते ।
मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे ॥७२॥
सम्भर्त्तेति तथा भर्त्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुनि ॥७३॥
ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥७४॥
वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि ।
सर्वभूतेष्वशेषेषु वकारार्थस्ततोऽन्ययः ॥७५॥
एवमेष महाशब्दो भगवानिति सत्तम ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यतः ॥७६॥
तत्र पूज्यपदार्थोक्ति परिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारतः ॥७७॥

उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥७८॥
ज्ञान-शक्ति-बलैश्वर्य-वीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥७९॥
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥८०॥
खाण्डिक्यजनकायाह पृष्टः केशिध्वजः पुरा ।
नामव्याख्यामनन्तस्य वासुदेवस्य तत्त्वतः ॥८१॥
भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानि यत् ।
धाता विधाता जगतां वासुदेवस्ततः प्रभुः ॥८२॥
स सर्वभूतप्रकृतं विकारान् गुणांश्च दोषांश्च मुने ! व्यतीतः ।
अतीतसर्वारणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥८३॥
समस्तकल्याणगुणात्मको हि स्वशक्तिलेशावृतभूतवर्णः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥८४॥
तेजोबलैश्वर्यमहावबोधः स्ववीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परापरेशे ॥८५॥
स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपोऽप्रकटस्वरूपः ।
सर्वेश्वरः सर्वगः सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥८६॥
संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाप्यधिगम्यते वा तज्ज्ञानमानमतोऽन्यदुक्तम् ॥८७॥

इति श्रीविष्णुपुराणे षष्ठांशे पञ्चमोऽध्यायः ॥५॥



आदितः श्लोकानां समष्ट्यङ्काः-५,२२५+८७=५,३१२





## ॥ अथ षष्ठोऽध्यायः ॥
## (केशिध्वज खाण्डिक्ययोर्विवरणम्)

पराशर उवाच ॥

स्वाध्यायं संयमाभ्यां स दृश्यते पुरुषोत्तमः ।
तत्प्राप्तिकारणं ब्रह्म तदेतदिति चोच्यते ॥१॥
स्वाध्यायाद्योगमासीत योगात् स्वाध्यायमेव च ।
स्वाध्याय-योगसम्पत्त्या परमात्मा प्रकाशते ॥२॥
तदीक्षणाय स्वाध्यायश्चक्षुर्योगस्तथापरम् ।
न मांसचक्षुषा द्रष्टुं ब्रह्मभूतः स शक्यते ॥३॥

मैत्रेय उवाच

भगवंस्तमहं योगं ज्ञातुमिच्छामि तं वद ।
ज्ञाते यत्राखिलाधारं पश्येयं परमेश्वरम् ॥४॥

पराशर उवाच

यथा केशिध्वजः प्राह खाण्डिक्याय महात्मने ।
जनकाय पुरा योगं तथाहं कथयामि ते ॥५॥

मैत्रेय उवाच

खाण्डिक्यः कोऽभवद् ब्रह्मन् को वा केशिध्वजोऽभवत् ।
कथं तयोश्च संवादो योगसम्बन्धवानभूत् ॥६॥

पराशर उवाच

धर्मध्वजो वै जनकस्तस्य पुत्रो मितध्वजः ।
कृतध्वजश्च नाम्ना स सदाध्यात्मरतिर्नृपः ॥७॥
कृतध्वजस्य पुत्रोऽभूत् ख्यातः केशिध्वजो द्विजः ।

पुत्रो मितध्वजस्यापि खाण्डिक्यो जनकोऽभवत् ॥८॥
कर्ममार्गेऽति खाण्डिक्यः पृथिव्यामभवत् कृती ।
केशिध्वजोऽप्यतीवासीदात्मविद्याविशारदः ॥९॥
तावुभावपि खाण्डिक्यः विजिगीषू परस्परम् ।
केशिध्वजेन खाण्डिक्यः स्वराष्ट्रादवरोपितः ॥१०॥
पुरोधसा मन्त्रिभिश्च समवेतोऽल्पसाधनः ।
राज्यान्निराकृतः सोऽथ दुर्गारण्यचरोऽभवत् ॥११॥
इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्त्तुं मृत्युमविद्यया ॥१२॥
एकदा वर्त्तमानस्य योगे योगविदां वर ।
धर्म्मधेनुं जघानोग्रशार्द्दूलो विजने वने ॥१३॥
ततो राजा हतं ज्ञात्वा धेनुं व्याघ्रेण ऋत्विजः ।
प्रायश्चित्तं स पप्रच्छ किमत्रेति विधीयते ॥१४॥
ते चोचुर्न वयं विद्मः कशेरुः पृच्छ्यतामिति ।
कशेरुरपि तेनोक्तस्तथैव प्राह भार्गवम् ॥१५॥
शुनकं पृच्छ राजेन्द्र ! नाहं वेद्मि स वेत्स्यति ।
स गत्वा तमपृच्छच्च सोऽप्याह श्रृणु यन्मुने ॥१६॥
न कशेरुर्न चैवाहं न चान्यः साम्प्रतं भुवि ।
वेत्त्येक एव त्वच्छत्रुः खाण्डिक्यो यो जितस्त्वया ॥१७॥
स चाहं तं प्रयाम्येष प्रष्टुमात्मरिपुं मुने ।
प्राप्त एव मया यज्ञो यदि मां स हनिष्यति ॥१८॥
प्रायश्चित्तमशेषेण यदि पृष्टो वदिष्यति ।
ततश्चाविकलो यागो मुनिश्रेष्ठ ! भविष्यति ॥१९॥

पराशर उवाच

इत्युक्त्वा रथमारुह्य कृष्णाजिनधरो नृपः ।
वनं जगाम यत्रास्ते खाण्डिक्यः स महामतिः ॥२०॥
तमायान्तं समालोक्य खाण्डिक्यो रिपुमात्मनः ।
प्रोवाच क्रोधताम्राक्षः समारोपितकार्म्मुकः ॥२१॥

## खाण्डिक्य उवाच

कृष्णाजिनं त्वं कवचमावध्यास्मान्निहंस्यसि ।
कृष्णाजिनधरे वेत्सि न मयि प्रहरिष्यति ॥२२॥
मृगाणां वत पृष्ठेषु मूढ ! कृष्णाजिनं न किम् ।
येषां त्वया मया चोग्राः प्रहिताः शितसायकाः ॥२३॥
स त्वामहं हनिष्यामि न मे जीवन् विमोक्ष्यसे ।
आततायसि दुर्बुद्धे ! मम राष्ट्रहरो रिपुः ॥२४॥

## केशिध्वज उवाच

खाण्डिक्य ! संशयं प्रष्टुं भवन्तमहमागतः ।
न त्वां हन्तुं विचार्यैतत् कोपं वाणञ्च मुञ्च च ॥२५॥

## पराशर उवाच

ततः स मन्त्रिभिः सार्द्धमेकान्ते सपुरोहितः ।
मन्त्रयामास खाण्डिक्यः सर्वैरेव महामतिः ॥२६॥
तमूचुर्मन्त्रिणो वध्यो रिपुरेष वशं गतः ।
हते तु पृथिवी सर्वा तव वश्या भविष्यति ॥२७॥
खाण्डिक्यश्चाह तान् सर्वानितदेवं न संशयः ।
हते तु पृथिवी सर्वा मम वश्या भविष्यति ॥२८॥
परलोकजयस्तस्य पृथिवी सकला मम ।
न हन्मि चेल्लोकजयो मम तस्य वसुन्धरा ॥
नाहं मन्ये लोकजयादधिका स्याद् वसुन्धरा ॥२९॥
परलोकजयोऽनन्तः स्वल्पकालो महीजयः ।
तस्मादेनं न हिंसिष्ये यत् पृच्छति वदामि तत् ॥३०॥
ततस्तमभ्युपेत्याह खाण्डिक्यजनको रिपुम् ।
प्रष्टव्यं यत्त्वया सर्वं तत् पृच्छस्व वदाम्यहम् ॥३१॥
ततः सर्वं यथावृत्तं धर्मधेनुवधं द्विज ।
कथयित्वा स पप्रच्छ प्रायश्चित्तं हि तद्गतम् ॥३२॥
स चाचष्ट यथान्यायं द्विज ! केशिध्वजाय तत् ।

प्रायश्चित्तमशेषेण यद्वै तत्र विधीयते ॥३३॥
विदितार्थः स तेनैवं सोऽनुज्ञातो महात्मना ।
यागभूमिमुपाश्रित्य चक्रे सर्वाः क्रियाः कमात् ॥३४॥
क्रमेण विधिवद्यागं नीत्वा सोऽवभृथाप्लुतः ।
कृतकृत्यस्ततो भूत्वा चिन्तयामास पार्थिवः ॥३५॥
पूजिता ऋत्विजः सर्वे सदस्या मानिता मया ।
तथैवार्थिजनोऽप्यर्थैर्योजितोऽभिमतैर्यथा ॥३६॥
यथार्हमस्य लोकस्य मया सर्वं विचेष्टितम् ।
अनिष्पन्नक्रियं चेतस्तथापि मम किं यथा ॥३७॥
इति सञ्चिन्त्य यत्नेन सस्मार स महीपतिः ।
खाण्डिक्याय न दत्तेति मया वै गुरुदक्षिणा ॥३८॥
जगाम च ततो भूयो रथमारुह्य पार्थिवः ।
मैत्रेय ! दुर्गगहनं खाण्डिक्यो यत्र संस्थितः ॥३९॥
खाण्डिक्योऽपि तथायान्तं पुनदृष्ट्वा धृतायुधः ।
तस्थौ हन्तु कृतमतिस्तथाह स पुनर्नृपः ॥४०॥
भो नाहं तेऽपकाराय प्राप्तः खाण्डिक्य ! मा क्रुधः ।
गुरोर्निष्क्रयदानाय मामवेहि त्वमागतम् ॥४१॥
निष्पादितो मया यागः सम्यकूत्वदुपदेशतः ।
सोऽहं ते दातुमिच्छामि वृणुष्व गुरुदक्षिणाम् ॥४२॥
भूयः स मन्त्रिभिः सार्द्धं मन्त्रयामाय पार्थिवः ।
गुरुनिष्कृतिकामोऽत्र किमयं प्रार्थ्यतामिति ॥४३॥
तमूचुर्मन्त्रिणो राज्यमशेषं प्रार्थ्यतामिति ।
कृतिभिः प्रार्थ्यते राज्यमनायासित सैनिकैः ॥४४॥
प्रहस्य तानाह नृपः स खाण्डिक्यो महामतिः ।
स्वल्पकालं महीराज्यं मादृशैः प्रार्थ्यते कथम् ॥४५॥
एवमेतद्भवन्तोऽत्र ह्यर्थसाधनमन्त्रिणः ।
परमार्थः कथं कोऽत्र यूयं नात्र विचक्षणाः ॥४६॥
इत्युक्त्वा समुपेत्यैनं स तु केशिध्वजं नृपम् ।
उवाच किमवश्य त्वं ददासि गुरुदक्षिणाम् ॥४७॥
बाढमित्येव तेनोक्तः खाण्डिक्यस्तमथाब्रवीत् ।
भवान्ध्यात्मविज्ञानपरमार्थविचक्षणः ॥४८॥
यदि चेद्दीयते मह्य भवता गुरुनिष्क्रयः ।

तत् क्लेशप्रशमायालं यत् कर्म्म तदुदीरय ॥४९॥

**इति श्रीविष्णुपुराणे षष्ठांशे षष्ठोऽध्यायः ॥६॥**
**आदितः श्लोकानां समष्टयङ्काः-५,३१२+४९=५,३६१**





## ॥ अथ सप्तमोऽध्यायः ॥
## (ब्रह्मयोगनिर्णयः)

न प्रार्थितं त्वया कस्मान्मम राज्यमकण्टकम् ।
राज्यलाभाद्विना नान्यत् क्षत्रियाणामतिप्रियम् ॥१॥

### खाण्डिक्य उवाच

केशिध्वज निबोध त्वं मया न प्रार्थितं यतः ।
राज्यमेतदशेषं ते यत्र गृध्यन्त्यपन्डिताः ॥२॥
क्षत्रियाणामयं धर्म्मो यत् प्रजापरिपालनम् ।
वधश्च धर्मयुद्धेन स्वराज्यपरिपन्थिनाम् ॥३॥
यत्राशक्तस्य मेदोषो नैवास्त्यपह्नते त्वया ।
बन्धायैव भवत्येषा अविद्याप्यक्रमोज्झिता ॥४॥
जन्मोपभोगलिप्सार्थमियं राज्यस्पृहा मम ।
अन्येषां दोषजा नैषा धर्ममेवानुरुध्यते ॥५॥
न याञ्चा क्षत्रबन्धूनां धर्म्मो ह्येतत् सतां मतम् ।
अतो न याचितं राज्यमविद्यान्तर्गतं तव ॥६॥
राज्ये गृध्यन्त्यविद्वांसो ममत्वाहतचेतसः ।
अहम्मानमहापानमदमत्ता न मादृशः ॥७॥

### पराशर उवाच

प्रहृष्टः साध्विति प्राह ततः केशिध्वजो नृपः ।
खाण्डिक्यजनकं प्रीत्या श्रूयतां वचनं मम ॥८॥
अहन्त्वविद्यामृत्युञ्च तर्त्तुकामः करोमि वै ।
राज्ये यागांश्च विविधान् भोगैः पुण्यक्षयं तथा ॥९॥
तदिदं ते मनो दिष्ट्या विवेकैश्वर्यतां गतम् ।
श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ॥१०॥
अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।
अविद्यातरुसम्भूतेर्बीजमेतद् द्विधा स्थितम् ॥११॥
पञ्चभूतात्मके देहे देही मोहतमोवृतः ।

अहमेतदितीत्युच्चैः कुरुते कुमतिर्मतिम् ॥१२॥
आकाशवाय्वग्निजलपृथिवीभ्यःपृथक् स्थिते ।
आत्मन्यात्ममयं भावं कः करोति कलेवरे ॥१३॥
कलेवरोपभोग्यं हि गृहक्षेत्रादिकञ्च कः ।
अदेहे ह्यात्मनि प्राज्ञो ममेदमिति मन्यते ॥१४॥
इत्थञ्च पुत्र-पौत्रेषु तद्देहोत्पादितेषु कः ।
करोति पण्डितः स्वाम्यमनात्मनि कलेवरे ॥१५॥
सर्वं देहोपभोगाय कुरुते कर्म्म मानवः ।
देहश्चान्यो यदा पुंसस्तदा बन्धाय तत्परम् ॥१६॥
मृन्मयञ्च यथा गेहं लिप्यते च मृदम्भसा ।
पार्थिवोऽयं तथा देहो मृदन्नालेपनस्थितिः ॥१७॥
पञ्चभूतात्मकैर्भोगैः पञ्चभूतात्मकं वपुः ।
आप्यायते यदि ततः पुंसो गर्वोऽत्र किं ततः ॥१८॥
अनेकजन्मसाहस्त्रीं संसारपदवीं व्रजन् ।
मोहश्रमं प्रयातोऽसौ वासनारेणुगुण्ठितः ॥१९॥
प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा ।
तदा संसारपान्थस्य याति मोहश्रमः शमम् ॥२०॥
मोहश्रमे शमं याते स्वस्थान्तः करणः पुमान् ।
अनन्यातिशयाबाधं परं निर्वाणमृच्छति ॥२१॥
निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ।
दुःखाज्ञानमला धर्म्माः प्रकृतेस्ते तु नात्मनः ॥२२॥
जलस्य नाग्निसंसर्गः स्थालीसङ्गात्तथापि हि ।
शब्दोद्रेकादिकान् धर्म्मांस्तत् करोति यथा मुने ॥२३॥
तथात्मा प्रकृतेः सङ्गादहम्मानादिदूषितः ।
भजते प्राकृतान् धर्म्मानभ्यस्तेभ्यो हि सोऽव्ययः ॥२४॥
तदेतत् कथितं बीजमविद्यायास्तव प्रभो ।
क्लेशानाञ्च क्षयकरं योगादन्यत्र विद्यते ॥२५॥

खाण्डिक्य उवाच

तन्तु ब्रूहि महाभाग ! योगं योगविदुत्तम ।
विज्ञातयोगशास्त्रार्थस्त्वमस्यां निमिसन्ततौ ॥२६॥

## केशिध्वज उवाच

योगस्वरूपं खाण्डिक्य ! श्रूयतां गदतो मम ।
यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ॥२७॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासङ्गि मुक्त्यौ निर्विषयं तथा ॥२८॥
विषयेभ्यः समाहृत्य विज्ञानात्मा मनो मुनिः ।
चिन्तयेन्मूक्तये तेन ब्रह्मभूतं परमेश्वरम् ॥२९॥
आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुनिम् ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥३०॥
आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।
तस्य ब्रह्मणि संयोगो योग इत्यभिधीयते ॥३१॥
एवमत्यन्तवैशिष्टययुक्त कर्मोपलक्षणः ।
यस्य योगस्य वै योगी मुमुक्षुरभिधीयते ॥३२॥
योगयुक् प्रथमं योगी युञ्जानो ह्यभिधीयते ।
विनिष्पन्नसमाधिस्तु परं ब्रह्मोपलब्धिमान् ॥३३॥
यद्यन्तरायदोषेण दूष्यते नास्य मानसम् ।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते ॥३४॥
विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्म्मचयोऽचिरात् ॥३५॥
ब्रह्मचर्यमहिंसा च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां स्वमनो नयन् ॥३६॥
स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान् ।
कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ॥३७॥
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः ।
विशिष्टफलदाः काम्या निष्कामाणां विमुक्तिदाः ॥३८॥
एकं भद्रासनादीनां समास्थाय गुणैर्युतः ।
यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः ॥३९॥
प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत् ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ॥४०॥
परस्परेणाभिभवं प्रणापानौ यदानिलौ ।
कुरुतः सद्विधानेन तृतीयः संयमात्तयोः ॥४१॥

तस्य चालम्बनवतः स्थूलं रूपं द्विजोत्तम ।
आलम्बनमनन्तस्य योगिनोऽभ्यसतः स्मृतम् ॥४२॥
शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् ।
कुर्याच्चित्तानुचारीणि प्रत्याहारपरायणः ॥४३॥
वश्यता परमा तेन जायतेऽतिचलात्मनाम् ।
इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः ॥४४॥
प्रामायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतैस्ततः कुर्यात् स्थिरं चेतः शुभाश्रये ॥४५॥

खाण्डिक्य उवाच

कथ्यतां मे महाभाग ! चेतसो यः शुभाश्रयः ।
यदाधारमशेषं तद्धन्ति दोषसमुद्भवम् ॥४६॥

केशिध्वज उवाच

आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः ।
भूप मूर्तममूर्तञ्च परञ्चापरमेव च ॥४७॥
त्रिविधा भावना भूप ! विश्वमेतन्निबोध मे ।
ब्रह्माख्या कर्म्मसंज्ञा च तथा चैवोभयात्मिका ॥४८॥
ब्रह्मभावात्मिका ह्येका कर्मभावात्मिका परा ।
उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥४९॥
सनन्दनादयो ब्रह्मन् ब्रह्मभावनया युताः ।
कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः ॥५०॥
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ।
बोधाधिकारयुक्तेषु विद्यते भावभावना ॥५१॥
अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु ।
विश्वमेतत् परं चान्यद् भेदभिन्नदृशां नृप ॥५२॥
प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तजज्ञानं ब्रह्मसंज्ञितम् ॥५३॥
तच्च विष्णोः परं रूपमरूपस्याजमक्षरम् ।
विश्वरूपाच्च त्रैरूप्यलक्षणं परमात्मनः ॥५४॥

न तद्योगयुजा शक्यं नृप ! चिन्तयितुं यतः ।
तमः स्थूलं हरे रूपं चिन्तियेद्विश्वगोचरम् ॥५५॥
हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः ।
मारुतो वसवो रुद्रा भास्करास्तारका ग्रहाः ॥५६॥
गन्धर्वयक्षा दैत्याद्याः सकला देवयोनयः ।
मनुष्याः पशवः शैलाः समुद्राः सरितो द्रुमाः ॥५७॥
भूप ! भूतान्यशेषाणि भूतानां ये च हेतवः ।
प्रधानादि विशेषान्तं चेतनाचेतनात्मकम् ॥५८॥
एकपादं द्विपादञ्च बहुपादमपादकम् ।
मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम् ॥५९॥
एतत् सर्वमिदं विश्वं जगदेतच्चराचरम् ।
परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम् ॥६०॥
विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥६१॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप! सर्वगा ।
ससारतापनखिलानवाप्रोत्यनुसन्ततान् ॥६२॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल ! तारतम्येन लक्ष्यते ॥६३॥
अप्राणवत्सु स्वल्पाल्पा स्थावरेषु ततोऽधिका ।
सरीसृपेषु तेभ्योऽन्याप्यतिशक्त्या पतत्त्रिषु ॥६४॥
पतत्त्रिभ्यो मृगास्तेब्यः स्वशक्त्या पशवोऽधिका ।
पशुभ्यो मनुजाश्चातिशक्त्या पुंसः प्रभाविताः ॥६५॥
तेभ्योऽपि नागगन्धर्वयक्षाद्या देवता नृप ।
शक्रः समस्तदेवेभ्यस्ततश्चाति प्रजापतिः ॥६६॥
हिरणयगर्भोऽति ततः पुंसः शक्त्युपलक्षितः ।
एतान्यशेषरूपस्य तस्य रूपाणि पार्थिव ॥६७॥
यतस्तच्छक्तियोगेन व्याप्तानि नभसा यथा ।
द्रितीयं विष्णुसंज्ञस्य योगिध्येयं महामते ॥६८॥
अमूर्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधैः ।
समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ॥६९॥
तद्विश्वरूपरूपं वै रूपमन्यद्धरैर्महत् ।
समस्तशक्तिरूपाणि तत् करोति जनेश्वर ॥७०॥

देवतिर्य्यङ्मनुष्यादिचेष्टावन्ति स्वलीलया ।
जगतामुपकाराय न सा कर्मनिमित्तजा ॥
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥७१॥
तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप ।
चिन्त्यमात्मविसुद्ध्यर्थं सर्वकिल्विषनाशनम् ॥७२॥
यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्विषम् ॥७३॥
तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः ।
कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ॥७४॥
शुभाश्रयः स चित्तस्य सर्वगस्य तथात्मनः ।
त्रिभावभावनातीतो मुक्तये योगिनां नृप ॥७५॥
अन्ये च पुरुषव्याघ्र ! चेतसो ये व्यपाश्रयाः ।
अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ॥७६॥
मूर्त्तं भगवतो रूपं सर्वापाश्रयनिःस्पृहम् ।
एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते ॥७७॥
यच्च मूर्त्तं हरे रूपं यादृक् चिन्त्यं नराधिपः ।
तच्छ्रूतामनाधारे धारणा नोपपद्यते ॥७८॥
प्रसन्नचारुवदनं पद्मपत्रोपमेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्वलम् ॥७९॥
समकर्णान्तविन्यस्यचारुकर्णविभूषणम् ।
कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥८०॥
बलीत्रिभङ्गिना मग्नाभिना चोदरेण वै ।
प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् ॥८१॥
समस्थितोरुजङ्घञ्च सुस्थिराङ्घ्रिवराम्बुजम् ।
चिन्तयेद् ब्रह्म मूर्त्तस्य पीतनिर्मलवाससम् ॥८२॥
किरीटचारुकेयूरकटकादिविभूषितम् ।
शार्ङ्गशङ्खगदाखड्गचक्राक्षबलयान्वितम् ॥८३॥
चिन्तयेत् तन्मना योगी समाधायात्ममानसम् ।
तावद् यावद् दृढीभूता तत्रैव नृप ! धारणा ॥८४॥
व्रजतस्तिष्ठतोऽन्यद् वा स्वेच्छया कर्म कुर्वतः ।
नापयाति यदा चित्तात् सिद्धां मन्येत तां तदा ॥८५॥
ततः शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः ।

चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥८६॥
सा यदा धारणा तद्वदवस्थानवती ततः ।
किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥८७॥
तदेकावयवं देवं चेतसा हि पुनर्बुधः ।
कुर्यात्ततोऽवयविनि प्रणिधानपरो भवेत् ॥८८॥
तद्रूपप्रत्ययायैका सन्ततिश्चान्यनिः स्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ॥८९॥
तस्यैव कल्पनाहीनं स्वरूपग्रहणां हि यत् ।
मनसा ध्याननिष्पाद्यः समाधिः सोऽभिधीयते ॥९०॥
विज्ञानं प्रापकं प्राप्येपरे ब्रह्मणि पार्थिव ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥९१॥
क्षेत्रज्ञः कारणं ज्ञानं करणां तेन तस्य तत् ।
निष्पाद्यं मुक्तिकार्यं वै कृतकृत्यो निवर्त्तते ॥९२॥
तद्भावभावनापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥९३॥
विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥९४॥
इत्युक्तस्ते महायोगः खाण्डिक्य ! परिपृच्छतः ।
संक्षेपविस्तराभ्यान्तु किमन्यत् क्रियतां तव ॥९५॥

खाण्डिक्य उवाच

कथिते योगसद्भावे सर्वमेव कृतं मम ।
तवोपदेशेनाशेषो नष्टश्चित्तमलो यतः ॥९६॥
ममेति यन्मया प्रोक्तमसदेतन्न चान्यथा ।
नरेन्द्र ! गदितुं शक्यमपि वियवेदिभिः ॥९७॥
अहं ममेत्यविद्येयं व्यवहारस्तथानयोः ।
परमार्थस्त्वसंलाप्यो गोचरो वचसां न सः ॥९८॥
तद्गच्छ श्रेयसे सर्वं ममैतद्भवता कृतम् ।
यद्विमुक्तिप्रदो योगः प्रोक्तः केशिध्वजाव्ययः ॥९९॥

पराशर उवाच

यथार्हपूजया तेन खाण्डिक्येन स पूजितः ।
आजगाम पुरं ब्रह्मस्ततः केशिध्वजो नृपः ॥१००॥
खाण्डिक्योऽपि सुतं कृत्वा राजानं योगसिद्धये ।
वनं जगाम गोविन्दे विनिवेशितमानसः ॥१०१॥
तत्रैकान्तरतिर्भूत्वा यमादिगुणशोधितः ।
विष्ण्वाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयम् ॥१०२॥
केशिध्वजोऽपि मुक्त्यर्थं स्वकर्मक्षपणोन्मुखः ।
बुभुजे विषयान् कर्म चक्रे चानभिसंहितम् ॥१०३॥
स कल्पनोपभोगैश्च क्षीणपापोऽमलस्तथा ।
अवाप सिद्धिमत्यन्तं तापक्षयफलां द्विज ॥१०४॥

इति श्रीविष्णुराणे षष्ठांशे सप्तमोऽध्यायः ॥७॥



आदितः श्लोकानां समष्ट्यङ्काः-५,३६१+१०४=५,४६५





## ॥ अथाष्टमोऽध्यायः ॥
## (शिष्यपरंपराकथनम्, विष्णुपुराणस्य माहात्म्यमुपसंहारश्च)

### पराशर उवाच

इत्येष कथितः सम्यक् तृतीयः प्रतिसञ्चरः ।
आत्यन्तिको विमुक्तिर्या लयो ब्रह्मणि शाश्वते ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव भवतो गदितं मया ॥२॥
पुराणां वैष्णवञ्चैतत् सर्वकिल्विषनाशनम् ।
विशिष्टं सर्वशास्त्रेभ्यः पुरुषार्थोपपादकम् ॥३॥
तुभ्यं यथावन्मैत्रेय ! प्रोक्तं शुश्रूषवेऽव्ययम् ।
यदन्यदपि वक्तव्यं तत् पृच्छाद्य वदामि ते ॥४॥

### मैत्रेय उवाच

भगवन् ! कथितं सर्वं यत् पृष्टोऽसि मया मुने ।
श्रुतञ्चैतन्मया भक्त्या नान्यत् प्रष्टव्यमस्ति ते ॥५॥
विच्छिन्नाः सर्वसन्देहा वैमल्यं मनसः कृतम् ।
त्वत्प्रसादान्मया ज्ञाता उत्पत्तिस्थितिसंयमाः ॥६॥
ज्ञातश्चतुर्विधो राशिः शक्तिश्च त्रिविधा गुरो ।
विज्ञाता सा च कात्स्न्र्येन विविधा भावभाना ॥७॥
त्वत्प्रसादान्मया ज्ञातं ज्ञेयमन्यैरलं द्विज ।
यथैतदखिलं विष्णोर्जगन्न व्यतिरिच्यते ॥८॥
कृतार्थोऽस्म्यपसन्देहस्त्वत्प्रसादान्महामुने ।
वर्णधर्मादयो धर्मा विदिता यदशेषतः ॥९॥
प्रवृत्तञ्च निवृत्तञ्च ज्ञातं कर्म मयाखिलम् ।
प्रसीद विप्रप्रवर ! नान्यत् प्रष्टव्यमस्ति मे ॥१०॥
यदस्य कथनायासैर्योजितोऽसि मया गुरो ।
तत् क्षम्यतां विशषोऽस्ति न सुतां पुत्रशिष्ययोः ॥११॥

### पराशर उवाच

एतत्ते यन्मयाख्यातं पुराणां वेदसम्मितम् ।
श्रुतेऽस्मिन् सर्वदोषोत्थपापराशिः प्रशाम्यति ॥१२॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं कृत्स्नं मयात्र तव कीर्त्तितम् ॥१३॥
अत्र देवास्तथा दैत्या गन्धर्वोरगराक्षसाः ।
यक्षा विद्याधराः सिद्धाः कथ्यन्तेऽप्सरसस्तथा ॥१४॥
मुनया भावितात्मानः कथ्यन्ते तपसान्विताः ।
चातुर्वर्ण्यं यथा पुसां विशिष्टचरिता नराः ॥१५॥
पुण्याः प्रदेशा मेदिन्याः पुण्या नद्योऽथ सागराः ।
पर्वताश्च महापुण्याश्चरितानि च धीमताम् ॥१६॥
वर्णधर्मादयो धर्मा वेदधर्माश्च कृत्स्नशः ।
येषां संश्रवणान् सद्यः सर्वपापैः प्रमुच्यते ॥१७॥
उत्पत्तिस्थितिनाशानां हेतुर्यो जगतोऽव्ययः ।
स सर्वभूतः सर्वात्मा कथ्यते भगवान् हरिः ॥१८॥
अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्वृकैरिव ॥१९॥
यन्नाम कीर्त्तितं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥२०॥
कलिकल्मषमत्युग्रं नरकार्त्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद् यत्रानुसंस्मृते ॥२१॥
हिरण्यगर्भदेवेन्द्ररुद्रादित्याश्विवायुभिः ।
किन्नरैर्वसुभिः साध्यैर्विश्वदेवादिभिः सुरैः ॥२२॥
यक्षरक्षोगणौः सिद्धैर्दैत्यगन्धर्वदानवैः ।
अप्सरोभिस्तथा तारानक्षत्रैः सकलैर्ग्रहैः ॥२३॥
सप्तर्षिभिस्तथा धिष्ण्यैर्धिष्ण्याधिपतिभिस्तथा ।
ब्राह्मणाद्यर्मनुष्यैश्च तथैव पशुभिर्मृगैः ॥२४॥
सरीसृपैर्विहङ्गैश्च प्रेताद्यैः समहीरुहैः ।
वनाद्रिसागरसरित्पातालैः सधरादिभिः ॥२५॥
शब्दादिभिश्च सहितं ब्रह्माण्डमखिलं द्विज ।
मेरोरिवाणुर्यस्यैतद् यन्मयञ्च द्विजोत्तम ॥२६॥
स सर्वः सर्ववित् सर्वस्वरूपो रुपवर्जितः ।
कीर्त्त्यते भगवान् विष्णुरत्र पापप्रणाशनः ॥२७॥

यदश्ववमेधायभृथे स्नातः प्राप्नोति वै फलम् ।
सकलं तदवाप्नोति श्रुत्वैतन्मुनिसत्तम ॥२८॥
प्रयागे पुष्करे चैव कुरुक्षेत्रे तथार्वुदे ।
कृतोपवासः प्राप्नोति तदस्य श्रवणान्नरः ॥२९॥
यदग्निहोत्रे सुहुते वर्षेणाप्नोति वै फलम् ।
सकलं समवाप्नोति तदस्य श्रवणात् सकृत् ॥३०॥
यज्यैष्ठशुक्लद्वादश्यां स्नात्वा वै नियतेन्द्रियः ।
मथुरायां हरिं दृष्ट्वा प्राप्नोति परमां गतिम् ॥३१॥
तदाप्नोति फलं सम्यक् समाधानेन कीर्त्तनात् ।
पुराणस्यास्य विप्रर्षे ! केशवार्पितमानसः ॥३२॥
यमुनासलिले स्नातः पुरुषो मुनिसत्तम ।
ज्येष्ठामूलेऽमले पक्षे द्वादश्यामुपवासकृत् ॥३४॥
(तमभ्यर्च्याच्युतं सम्यङ् मथुरायां समाहितः ।
अश्वमेधस्य यस्य प्राप्नोत्यविकलं फलम् ॥)
आलोक्यर्द्धिमथान्येषामुन्नीतानां स्ववंशजैः ।
एतत् किलोचुरन्येषां पितरः सपितामहाः ॥३५॥
कश्चिदस्मत्कुले जातः कालिन्दीसलिलाप्लुतः ।
अर्च्चयिष्यति गोविन्दं मथरायामुपोषितः ॥३६॥
ज्येष्ठामूले सिते पक्षे येनैवं वयमप्युत ।
परामृद्धिमवाप्स्यामस्तारिताः स्वकुलोद्भवैः ॥३७॥
ज्येष्ठामूले सिते पक्षे समभ्यर्च्य जनार्द्दनम् ।
धन्यानां कुलजः पिण्डान् यमुनायां प्रदास्यति ॥३८॥
तस्मिन् काले समभ्यर्च्य तत्र कृष्णं समाहितः ।
दत्त्वा पिण्डान् पितृभ्यश्च यमुनासलिलाप्लुतः ॥३९॥
यदाप्नोति नरः पुण्य तारयन् स पितामहान् ।
श्रुत्वाध्यायं तदाप्नोति पुराणस्यास्य भक्तिमान् ॥४०॥
एतत् संसारभीरूणां परित्राणामनुत्तमम् ।
दुःस्वप्ननाशनं नृणां सर्वदुष्टनिवर्हणम् ॥४१॥
इदमार्षं पुरा प्राह ऋभवे कमलोद्भवः ।
ऋभुः प्रियव्रतायाह स च भागुरयेऽब्रवीत् ॥४२॥
भागुरिः स्तवमित्राय दधीचाय स चोक्तवान् ।
स वै सारस्वते प्रादाद् भृगुः सारस्वतादपि ॥४३॥

भृगुणा पुरुकुत्साय नर्मदायै स चोक्तवान् ।
नर्मदा धृतराष्ट्राय नागाय पूरणाय च ॥४४॥
ताभ्याञ्च नागराजाय प्रोक्तं वासुकये द्विज ।
वासुकिः प्राह वत्साय वत्सश्चाश्वतराय वै ॥४५॥
कम्बलाय च तेनोक्तमेलापत्राय तेन च ।
पातालं समनुप्राप्तस्ततो वेदशिरा मुनिः ॥४६॥
प्राप्तवानेतदखिलं स वै प्रमतये ददौ ।
दत्तं प्रमतिना चैव जातूकर्णाय धीमते ॥४७॥
जातूकर्णेन चैवोक्तमन्येषां पुण्यशालिनाम् ।
वशिष्ठवरदानेन ममाप्येतत् स्मृतिं गतम् ॥४८॥
मयापि तुभ्यं मैत्रेय ! यथावत् कथितं त्विदम् ।
त्वमप्येतच्छमीकाय कलेरन्ते गदिष्यसि ॥४९॥
इत्येतत् परमं गुह्यं कलिकल्मषनाशनम् ।
यः श्रृणोति नरः पापैः स सर्वैर्द्विज ! मुच्यते ॥५०॥
पितृपक्षमनुष्येभ्यः समस्तामरसंस्तुतिः ।
कृता तेन भवेदेतद् यः श्रृणोति दिने दिने ॥५१॥
कपिलादानजनितं पुणयमत्यन्तदुर्लभम् ।
श्रुत्वैतस्य दशाध्यायानवाप्नोति न संशयः ॥५२॥
यस्त्वेतत् सकलं श्रृणोति पुरुषः कृत्वा मनस्यच्युतं
सर्वं सर्वमयं समस्तजगतामाधारमात्माश्रयम् ।
ज्ञानं यमनन्तमाद्यरहितं सर्वामराणां हितं
स प्राप्नोति न संशयोऽस्त्यविकलं यद्वाजिमेधे फलम् ॥५३॥
यत्रादौ भगवांश्चराचरगुरुर्मध्ये तथान्ते च सः
ब्रह्मानमयोऽच्युतोऽखिलजगन्मध्यान्तसर्गप्रभुः ।
तच्छृण्वन् पुरुषः पवित्रपरमं भक्त्या पठन् धारयन्,
प्राप्नोत्यस्ति न तत् समस्तभुवनेष्वेकान्तसिद्धिर्हरिः ॥५४॥
यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने,
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुसां ददात्यव्ययः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥५५॥
यज्ञैर्यज्ञविदो यजन्ति सततं यज्ञेश्वरं कर्मिणो,
यं यं ब्रह्ममयं परापरमायं ध्यायन्ति च ज्ञानिनः ।

यञ्च प्राप्य न जायते न म्रियते नो वर्द्धते हीयते,
नैवासन्न च सद्भवत्यति ततः किं वा हरेः श्रूयताम् ॥५६॥
कव्यं यः पितृरूपधृग् विधिहुतं हव्यञ्च भुङ्क्ते
प्रभुर्देवत्वे भगवाननादिनिधनः स्वाहास्वधासंज्ञितम् ।
यस्मिन् ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनाम्,
निष्ठायै प्रभवन्ति हन्ति कलुषं श्रोत्रं स यातो हरिः ॥५७॥
नान्तोऽस्ति यस्य न च यस्य समुद्भवोऽस्ति, वृद्धिर्न यस्य परिणमविवर्जितस्य ।
नापक्षयञ्च समुपैत्यविकल्पवस्तु यस्तं नतोऽस्मि पुरुषोत्तममाद्यमीशम् ॥५८॥
तस्यैव योऽनुगुणभुग् बहुधैक एव, शुद्धोऽप्यशुद्ध इव मूर्त्तिविभागभेदैः ।
ज्ञानान्वितः सकलसत्त्वविभूतिकर्त्ता, तस्मै नतोऽस्मि पुरुषाय सदाव्ययाय ॥५९॥
ज्ञानप्रवृत्तिनियमैक्यमयाय पुंसो भोगप्रदानपटवे त्रिगुणात्मकाय ।
अव्याकृताय भवभावनकारणाय वन्दे स्वरूपमभवाय सदाजराय ॥६०॥
व्योमानिलाग्निजलभूरचनामयाय शब्दादिभोगविषयोपनयक्षमाय ।
पुसः समस्तकरणैरुपकारकाय व्यक्ताय सूक्ष्मविमलाय सदा नतोऽस्मि ॥६१॥
इति विविधमजस्य यस्य रूपं प्रकृतिपरात्ममयं सनातनस्य ।
प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां स सिद्धिम् ॥६२॥

इति श्रीविष्णुपुराणे षष्ठांशे अष्टमोऽध्यायः ॥८॥

आदितः श्लोकानां समष्ट्यङ्काः-५,४६५+६२=५,५२७

॥ षष्ठांश सम्पूर्णः ॥

अध्यायानामादितः समष्ट्यङ्काः-११८+८=१२६

॥ समाप्तमिदं श्रीविष्णुपुराणम् ॥